# PARAMARTHA PRAKASIKA

## [A CRITICISM ON ADWAITĀMŌDA]

BY

TARKARNAVA, PANDITARATNA

**T. Viraraghavacharya Siromani**

Printed at

THE SRINIVASA PRESS, TIRUVADI



1940

Price.] [2—0—0

॥ श्रीः ॥

# परमार्थप्रकाशिका ॥

[ अद्वैतामोदग्रन्थपरिशीलनरूपा ]



श्री-परमहंसपरिव्राजक जगद्विख्यात-
श्री-रङ्गरामानुजयतीन्द्रमहादेशिक-
(श्री-कोळियालं - स्वामिवर)
चरणारविन्दवरिवस्याऽधिगतवेदान्तरहस्यार्थेन
तर्कार्णवेन, पण्डितरत्नेन, शिरोमणिना
(उत्तमूर्) '
ति. वीरराघवाचार्येण
विरचिता



श्री-पञ्चनदस्थ-श्रीनिवास-मुद्रणालये
मुद्रिता ।







1940

मूल्यम् ] [ 2—0—0

# विशेषविषयसूची ॥



# अत्रोपात्ताः ग्रन्थाः ।



उपनिषद ।
शाङ्करमुपनिषद्भाष्यम्, सूत्रभाष्यम् ।
भामती कल्पतरुपरिमलग्रन्थाः
वेदान्तपरिभाषा = अद्वैतसिद्धि ।
पाणिनिसूत्र भाष्य कैयटशेखरग्र था ।
गीता विष्णुपुराणादि ।
भट्टकुमारिलवार्तिकम, न्यायसुधा, न्यायरत्नमाला न्यायकुसुमा ञ्जलि, वैशेषिकदर्शनम् न्यायदर्शनम् श्रीभाष्यादिनानाविशिष्टाद्वैतग्रन्थाश्च ।

॥ श्रीः ॥

# उपोद्घातः ।

—❖—

'कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् ॥'

ईषदप्यवान्तरक्षोभमविधाय सौहार्दमाश्रित्यैकरस्येन लोकयात्रां निर्वोढुं सर्वतो बद्धपरिकरा एव सन्तः प्राज्ञमणयः, 'विविधग्रन्थविमर्शपराणां तत्त्वबुभुत्सूनां तीक्ष्णबुद्धितारतम्यबलेन प्रतिभान्ति उच्चावचाः सिद्धान्तार्थभेदाः नैव प्रकटनं नार्हन्ति । तावता विचारकौशलं विशिष्टज्ञानं च लिप्सूनां नाना वृथाऽभिनिवेशमात्सर्यादिदुर्गुणदूरस्थितानामुदारहृदां वैमनस्यस्य न मात्रयाऽप्यवकाशः । अतो न गृहीतमात्रे विश्रममाकलय्य तूष्णीमेव स्थित्वा तत्त्वमरणौ जडीभवितव्यम्' इति दृढं निश्चिन्वानास्तत्र तत्र तत्त्वानुसन्धित्सन-मर्थं मन्वन्ति प्रकाशयन्ति च । अत —

'कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम् ।
नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥'

इति निर्विण्णस्य महर्षेर्मनोरथपूर्तये प्रवृत्ताः, सत्यप्यल्पभेदे वेदवेदान्तपुराणेतिहासप्रसिद्धसमीचीनसर्वावधिसिद्धान्तप्रवर्तनेन सर्वश्रेयसे भगवतो विष्णोः प्रीतये च भविष्यतीत्याशयेन सर्वदा कृतप्रयत्नास्तत्रभवन्तो मुम्बई नगरविराजमानाः श्रीकृष्णचरणारविन्दप्रवणः शुद्धाद्वैतसम्प्रदायप्रवर्तनाचार्य जगद्गुरुश्री-१००८ वल्लभाचार्यसिद्धान्तसिंहासनाधीश्वर विश्वविख्यात श्री १००८ श्रीगोकुलनाथाचार्यमहाराजमहानन्ददायिनो विद्वदग्रेसराः वदान्यमूर्धन्याः सर्ववैष्णवसिद्धान्तसंरक्षणदीक्षिताः श्री १००८ गोस्वामिदीक्षिताचार्यमहोदयाः

यात्राप्रसङ्गेन कदाचित् काञ्चीमलंकृतवन्तः, तदात्वे भगवतो देवाधिराजस्य सेवासु सहजप्रवृत्तेनाऽऽस्थाविशेषेण कञ्चित्कालं तत्र विराजितवतां संप्रति श्रीशैलसन्निकृष्टं श्रीशुकपुरं (तिरुच्चानूर्) परिष्कुर्वतां सर्वशास्त्रविदां सदाचार-वैराग्यवारिधीनां विशिष्टाद्वैतस्थापनधुरन्धराणां विचारकुशलविद्वन्मणिनित्याभिनन्द्यमाननिरवद्यनैकविधसिद्धान्तग्रन्थनिर्माणसमासादितनिर्मलयशसां अत्रभवतामस्मदाचार्याणां 'श्रीकोळियालं स्वामिन्'इति प्रसिद्धानां परमहंसपरिव्राजकाचार्याणां श्रीरङ्गरामानुजमहादेशिकानां समागमसंलापलाभसंप्रीतमानसाः, साक्षात् ग्रन्थमुखेन चैषां वैदुष्यातिशयं विचारधोरणीं चाभिलक्ष्य पश्चात् स्वस्थानात् कांश्चन ग्रन्थान् संप्रेष्य स्वसौहार्दं समुचितमाविरकार्षुः ।

तत्र आनन्दाश्रममुद्रितः श्रीमदभ्यङ्करोपाह्ववासुदेवशास्त्रिप्रणीतः अद्वैतामोदनामा कश्चिन्नवीनग्रन्थोऽपि तदा तेषामेषामाचार्याणां हस्तं गत आसीत् । तत्र च तैः श्रीवासुदेवशास्त्रिभिर्यथावच्छ्रीभाष्यार्थानवबोधेन किमपि कृतमालक्ष्य, एवमेतदद्वैतामोदगतान्येव —

'तदिह विशिष्टाद्वैतिद्वैतिप्रमुखा विचक्षणंमन्याः ।
अज्ञानेन हठाद्वा ब्रह्माद्वैतेऽपगोरणं चक्रुः । (पृ. १)

'अनुमानप्रामाण्यं चानस्ते बुद्ध्यारूढं न भवति' (पृ. ८७), 'कोऽयं रामानुजीयानां पन्थाः' (पृ. ७६), 'स्वकपोलकल्पनाजालमपास्तम्' (पृ. ९३) 'इति चेत् भ्रान्तोऽसि' (पृ. ८४) इत्येवंविधानि तत्र तत्रोच्छृङ्खलवाक्यानि विलोक्य, 'सर्ववैष्णवमतप्रवर्तनाचार्याणां माहात्म्यातिशयं मनागप्यविगणय्य तेष्वेवं अनितिहठकारं चारोपयन्त इमे शास्त्रिणः, यथावस्थितार्थयुक्त्युचितसम्पदो, सत्कृतेऽनौचित्यं स्वयमेवानुभवं लप्स्यन्ते' इति निश्चित्यास्मदाचार्यचरणा इमेऽद्वैतामोदशोधनमादावाविरकार्षुः ।

दिष्ट्या तस्मिन्नेव समये काश्यां गत श्रीपदारविन्दे प्रणिपत्य

स्थितोऽहं सर्वमिममुदन्तं सादरमशृणवम् । अथ सकुतूहलमद्वैतामोदग्रन्थमवलोकितवता मया श्रीस्वामिपादा इत्थं बद्धाञ्जलि प्रार्थ्यन्त, 'नावश्यमेतदल्पकार्यार्थेऽप्यत्र सन्निधौ प्राचीनसर्वसिद्धान्तग्रन्थप्रवचनपरिशीलनव्यापारेण प्रत्यूहितेन भाव्यम् । अस्ति चेदनुग्रहः, शक्यं दासमुखेनापीदमभिमतं शीघ्रमेव निर्वर्तयितुम्' इति । तदैव तथाऽस्त्विति वात्सल्यवशादनुगृहीतवतामेषामनुज्ञया स्वस्थलमागत्य परमार्थप्रकाशिकामिमां प्रणीय सविनयं श्रीपदारविन्दसन्निधौ समार्पिपम् । कृपया च सर्वं कटाक्षलक्ष्यं विधाय तत्र तत्र कर्तव्यान् परिष्कारान् प्रणयमधुरमुपदिष्टवतामेषामस्मदाचार्यवर्याणां श्रीमुखारविन्दनिष्यन्दिसुधासोदरसूक्तिखण्डैरत्र तत्र सङ्घटितं प्रबन्धमिमं परिशुद्धं विधाय प्रकटने प्रवृत्तिमधाम् ।

अथ गतेषु कतिपयेषु मासेषु अवश्यमेव स्थूललक्षाः सारासारविवेचनसामर्थ्यसमुद्रास्तत्रभवन्तः प्रस्तुताः श्रीदीक्षिताचार्यमहोदया अत्रोपकर्तुं प्रथममुपयुञ्जीरन्निति मनसिकृत्य तेषां सन्निधौ व्यजिज्ञपम् । तत्क्षण एव ते कृपया सज्जीभवन्तो मुद्रणोपयोगिनमर्थं यावदपेक्षं प्रदाय सम्प्रदायानां विष्णुपारम्यजगत्सत्यत्वस्थापकानां प्रचारविषयेऽनितरसाधारणीमात्मनः श्रद्धामुदारतां च सम्यगादर्शयन् । एवमुपकुर्वन्त इमे महाशयाः, अर्थव्ययं वृथैव विविधं विदधतां सारविवेचनसामर्थ्यविकलानां, सत्यप्यन्तरङ्गभावे स्वयमश्रद्धां वहतामास्तिकप्रमुखाणां तत्तदुज्जीवनहेतुमास्थाविशेषमज्ञैव जनयन्तीति सहृदयाः सङ्गिरन्ते ।

तदेवं प्रकाश्यमानेऽस्मिन् ग्रन्थे श्रीभाष्यजिज्ञासाधिकरणभाविनां मायाऽद्वैतिपूर्वपक्षपरिहारपद्धतीनां विशदीकरणाय अद्वैतामोदकथितार्थव्युदसनपूर्वकं प्रकाशितान् परमार्थान् आदरेण पश्यन्तः पण्डितमणयः सहृदया अद्वैतामोदकर्तारश्चाभिनिवेशमनुचितं परित्यज्य तत्त्वपक्षपातिन्या

बुद्ध्या सादरगौरवं श्रीभाष्यं सेवमानाः संप्रतिपन्नाः प्रतिपत्स्याश्च भविष्यन्तीति विश्वसिमि । अत्र तत्र तत्र कृतं प्राचीनाद्वैतग्रन्थकथितार्थपरिशीलनमपि प्राज्ञान् प्रीणयिष्यति । विषयशोधनमात्रे व्यापृतोऽहं कचिदन्योक्तानुवादेऽपि अद्वैतसिद्धान्तानुयायिनामुपरि न दूषणमप्यकरवम् । नापि तत्र मे जात्वपि प्रवृत्तिरिति सन्तो वेदितुमर्हन्ति ।

पुस्तकमिदं मुद्रणोपयुक्ततया विस्पष्टाक्षरैरनुविलिख्योपकृतवते मीमांसान्यायोभयशिरोमणयेऽस्मदन्तेवासिने परमहंसपरिव्राजकप्रस्तुतास्मदाचार्यसेवासमधिगतवेदान्तार्थाय अस्मत्क्रियाशालायामेव विमर्शकपदे वर्तमानाय को. श्रीशठकोपाचार्याय प्रेमगर्भा आशिषः प्रयुनज्मि । दवीयसः एतद्ग्रन्थमुद्रणस्थानात् मह्यं (proof) प्रूफ् पत्रप्रेषणे स्थितं विलम्बं प्रेक्ष्य प्रार्थिताः, तद्देश एव पच्चनद संस्कृतमहाविद्याशालायामध्यापकपदमलङ्कुर्वाणाः आबाल्यान्मम प्रियसुहृदः उभये—व्याकरणसाहित्यवेदान्तशिरोमणयः श्री. उ. वे. V. R श्रीनिवासताताचार्याः, न्यायवेदान्तशिरोमणयः श्री. उ. वे. T. E. वीरराघवाचार्याश्च—यत् प्रूफ्-शोधनभारं स्वयमूढ्वा मह्यमव्याजमुपकृतवन्तः, तत्र तेषु मदीयान् धन्यवादान् सविनयं सादरं च समर्पयामि ।

पुनरप्यस्मदाचार्यवर्येषु कारुणिकाग्रगण्येषु महनीयगुणगणेषु च श्रीगोस्वामिदीक्षिताचार्यमहाशयेषु कृतज्ञतामाविष्कुर्वन् ग्रन्थमिमं सर्वेऽपि सादरमवलोकयन्त्विति सप्रश्रयमभ्यर्थये ।

तिरुपति<br>6-12-39

इति ग्रन्थकर्ता<br>ति वीरराघवाचार्यः ।

॥ श्रीः ॥

श्रीगुरुभ्यो नमः ।

श्रीपद्मावतीसमेतश्रीनिवासपरब्रह्मणे नमः ।

श्रीमते हयवदनपरब्रह्मणे नमः ।

# परमार्थप्रकाशिका ॥



वेदोद्दिष्टविशिष्टतत्त्वविशदव्याख्या विधूतभ्रमाः
गम्भीराः श्रुतिचित्तनित्यमधुराः यत्सूक्तिगुम्भाः श्रुताः ।
श्रीमद्विष्णुपदाब्जभक्तिसरसास्वादी स जेजीयते
विश्वोज्जीवनतत्परश्च भगवद्रामानुजः संयमी ॥ १ ॥

यद्ग्रन्थाः श्रव्यहृद्यस्तुतिविविधरहस्योक्तिगाथादिभेदाः
प्रौढास्तर्कैरधृष्यैः श्रुतिनिकरपरिष्कारिणश्चाकृतार्थाः ।
देप्तुं कल्पान् विकल्प्य स्वयमलमखिलान् भाविनश्चापरेषां
तन्त्रस्वातन्त्र्यवित्तः श्रुतिशिखरगुरुः सोऽयमस्तु श्रियै नः ॥२॥

प्रज्ञा चर्या विरक्तिः परमतनिकृतिः स्वागमसिद्धान्तरक्षा
निर्दुष्टस्पष्टहृद्यव्यवहृतिरपि यं ह्यञ्जसोपाश्रयन्ति ।
सोऽयं सच्छिष्यसंहत्यभिलषितमहाकल्पशाखी मुनीन्द्रः
स्वान्ते श्रीरङ्गरामानुजगुरुरनघः सन्निधत्तां सदा नः ॥ ३ ॥

निखिलहितबोधनार्थाः मूकत्वं यान्ति यत्र हि श्रुतयः ।
मायावलम्बिकल्पितमद्वैतं तत् कथं हितं भवतु ॥ ४ ॥

तदिहाद्वैतनिरूपणमन्यानुपपत्तिमपि निराकुर्वन् ।
अद्वैतामोदकृतिप्रयत्नवैफल्यमेव दर्शयति ॥ ५ ॥

परमतदौस्स्थ्यं बहुधा प्राच्यैरार्यैर्न्यबन्धि निर्दोषम् ।
दृश्यग्रन्थानुगुणं यावदपेक्षं तु संक्षिपाम्यत्र ॥ ६ ॥

श्रियःपतिः निखिलहेयप्रत्यनीककल्याणगुणमहोदधिः अचिद्विशिष्टान् प्रळये जन्तूनवलोक्य परमकारुणिकः समुचितकरणकळेबरप्रदानसविधानव्यग्रः पूर्वं ब्रह्माणं सृष्ट्वा स्वात्मना सर्वदा संरक्ष्यमाणं सकलकृत्याकृत्यतत्त्वप्रदर्शकं अनादिनिधनं अनन्तभेदं वेदं यथावत्सार्थं अमुष्मा उपदिदेश । यथा श्रूयते—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति । स च चतुर्मुखो वेदशब्देभ्य एव सर्वं सृजन् स्वप्रजाभ्यो यथावच्छब्दमर्थं च प्रददौ । प्राचीनकर्मायत्तपरिमितशक्तिबुद्धयस्तु प्रजा कृत्स्नमधिगन्तुमक्षमाः यथायथमेकैकशास्त्रग्रहणधारणव्यग्रमनसः यावत् कृत्स्ना कर्मतत्त्वपरिस्थितिं न बुबुधिरे, तावन्महर्षयो महाकारुणिका अङ्गोपाङ्गविशेषविभजनेन, विमर्शविषयविशोधनेन, विशेषार्थव्युत्पादनेन चानुजगृहुः । एवमप्येकैकशास्त्रव्यापृतानां जनानां, आधुनिकानां आन्वीक्षिकीव्याकरणाद्येकैकशास्त्राध्यायिनां अन्यशास्त्रार्थेष्विव, शास्त्रान्तरेष्वश्रद्धा आत्मज्ञातातिरिक्तनास्तिताधीश्च क्रमेण जजृम्भे । ईदृशानां परस्परोपमर्दिनां प्राज्ञमूर्खाणां परिवादराशयो बहुळं प्रजासु नास्तिक्यमप्यनुपदमापादयामासुः । अथैतत्परिहाराय बद्धपरिकराः परमास्तिकाः सर्वमपि नास्तिक्यं सहसा परिहर्तुमपारयन्तः, केचिदेकं, अन्यदन्ये, इति अंशविभागेन तत्तद्विषयनास्तिक्यनिराकरणपरायणाः अभ्युपगमवादेन शास्त्रान्तरेषु नास्तिकतां अहृदयमेवानुमन्यमानाः प्रबन्धान् प्रबबन्धुः । ततो निरीश्वरमीमांसकनिष्कर्मवेदान्तिप्रभृतीनां पद्धतयः पदं दधिरे । एवं अखिलपरावितामल्पाल्पशिक्षणसुलभेनाशेषबोधनमध्यवसाय स्वयमंशे स्थितानां प्राचामाचार्याणां आशयमनवबुद्ध्यमाना हन्तेमे संसाराङ्गारेषु संपच्यन्त इति परमया कृपया स्वेन ब्रह्मणे सृष्ट्यादौ समुपदिष्टं सर्ववेदवास्तवार्थं संक्षिप्य ग्राहयितुं स एव भगवान् अशेषजगद्गुरुः भगवद्रामानुज-यतिराजरूपेणावततार ।

यदाहुः —

'काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता
सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी ।
यत्प्रज्ञापिततीर्थवर्धितधियामभ्यस्यतां यद्गुणान्
आसिन्धोरनिदंप्रदेशनियता कीर्तिः प्रजागर्ति नः ॥' इति ।

जयति जगदेकवन्द्यं श्रीभगवल्लक्ष्मणाभिधं परमम् ।
मायातमोपहं तत् सकलश्रुत्यर्थदर्शकं ज्योतिः ॥

एवं तावत् साधिष्ठोपोद्घातप्रदर्शनेन अद्वैतामोदग्रन्थकृतमुपोद्घातवर्णनं विसंष्ठुलमिति वेदितप्रायम् । अत्रेदमन्यत् किञ्चित् । यत्तावदुच्यते (पु. ३) शङ्करः शङ्कराचार्यरूपेणावतीर्णः प्रस्थानत्रये भाष्यं मायावादेन व्यधत्तेति । तत् तथैव काममास्ताम् । तावता किं सेत्स्यति ? सर्वतः शून्यवादिभिः सौगतसमयिभिराहितं लोकक्षोभमसहमानः शङ्करः तत्प्रतिक्षेपे प्रवर्तमानः प्रत्यर्थिनां क्रमेण वशीकरण एव परमं सौकर्यं पर्यालोचयन् तत्पथ एव स्थितः तदुक्तमेव सांवृतिकं जगत्सत्यत्वं स्वयमप्यातिष्ठमानः अधिष्ठानस्य ब्रह्मणः एकस्य पारमार्थिकत्वे स्थापिते तावतैव तस्यैव ब्रह्मणोऽनुग्रहेण सर्वसत्यत्वं क्रमेण संमंस्यत इति निश्चिन्वानः ब्रह्मस्थापनकृते मायावादं स्वयमप्यन्ववादीदित्येव तत्त्वम् । अन्यथा स्वद्भुतसार्वज्ञ्यशाली एव शङ्करः विश्वतोमुखानां ब्रह्मसूत्राणां स्वाभिमताखिलजगन्मिथ्यात्व-निर्गुणब्रह्मसत्यत्वस्थापनैदम्पर्येण समुचितप्रमाणवाक्यप्रदर्शनेन विलक्षणयोजनावर्णनेन च भाष्यं किमिति न व्यधत्त । प्रायेण भेदपरतया सगुणब्रह्मविषयतया च हि सूत्राणि व्याचख्यौ ; यस्मिन् खलु व्याख्याने समाद्रियमाणे, स्वाभिमताद्वैतस्थापनैदंपरं सूत्रं प्रदर्शयितुं प्रयतमानानां एतावत्सु सूत्रेषु निर्गुणब्रह्मनिरूपकस्यैकस्यापि दुर्भिक्षमेव लक्ष्यते । एवमल्पाक्षराणामनेकार्थसंभावनार्हाणां सूत्राणामेवान्यथाव्याख्याने स्वयमप्रगल्भमानेन यदि तन्मूलभूततया तद्वदेव भेदपराणामुपनिषदां विस्पष्टविस्तृतानां अभेदपरत्वमास्थी-

येत, तत् कियद्दूर समञ्जस भविष्यतीति सहृदया प्रमाणम् । अथ विश्वतोमुखानामपि सूत्राणामस्ति कस्मिंश्चिदेकस्मिन्नेवार्थे स्वारस्यम्, यत्र यथाशक्ति दृष्टिनिक्षेपात् अद्वैतप्रतित-त्सिद्धान्तस्य सूत्रे प्रदर्शनं तस्याशक्य सम्पृक्तमिति चेत् एव तर्हि परमर्षिबादरायणपरिग्रहविधुर मतमास्थाय किमिति श्रुतिसूत्रकदर्थनप्रयास परेषामिति । अतो बौद्धमतनिराकरणाय कथञ्चित् प्रथमतो मायावादपरिग्रहेऽपि अन्तर्निगूढ आत्मन आशयोऽन्यथा न कर्तव्य इत्यभिसन्धिनैव ब्रह्मसूत्राणि भेदपरतया प्राचीनवृत्तिपद्धतिं प्रायशोऽपरित्यजन् व्याचकारेति न मायावादस्य मायया कृतस्य प्रामाणिकपरिग्राह्यतेति । नन्वेवं हि स मायावादमास्थाय बहु जन व्यामोहयादिति प्राप्नोतीति चेत्, तत्र को दोषस्तस्य तमोगुणाधिष्ठानदेवतामूर्तस्य भगवत शङ्करस्येत्यलम् ॥

---

अनुपपन्नता चास्य मतस्य एतद्ग्रन्थखण्डनव्याजेन सक्षिप्यते ।
अथमत्र प्रथमखण्डसंग्रह —

*न ब्रह्म निर्विशेष स्यान्न सत्ता त्रिविधा भवेत् ।*
*न जीवत्वादि सोपाधि नानिर्वाच्य जगद्भवेत् ॥*

*नासत्याज्जायते सत्य न त्रिभ्योऽन्यत्र मानता ।*
*न साधनचतुष्कोक्तिर्न मुक्त्यै शास्त्रजैन्यधी ॥*

*इत्थमादाविहाद्वैतप्रक्रियोक्ता निरस्यते ।*
*अथ त्वनुपपत्तीना परीहारोऽस्य विस्तर ॥*

यत्तावदादौ (पु २)—'प्रत्यक्षादिप्रमाणेषु शब्द एव आदौ ब्रह्म बोधयितु प्रभवति । स च परमात्मरूपमेकमेव तत्त्वमिति स्पष्टमेवाभिधत्ते' इत्युपक्षिप्य तत्र, 'सदेव सोम्येदमग्र आसादेकमेवाद्वितीय'मिति

भ्युपादानम्—तत्रोच्यते । सत्यमिय श्रुतिरैक्य बोधयति ; पर तु न सजातीयविजातीयस्वगतभेदराहित निर्विशेष मवदिष्टम्, शाङ्करभाष्यविरुद्धत्वादसंभावितत्वाच्च । तथा ह्यत्रैव प्रस्ताने (छा. ६ २)तद्भाष्यम्—'एकमेवेति । स्वकार्यपतितमन्यन्नास्तीत्येकमवेत्युच्यते । अद्वितीयमिति । मृद्व्यतिरेकेण मृदो यथाऽन्यत् घटाद्याकारेण परिणमयितृ कुलालादि निमित्तकारण दृष्टम्, तथा सद्व्यतिरेकेण सत सहकारिकारण द्वितीय वस्त्वन्तर प्राप्त प्रतिषिध्यते अद्वितीयमिति । नास्य द्वितीय वस्त्वन्तर विद्यत इत्यद्वितीयम् ।' इति । अनेन च एकमेवत्यनेन स ऐकालिक भावि यद्बहु 'बहु स्याम्' इत्युपरितनवाक्यदर्शित तदभाव एव गम्यत इति, तथा अद्वितीयपद लोकदृष्टप्रक्रियया उपादानातिरिक्तनिमित्तकारणशङ्काया तद्व्यवच्छेदार्थमिति च स्पष्टम् । एव च बहुभवनरूपविकारराहित्यस्य निमित्तकारणभूतविजातीयराहित्यस्य च प्रतीतावपि सकलसजातीयविजातीयस्वगतभेदसामान्यराहित्यरूप निर्विशेषत्व न प्रतीयते । उपरि च 'असदेवेदमग्र आसीत् एकमेवाद्वितीय'मित्यस्य व्याख्यानावसरे 'कथ पुनरसत आसीदिति प्राक्कालसम्बन्ध एकमिति सख्यासम्बन्ध इत्यादि युज्यते' इत्याक्षिपतो भाष्यकृत सत्कारणवाक्ये इत्थमनुपपत्तिर्न भवितुमर्हतीत्याशयस्य स्फुटमवगम्यमानतया नात्यन्तनिर्विशेषत्वमत्र सख्याकालादिसम्बन्धशालिन सत सुवचम् ।

किं चास्मिन् कारणवाक्ये कारणत्वबोधनस्यावश्यकतया कारणत्वस्य कार्यान्यराहितप्राक्कालसम्बन्धरूपतया 'अग्र आसी'दिति तस्योक्ततया च कथमत्र निर्विशेषत्वप्रतीति । एव जगन्मिथ्यात्ववादिमते ब्रह्मण सप्रत्यपि निर्विशेषत्वेन अग्रे निर्विशेषमासीदित्यर्थवर्णनानौचित्यादपि नास्य निर्विशेषपरत्वम् । अपि च प्रळयकाले ब्रह्म किं निर्विशेष उत सविशेषम् ? नाद्य तथा सति अविद्यासम्बन्धस्याप्यभावेन सृष्टेरसंभवात् । नान्त्य, तदस्य

वाक्यस्य निर्विशेषपरत्वासम्भवात् ।

अपि च ब्रह्म-जीव-ईश्वर-जीवेश्वरभेद-अविद्या-ब्रह्माविद्यासम्बन्धानां षण्णां भवन्मते अनादित्वेन प्रळयेऽपि सद्भावावश्यकतया कथं तदा ब्रह्मणो निर्विशेषत्वं? तदा जीवाद्यनङ्गीकारे च सृष्टौ अपूर्वजीवोत्पत्त्या अकृताभ्यागम-कृतविप्रणाश-प्रमाणबाधादिकमापद्यते । पारमार्थिकविशेषराहित्यं वाक्यार्थ इति चेत्—तत् किं सृष्टौ पारमार्थिकविशेषवत्त्वं ब्रह्मणोऽस्ति, येन 'अग्रे' इति विशेषणमर्थवद्भविष्यति । तस्मात्सृष्टिकालिकविशेषराहित्यमात्रपरत्वादस्य वाक्यस्य न त्वदभिमतनिर्विशेषब्रह्मपरत्वम् । अतः प्रथमेनैवकारेणासद्व्यावृत्तिः, द्वितीयेनैवकारेण नैयायिकाभिमतानेकसद्रूपपरमाणुकारणकत्वव्यावृत्तिः, नामरूपविभागवत्त्वव्यावृत्तिश्च, अद्वितीयपदेन प्रसक्तनिमित्तकारणान्तरशङ्काव्यावृत्तिश्च क्रियत इति स्थितिः । भवतैव चानुपदं दृशित्वकारणत्वसूक्ष्मत्वव्यापित्वादयो विशेषाः वक्ष्यन्त इति कथं तद्ब्रह्म निर्विशेषमित्यलम् ॥

यच्च (पु ४.)—दृशिद्रष्टृदृश्यानां मध्ये उत्तरयोः दृशिनिरूपणाधीननिरूपणत्वात् कल्पितत्वमिति—तन्न । अन्यनिरूपणाधीननिरूपणत्वे कल्पितत्वमित्यत्र प्रमाणाभावात् । द्रष्टृत्वस्य दृशिकर्तृत्वरूपतया दृश्यत्वस्य तत्कर्मत्वरूपतया च तयोः द्रष्टृत्वदृश्यत्वरूपेण दृशिनिरूप्यत्वेऽपि स्वस्वासाधारणात्मत्वपृथिवीत्वादिरूपेण तन्निरूप्यत्वाभावाच्च । वस्तुतो दृशेरेव सकर्तृकतया सकर्मकतया चाश्रयविषयसाकांक्षत्वात् दृशित्वात्मकस्वासाधारणरूपेणैव तदुभयनिरूपणाधीननिरूपणत्वमिति तस्या एव त्वन्मते कल्पितत्वमापद्यते ।

ननु दृशिर्द्विविधा सोपाधिका निरुपाधिका चेति । तत्राद्या आश्रयविषयसापेक्षा कल्पितेति तत्रेदमिष्टमेवेति चेत्, केयं सोपाधिका दृशिर्नाम । किं चैतन्यमात्रम्; किं वा वृत्तिः; किं वा वृत्त्यवच्छिन्नचैतन्यम्; नाद्यः, त्वन्मते

तस्य निरुपाधिकत्वात्। न द्वितीय, तस्या जडत्वेन विषयप्रकाशकत्वाभावेन विषयसापेक्षत्वस्य दुर्वचत्वात्। न च तृतीय, विशिष्टस्य विशेष्यविशेषणानतिरिक्तत्वेन पूर्वोक्तदोषात्। न चास्मिन् कल्पे दृशे कल्पितत्वमपि सम्भवति। न हि चैतन्यमेव चैतन्ये कल्पितमिति वक्तु शक्यते। तस्मात् चैतन्यमेव वृत्तिरूपसहकारिसम्पन्न सत् विषयसापेक्ष भवतीति वक्तव्यम्। ईदृशमेवाभिप्राय मनसिकृत्यास्माभि इन्द्रियप्रसरणवेळ या धर्मभूतज्ञान सविषयकमित्यभिधीयते। तथा च एकमेव चैतन्य सहकारिसमवधाने सविषयक साश्रयश्च भवतीति क दर्शिनद ? क चैकस्य अन्यत्र कल्पितत्वम्।

अथोच्येत—दृशे सोपाधिकाया कल्पितत्वमित्यनेन दृशावुपाधिकल्पनमेव विवक्षितमिति—तन्न। आश्रयविषयरूपोपाधीना कल्पितत्वे प्रमाणाभावात्। दृशिनिरूपणाधीननिरूपणत्वस्य च प्रागेव विचारितत्वात्।

एतेन—आश्रयविषयात्मकचेतनाचेतनकल्पनाधिष्ठानत्वेन ब्रह्मण जगत्कारणत्वम्—इत्यपि निरस्तम्। कल्पितत्व एव प्रमाणाभावात्।

मिथ्यात्वनिर्विशेषत्वे सिद्धवत्कृत्य सर्वदा।
अभित्तिचित्रनिर्माणादद्भुता व स्तु मायिता॥

यदपि—ब्रह्मण कारणत्वादेव जगदपेक्षया सूक्ष्मत्व व्यापकत्व चेति तत्सत्य तथैव। पर तु परिणामिकारणत्व एव मृद्घटादिष्विदमानुभविकम्। न पुन शुक्तिरजतादिस्थलेऽपि। तत्र कार्यसत्ताया कारणसत्तायाश्च विलक्षणतया एकस्या अन्यस्मीन सूक्ष्मत्वादेरननुभवात्। मिथ्याभूतेन सत्यस्याध्यासाधिष्ठानत्वातिरिक्तसबन्धस्य दुर्वचत्वात्। रजतत्वेन ग्रहकाले शुक्तित्वेन ग्रहाभावात् शुक्तित्वेन ग्रहे च रजतबाधात् तथा सत्यरजते शुक्तेरसम्बन्धाच्च रजत व्यापकत्वस्य शुक्तौ दुर्ग्रहत्वाच्च। जगतो ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वस्य शुक्तिरूप्यस्य च शुक्तिनिष्ठात्यन्ताभावप्रतियोगित्वस्य भवत्सि-

द्धान्तसिद्धतया मिथोऽसम्बन्धिनोर्द्वयो आधेयाधारात्मना व्याप्यव्यापक-भावस्य दुर्वचत्वाच्च ।

यदप्यत्र—गन्धशब्देन पृथिव्या व्यच्येते 'गुणानां गुण्यपेक्षया पृथगुपलम्भाभावेन गुणगुणिनोरभेदस्यैव सिद्धान्तेऽङ्गीकारा'दिति हेतुकथनम्—तदप्ययुक्तम्—गन्धस्य घ्राणेन गुणिनं विनोपलभ्यमानत्वात् । यदि तु गुणिनं विहाय पृथगवर्तमानत्वमात्रेण गन्धस्य द्रव्याभिन्नत्वमिष्यते तन्न, विभिन्नेन्द्रियग्राह्ययोरैक्यस्यासम्भवात् । अपृथक्सिद्धयोरौपचारिकश्चेदभेद इष्यते, एवमेव जीवब्रह्मणोश्चिद्ब्रह्मणोः ज्ञानात्मनोश्चौपचारिक एवाभेद आस्थेयो भवति । तावता न वास्तवस्य भेदस्यापलाप सिद्ध्यति ।

यदपि(पृ. ५.)—सकलकार्यव्यापकत्वादेव कारणस्य कार्यगतविशेषराहित्यरूप कार्यापेक्षया सामान्यभूतत्वमिति—तत्रोच्यते । कार्यकारणयोरभेदात् कार्यावस्थायां कार्यगतविशेषवत्त्वं कारणस्याप्यस्त्येव । कारणावस्थायां कार्यगतविशेषाणामनुत्पन्नत्वादेव तद्राहित्यमिति तत्र कार्यव्यापकत्वस्य कुतो हेतुत्वम् । एवं कार्यगतविशेषराहित्योक्तावपि सर्वविशेषरहितत्वरूपनिर्विशेषत्वं न सेत्स्यति । न च यत्र सविशेषत्वं तत्र कार्यत्वमिति व्याप्त्या ब्रह्मण सविशेषत्वे मूलकारणत्वासिद्धिरिति वाच्यम् । यत्र वस्तुत्वं तत्र कार्यत्वमिति व्याप्तिस्वीकारेण ब्रह्मणो मूलकारणत्वनिषेधप्रसङ्गात् । शास्त्रबलेन नित्यवस्तुनोऽपि सिद्धया तादृशव्याप्तिरेव न भवतीति चेन्न तद्बलेनैव नित्यानित्यविशेषविशिष्टनित्यब्रह्मण सिद्धतया भवदुक्तव्याप्तेरपि भङ्गप्रसङ्गेन सविशेषत्वे कार्यत्वस्यापादनमशक्यम् । श्रूयते हि 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति । एवं ब्रह्मणो निर्विशेषस्य कारणत्वे सर्वदैव तत्कार्यप्रसङ्ग इति कारणावस्थायामनित्यविशेषवत्त्वमपि स्वीकार्यम् । तत्कारणतया च तत पूर्वमपि कश्चिद्विशेष इति अनादौ संसारे न कदाऽपि ब्रह्मणो निर्विशेषता । किञ्च कारणत्वं पूर्वकालवृत्तित्वमेवेति, कारणावस्थाया

विशेषोऽवर्जनीयः । यदि ब्रह्मणि सर्वदा विशेषसद्भावेऽपि तेषामपारमार्थिकत्वात् निर्विशेषत्वमुच्यते, तत् कार्यावस्थायामपि तुल्यम् । वस्तुतः तेषां मिथ्यात्व एव प्रमाणं न किञ्चिदस्ति ।

किंच त्वन्मते मूलाविद्या सविशेषा ? निर्विशेषा वा ? नाद्य, सविशेषाणां कार्यत्वेन तस्याः मूलकारणत्वासिद्धिप्रसङ्गात् । नान्त्य, ब्रह्मतुल्यत्वेन बाध्यत्वायमावप्रसङ्गात् । उभयोश्चाविद्याब्रह्मणोः निर्विशेषयोः आच्छाद्याच्छादकभावाभावेन जगदसिद्धिप्रसङ्गाच्च । सैका सविशेषाऽपि मूलकारणमिति चेत्, ब्रह्माप्येवमेवास्तु । ननु कार्यसामान्यस्य सविशेषत्वदर्शनात् ब्रह्मणः सन्मात्रत्वाङ्गीकारे निर्विशेषत्वेन कार्यत्वापत्तिवारणं सुकरमिति सन्मात्रत्वस्वीकार इति चेत्—ब्रह्मणः एवानङ्गीकारे कार्यत्वापत्तिरेव न भविष्यतीति तथा कुतो नेष्यते ? प्रमाणं विशेषेऽपि तुल्यम् । अतो नित्यचिदचिद्विभूतिशक्तिज्ञानसम्पन्नमेव ब्रह्मेति । यत्तु—ब्रह्मणः सविशेषत्वे तादृशविशेषराहित्ये ब्रह्मणोऽपि मूलकारणमन्यत् किञ्चित् स्यात् । तस्यापि सविशेषत्वे पुनर्मूलकारणान्तरापेक्षयाऽनवस्थेति— तत्रोच्यते । सविशेषत्वे कार्यत्वमिति व्याप्तिसिद्ध्या किल ब्रह्मणः सविशेषत्वे मूलकारणापेक्षा वक्तव्या । एवं मूलकारणत्वेन कल्पिते च मूलत्वान्निर्विशेषमेव सिद्धमिति, पुनः कथं तस्यापि सविशेषत्वं इत्येवमनवस्थोपयोगिशङ्कोत्थानम् । तस्मान्मूलपदाप्रयोगेण एवं रीत्या लग्नीयम्—'ब्रह्मणः सविशेषत्वे कार्यत्वात्कारणमावश्यकम्, तस्यापि सातिशयत्वे कार्यत्वात्कारणान्तरमित्यनवस्थया मूलकारणासिद्धि'रिति । वस्तुतः सविशेषत्वेऽप्यकार्यत्वं श्रुतिबलाद्भवत्येवेति न सविशेषब्रह्मणो मूलकारणत्वासिद्धिः । अत एव सविशेषत्वात् स्वगतभेदविजातीयभेदराहित्यमपि दुर्वचम् ।

यत्त्वत्र 'सजातीयाद्विजातीयात् स्वगताच्च भेदो न सम्भवती'त्युक्तम्, तदसत्; सजातीयादिसत्त्वे तद्भेदस्य ब्रह्मण्यावश्यकत्वात् । सजातीयाद्-

प्रसिद्ध्या तद्भेदो ब्रह्मणि दुर्वच इति चेत्—विशेषरूपप्रतियोग्यप्रसिद्ध्या निर्विशेषत्वमपि दुर्वचम् । अपारमार्थिकविशेषसत्ताङ्गीकारेऽपारमार्थिकस्वगता-दिसत्त्वात् तद्भेदोऽप्यस्त्येव । तथाऽपि स भेदोऽपि मिथ्यैवेति चेत्—तर्हि तादृशभेदराहित्यमपि मिथ्याप्रतियोगिकत्वात् कुतो न मिथ्या । यदि भेद-मिथ्यात्वेऽपि भेदराहित्यं सत्यं, तर्हि स्वगतादेर्मिथ्यात्वेऽपि तत्प्रतियोगिको भेदोऽपि सत्य इति कथं ब्रह्म भेदरहितं निर्विशेषम् । अत एवं, 'सजातीयाद्विजातीयात् स्वगताच्च' इति पञ्चमीनिर्देशं विहाय सर्वमवदीय-समादृता 'सजातीयो विजातीयस्स्वगतोऽपि भेदो नास्ती'ति लेखनसरणि-र्युज्यत इव । अत्र भेदशब्दः भेदवद्वस्तुपरः । ते मिथ्यात्वात् परमा-र्थतो न सन्तीत्युच्यते । वस्तुतः स्वगतादिरपि परमार्थ एवेति तु वयम् । सजातीयविजातीयस्वगतभेदेति भवन्मतानुयायिप्रयोगेषु च न पञ्चमीसमास-प्रसिद्धिरिति तत्त्व भवता बोद्धव्यम् ।

क्वचिद्ब्रह्मणो निर्विकल्पमिति विशेषणं च न निर्विशेषपरत्वेन, किंतु विभ्रमराहित्यपरत्वेन अनेकब्रह्मनिषेधाय स्वात्यन्तसजातीयद्वितीयराहित्यपरत्वे-न चेति न ततोऽपि निर्विशेषत्वसिद्धिः । अन्यथा सविशेषत्वश्रुतिविरो-धात् । 'सदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् । निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम्' । (ब्रह्म. सि. ८-९) इति वचनं तु एकवाक्यत्वे निर्विकल्पपदपौनरुक्त्यादप्यप्रमाणम् । अस्मन्निरुक्तार्थपरत्वे प्रमाणमेव वा भवतु ; न ततः किञ्चित् । न च ब्रह्मणः सविशेषत्वे, 'यतो वाचो नि-वर्तन्ते,' 'अगोचरं वचसा' इति श्रुतिस्मृतिविरोध इति वाच्यम् ; तत्रैव ब्रह्मण· यच्छब्द-अगोचरशब्दप्रतिपादितस्वरूपविशेषविशिष्टस्य ततो निर्विशे-षत्वशोधने माता वन्ध्येतिवद्व्याहतार्थकत्वप्रसङ्गात् । अविरोधप्रयर्थश्च वक्ष्यते ।

यदपि—'निर्गुणं' इति श्रुतिबलात् ब्रह्मणि सर्वगुणराहित्यसिद्धिरिति—तत्र तादृशार्थस्वीकारः किं ब्रह्मणः सविशेषत्वे मूलकारणत्वासम्भवरूपयुक्त्या

आहो निर्गुणशब्दस्वारस्यादिति । नाद्यः, प्रागेव निराकृतत्वात् । नान्त्यः, गुणशब्दस्य विशेषणपरत्वेन सकलविशेषणरहितमित्यर्थस्यासम्भवात् । निरञ्जनत्वादिविशेषणस्येष्टत्वात् । स्वाभिन्नगुणशून्यत्वं निर्गुणत्वं, निरञ्जनत्वादेश्च ब्रह्माभिन्नत्वाच्च दोष इति चेन्न, त्वया गुणगुणिनोरभेदस्य (पृ. ४) प्रागुक्तत्वेन सर्वस्यापि पदार्थस्य ईदृशनिर्गुणत्वसत्त्वेनाविशेषात् । एवं सति गुणसामान्यनिषेधपरत्वं परित्यज्य भवता प्रमाणानुरोधेन सङ्कोचे क्रियमाणे 'यः सर्वज्ञ सर्ववित्' इत्यादिश्रुत्यनुसारेण हेयगुणपरतया सङ्कोचस्यैव युक्तत्वात् । 'यः सर्वज्ञ' इत्यादे आरोपितगुणप्रतिपादकत्वस्य भवदिष्टत्वेन निर्गुणमित्यस्य आरोपितानारोपितसर्वगुणनिषेधपरत्वस्य तु स्वीकरतया सङ्कोचस्यावश्यंभावाच्च । पारमार्थिकगुणानामप्रसिद्धतयाऽपारमार्थिकगुणनिषेधस्यैव कर्तव्यत्वेन भवन्मतेऽनुपपत्तेर्जागरूकत्वाच्च । गुणा पारमार्थिकत्वेन रूपेण न सन्तीत्यर्थाङ्गीकारे च पारमार्थिकत्वस्यैवाभावप्रतियोगितावच्छेदकत्वमुक्तं भवतीति व्युत्पत्तिविरोधः । सर्वत्र हि प्रतियोगिवाचकपदप्रवृत्तिनिमित्तमेवाभावप्रतियोगितावच्छेदकं दृष्टम् । घटो नास्तीत्यत्र हि घटत्वमेव प्रतियोगितावच्छेदकम् , न द्रव्यत्वपारमार्थिकत्वादि । अत पारमार्थिकत्वावच्छिन्नगुणनिष्ठप्रतियोगिताकाभाव न कथमपि निर्गुणशब्दार्थ इति । एवमस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयितया जगतोऽपि निर्गुणत्वापत्तिरिति कस्तत्र ब्रह्मणो विशेष ? अतो भवदभिमतवाक्यार्थस्यासम्भवात्, निषेधस्य विहितव्यतिरिक्तविषयतया 'न हिंस्यात् सर्वा भूतानी'ति न्यायसिद्धत्वाच्च , 'विना हेयैर्गुणादिभिः' इति विस्पष्टप्रमाणानुरोधी सङ्कोच एव युक्त इति सिद्धं हेयगुणनिषेधपरत्वम् ।

*यत्तु—(पृ. ६.) निर्गुणश्रुतेरेव सङ्कोचेन समर्थने रसादिकिञ्चिद्गुण*राहित्येन जीवेऽपि निर्गुणपदवाच्यता स्यादिति । तत्रोच्यते । कामं स्यात् । किं तेन । न हि 'पृथिव्यादयो रूपरसादिगुणकाः, जीवस्तु निर्गुण' इत्युक्तौ

प्रकरणानुसारेण तथाऽर्थो न गृह्यते । देहादिवैलक्षण्यसिद्धये तथोक्तिसंभवात् । अशब्दमस्पर्शमित्यादि यथा श्रूयते । निर्विशेषा पुरीति च यथा । किञ्च निर्गुणं गुणभोक्तृ चे'ति (१३ १४.) गीतोक्तरीत्या स्वभावतः सत्त्वादिगुणराहित्येनैव निर्गुणत्वमिष्टमिति निर्गुणपदवाच्यत्वे इष्टापत्तिरेव । इयान् विशेषः । जीवे अपहतपाप्मत्वादिस्वभावे गुणराहित्ये सत्यपि सत्त्वादिगुणप्रकृतिसम्बन्धयोग्यताऽस्ति । ब्रह्मणि साऽपि नास्तीति पुष्कलं निर्गुणत्वमिति । अतो ब्रह्मणि निर्गुणपदेन तद्वैलक्षण्यमभिमतमिति न जीवाविशेषः । न हि निर्गुणपदवाच्यत्वतदभावाभ्यां ब्रह्मजीवयोर्विशेषः भ्रमः । किं तु निर्गुणपदविवक्षितनिरुक्तार्थविशेषमादायेति सिद्धं वैलक्षण्यम् । गुणशब्दस्य च श्वेताश्वतरादिसर्वोपनिषत्सु गीतादिषु च सत्त्वरजस्तमोगुणपरतयैव भूयसी प्रसिद्धिरिति तन्निषेधपरत्वमेव निर्गुणपदस्य स्वरसमित्यतोऽपि न निर्विशेषत्वसिद्धिः । एवं च हेयगुणपरतया एतादृशवाक्यानां निर्व्यूढत्वात् कल्याणगुणास्तत्र वस्तुतः सन्त्येव । न च परमात्मगुणानां अविद्याकल्पितजीवावस्थाप्रपञ्चरचनामात्रोपयोगित्वेन काल्पनिकत्वमेवेति वाच्यम् । अविद्यायाः, तत्कल्पितत्वादेश्चाप्रामाणिकतया तत्सिद्धत्वकारेण ईदृशार्थापकर्षासम्भवात् ।

यदपि—ब्रह्मणो ज्ञानगुणकत्वं नास्ति, किं तु ज्ञानस्वरूपत्वमेवेत्यत्र श्रुतिवाक्यद्वयमुपात्तम्—तत्त्रयमपि विपरीतसाधकम् । (बृ २ ४ १२) 'कृत्स्नो रसघन एव । एवं वाऽरे अयमात्मा विज्ञानघन एवे'त्यत्र हि विज्ञानघनशब्दः, दृष्टान्ते रसघनशब्दो रसनेन्द्रियग्राह्यरस तदन्येन्द्रियग्राह्यतद्धर्मिणोरिव, विज्ञानस्यात्मनश्च स्वरसतो भेदमेव दर्शयतीति नात्मनो विज्ञानस्वरूपत्वमत्र स्वरसम् । तत्तु प्रमाणान्तरानुसारेण समन्तव्यम् । एवं 'सत्यं ज्ञानं (तै २ १) इत्यत्र ज्ञानपदमपि अर्थे आद्यजन्तम्, अन्यथा स्वरविरोधादिति तदपि ज्ञातृवाचि । विज्ञानमानन्दं ब्रह्मेत्यत्रापि

(ब्र ३.९.२८.)आनन्दपदस्य नित्यपुल्लिङ्गस्य अर्धर्चादित्वाभावे क्लीबत्वा-समभेन आनन्दवदर्थपरतया तत्साहचर्यात् पूर्ववचनानुसाराच्च विज्ञात्रर्थकमेव विज्ञानपदमिति निश्चीयते । किञ्चोभयविधार्थपरत्वार्हाणां पदानां विस्पष्टवच-नान्तरानुसारेण अर्थनिर्णय एव प्रामाणिकः । अतश्च 'विज्ञातारमरे (ब्र.२.४.१४)इत्यादिश्रुत्यनुसारेण उक्तवचनानां विज्ञानाश्रयपरत्वं वक्तव्यं परित्यज्यात्र स्वच्छन्दतः कञ्चिदर्थं स्वीकृत्य विज्ञातारमित्यादेरौपचारिकत्ववर्णनं मताभि-निवेशमेव दर्शयति । अत्यन्तासिद्धाद्वितीयत्वसिद्धत्वकारणं श्रुतिसिद्ध-ज्ञातृत्वस्य च निराकरणमप्येवमयुक्तमेव ।

'यदपि–(पृ ७) सर्वं खल्विदं ब्रह्म' इत्यादिभिः समानाधिकरणवाक्यैः ब्रह्मणोऽद्वितीयत्वसिद्धिरिति—तत्र सहृदयो भूत्वा पश्यतु भवान् । अनेन वाक्येन किं सर्वमपि नास्ति अतो ब्रह्माद्वितीयमित्युच्यते । किं वा सर्वम-स्ति, एवंरूपेणैवेदं प्रमाणसिद्धं ब्रह्माभिन्नमिति । न खल्वस्मिन् अपवरके स्थितः शुक्लो नीलः पीतः सर्वो घट इति वाक्यात् नास्ति शुक्लो नीलः पीतो वा किन्तु घट एवेत्यर्थः प्रतीयते । अतो घटस्य नैल्यादिवत् ब्रह्मणि सर्वाकारसत्त्वमेव एतद्वचनलभ्यमिति सर्वबाधेन ब्रह्मणोऽद्वितीयत्वसमर्थनं कदर्थनमेव । तर्हि ब्रह्मणि सर्वाकाराङ्गीकारे निर्विकारश्रुतिविरोध इति चेत् नन्वियमपि श्रुतिरेव । अस्याः परं अन्यथाकरणं कथम्? उभयसामञ्जस्यं कथमिति चेत् तदपि श्रुतिरेव दर्शयतीति वक्ष्यते ।

यदपि—ब्रह्माद्वैतमिति प्रसिद्धिरपि मायावादिमते सामीचीन्येन सङ्ग-च्छत इति—तत्र कुत्रत्येयं प्रसिद्धिरिति विवेचनीयम् । अस्तु वा कामम् । कस्य मते इयं न सङ्गच्छते । चितामचितां चानेकत्वेन भेदवत् ब्रह्मण्यपि भेदो नाङ्गीकार्यः । ब्रह्मणः सृष्टिस्थित्याद्यनेकविशेषणवत्तोऽपि एकत्वमेवेति तात्पर्यात् सर्वाविरोधेन समीचीनतममेव सङ्गच्छतेऽस्मन्मत इति किमनेन । 'बृंहति बृंहयति । तस्मादुच्यते परं ब्रह्म' इत्याद्यनुसारेण बहुविशेषणविशिष्ट-

तथैव ब्रह्मशब्दार्थत्वेन प्रमितस्य निर्विशेषत्वेनाद्वैतवर्णनमेव व्याहतमिति भवन्मते तत्त्वासामञ्जस्यमेव। एतेन भवत्सम्मताद्वितीयत्वे साधकप्रमाणाभावस्य वर्णनेन अद्वितीयत्वाविरोधाय ब्रह्मण सन्मात्रत्वाङ्गीकार सदनुभूत्यैक्याङ्गीकारश्च प्रत्युक्त । ब्रह्मणो ज्ञानरूपतायाः सन्मात्रतायाश्च प्रमाणसिद्धत्वात् ज्ञानसन्मात्रयोरभेदसिद्ध्या सन्मात्रस्य ज्ञानविषयभावो नास्तीति यदुक्त—तदपि न । सतोऽपि ज्ञानरूपत्वेऽपि सन्मात्रातिरिक्तज्ञानानिषेधेन सन्मात्रे तद्विषयभावस्य दुर्वारत्वात्। ब्रह्मातिरिक्त धर्मभूत चैतन्य निषेधतश्च भवत, ब्रह्मण सविषयकत्व दुरपह्नवम् ।



यदपि—ब्रह्माद्वैते 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा । अविद्या तच्चितोर्योग षडस्माकमनादय ।' इति सिद्धान्तविरोध इत्याशङ्क्य पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन सत्तात्रैविध्यमङ्गीकृत्य पारमार्थिकसत अद्वैतेऽपि व्यावहारिकानेकसद्भावे बाधक न किञ्चिदिति समाधानम्; तत्र किमिद सत्त्व नाम ? न तावत् कालसम्बन्ध, प्रमाणसम्बन्धो वा; निर्विशेषे ब्रह्मणि तदभावात् । परमार्थत कालसम्बन्धादेर्दुर्वचत्वाच्च । न हि सत्तायाः पारमार्थिकत्व नामाबाध्यत्व, कालसम्बन्धप्रमाणसम्बन्धादेर्ब्रह्मातिरिक्ततया बाध्यत्वस्यावश्यकत्वात् । नाप्यबाध्यनिष्ठ सत्त्वं पारमार्थिकसत्त्वम्; जन्मादिविकाराणामिव कालसम्बन्धादिरूपसत्त्वस्यापि ब्रह्मण्यनङ्गीकारात् ब्रह्मण सन्मात्रत्वस्याप्यसिद्धिप्रसङ्गेन भवन्मते सत्त्वस्य यथार्थनिर्वचनीयत्वेन तस्यैव निर्दुष्टतया पारमार्थिकत्वविशेषणवैयर्थ्यात् । अथाबाध्यत्वमेव सत्त्वम् । एतस्य सत्त्वविशेषस्य सूचनायैव पारमार्थिकेति विशेषणोक्तिरिति चेत् तर्हि व्यावहारिकसत्त्व नाम व्यवहारदशायामबाध्यत्वम् । तच्च किं व्यवहारकालिको यो बाध तदविषयत्वम् उत व्यवहारकालिक यदबाध्यत्व

तद्रूपत्वम् । नाद्य, तत्कालिकबाधाविषयत्वस्य प्रातिभासिकमात्रगतत्वेन ब्रह्मण्यप्यविषयत्वसत्त्वेन तस्य व्यावहारिकसत्त्वाप्रसङ्गात् । नान्त्य, जगत तत्त्वज्ञानबाध्यत्वेन बाध्यत्वसामान्याभावरूपाबाध्यत्वस्य विशेष्यस्य तत्र दुर्वचतया व्यवहारकालिकत्वरूपविशेषणविशिष्टस्यापि तस्यासम्भवात् । यत्किञ्चिद्बाध्यत्वप्रतियोगिकाभावस्तु शुक्तिरजतेऽपि रज्जुज्ञानाबाध्येऽतिप्रसक्त । एतेन 'व्यवहारस्य सविकल्पकज्ञानसाध्यत्वात् व्यवहारपद सप्रकारकज्ञानपरम् । एवञ्च सप्रकारकज्ञानाबाध्यत्वमेव व्यावहारिकसत्त्वम् । जगतो निष्प्रकारकब्रह्मज्ञानबाध्यत्वात् शुक्तिरजतादेश्च सप्रकारकशुक्तिज्ञानबाध्यत्वात् न कश्चिद्दोष' इत्यपि निरस्तम्, अस्य व्यावहारिकसत्त्वस्य ब्रह्मण्यतिप्रसक्तत्वात् । तर्हि निष्प्रकारकज्ञानबाध्यत्वमेव व्यावहारिकसत्त्वमिति चेत् बाध्यत्वमेव सत्त्वमिति व्याहतमेतत् । निष्प्रकारकब्रह्मज्ञानाव्यवहितपूर्वभाविनि शुक्तिरजतेऽतिप्रसक्तिश्च । वस्तुतो निष्प्रकारकज्ञानमेव नास्तीत्यपि वक्ष्यामः । न च पारमार्थिकसत्त्व अबाध्यस्वरूपम्, व्यावहारिकसत्त्व तु प्रमात्मकज्ञानविषयत्वमिति वाच्यम्, प्रमात्वस्याबाधितार्थविषयकज्ञानत्वरूपतया तादृशज्ञानविषयत्वस्यान्ततोऽबाधितत्व एव पर्यवसानेन उक्तातिरेकात्, ब्रह्मभिन्नस्य बाध्यतयाऽबाधितार्थपदेन जगद्ग्रहणासम्भवेन लक्षणासमन्वयाच्च । अथ व्यवहारकालिकबाधाभाववदर्थविषयकज्ञानविषयत्वरूप प्रमाविषयत्व व्यावहारिकसत्त्वमिति चेत्—इदमपि ब्रह्मण्यतिप्रसक्तम्, शास्त्रतदुपदेशादिदर्शनात् । तत् तत्र कल्पितमिति चेत् जगत्यपि तथैव । एव ब्रह्मणि सत्त्वमबाध्यत्वम्, जगति सत्त्व कालसम्बन्धप्रमासम्बन्धादिरूपमित्युक्तौ वैरूप्य च, एकरूपसत्तायामेव त्रैविध्यस्य कथनीयत्वात् ।

तर्हि आविद्यिके बाध्ये प्रपञ्चे कथ सत्त्वनिर्वाह इति चेत्—क एवमाह बाध्य प्रपञ्च इति । ब्रह्मवदबाध्यत्वमेव तु जगत । श्रुतिश्च कथमसत सज्जायेते'त्याक्षिपन्ती सच्छब्देन जगन्निर्दिशन्ती सत एव सदुत्पत्तिं

दर्शयन्ती उत्पद्यमानस्य सतः उत्पादकस्य सतश्चावैलक्षण्यमेवाशयाना ब्रह्मणीवाबाध्यत्वमेव सत्त्वं प्रपञ्चेऽपि ब्रवीतीति नान्यादृशसत्त्वनिर्वचनाङ्कुरः।

एतेन प्रकारान्तरसम्भावनाऽपि निरस्ता। सा खल्वेवंविधा स्यात्। अबाध्यनिष्ठा सत्ता, अन्यं सत् व्यवहारकालिकबाधाभाववत् यत् तन्निष्ठा सत्ता, व्यवहारदशाबाध्यनिष्ठा सत्तेति सत्तात्रैविध्यम्। सत्ता च कालसम्बन्धादिरेवेति। न चैवं युक्ता, जगतोऽपि ब्रह्मतुल्याबाध्यत्वाङ्गीकाराद्विभागायोगात्। किं च जगतो बाध्यत्वस्य स्वादिष्टत्वेऽपि अबाधितत्वस्य स्वदृष्ट्या बाधान्तरकल्पितत्वेनाबाधितनिष्ठसत्ता जगत्सत्ताऽपि स्यात्। कालत्रयाबाधितत्वाश्रयनिष्ठा सत्ताऽबाधितत्वमुच्यत इति चेत् जगति कल्पिते अबाधितत्वे वास्तवत्वस्यापि कल्पनसम्भवेन तादृशसत्ताऽप्यक्षतैव। वास्तवत्वमपि वास्तवं विवक्षितमिति चेत् उक्तरीत्याऽनवस्थया निर्वचनासम्भव एव। एवं योद्धादिभिर्ब्रह्मणो बाध्यत्वस्य कल्पितत्वात् द्वितीया तृतीया च सत्ता ब्रह्मनिष्ठा भवतीत्यतिप्रसक्तिः। वास्तवबाध्यत्वं विवक्षितमिति चेत् वास्तवत्वस्यापि बाध्यत्वे कल्पनसम्भवात् असङ्गैवातिप्रसक्तिः। तस्मात्कल्पितपदार्थस्वीकारे सत्ताविवेचनं दुष्करमेव। प्रातिभासिकानभ्युपगमश्च वक्ष्यते। अतः प्रातिभासिकाभावात् जगतः ब्रह्मतुल्यसत्ताभ्युपगमात् न सत्तात्रैविध्यमिति।

यथोक्तषट्कमध्ये विशुद्धचितो ब्रह्मण एवानाद्यनन्तत्वम्। अन्येषामनादित्वेऽपि नानन्तत्वम्। मोक्षावस्थायां विनाशा(पृ. ८.) दिति—तत्र पृच्छ्यते। अविद्या कल्पिता, न वा। आद्ये कथमनादिता। कल्पनात् प्राक् अभावात्। कल्पना चेयं कदा? एतज्जन्मारम्भ इति चेत् तर्हि पूर्वजन्माभावेन अकृताभ्यागमप्रसङ्गः। एवं पूर्वपूर्वजन्मनः शाश्वतकत्वात् कल्पनाप्रवाहो स्वतन्त्र अविद्यायाः न कल्पितत्वम्। [illegible]स्थापेनानादित्वे च प्रतिजन्माविच्छेद इति न तत्र बाध्यविरमणादि-

त्वम् । एवमविद्याभेदाङ्गीकारे पूर्वजन्माविद्या कुत्र गता । नष्टेति चेन्न, मिथ्यावस्तूना ज्ञानमात्रनिवर्त्यत्वात् पूर्वजन्मनि च तत्त्वज्ञानस्यानुदयेन तन्निवृत्तेर्दुर्वचत्वात् । ज्ञानातिरिक्तनिवर्त्यत्वे च अज्ञानशब्दवाच्यत्व कथम् ? तस्मात् अनाद्यज्ञानवादिभिस्तत्कल्पितत्व दुर्भणम् । अस्तु द्वितीय कल्प इति चेत्—तर्हि अकल्पितस्य तत्त्वज्ञाननाश्यत्वाभावेन मोक्षावस्थाया कुतो नाश । तस्मादविद्या मूलप्रकृतिरपि अनाद्यनन्तैव, एव जीवेश्वरविषयेऽपि द्रष्टव्यम् ॥

यदपि—जीवस्य व्यावहारिकसत्त्वे मोक्षावस्थाया तन्नाशावश्यभावेन मोक्षप्राप्तये न कोऽपि प्रयतेतेत्यसद्दूषणपरिजिहीर्षया जीवत्वनाशेऽपि धर्मिस्वरूपसत्त्वाददोष इति कथनम्—तत्र विचार्यते । मोक्षप्राप्तये प्रयत्न किन्निष्ठ ? भवन्मते कूटस्थात्मनिष्ठत्वासम्मते अहङ्कारनिष्ठ इति वक्तव्यम् । तथा च यो वस्तुत प्रयतते स नष्ट एव मोक्षावस्थाया, तथा च प्रयतमानस्येदृशविवेके शास्त्राज्जाते कथ प्रयत्न इति । अधिकमग्रे वक्ष्याम ॥

यदपि—निर्गुणब्रह्मणो जीवत्वमीश्वरत्व चोपाधिकमिति निरूपयितु प्रवृत्त्योक्तम्—तत्राच्यते । कर्मणा कर्मकाण्ड इव प्रपञ्चगताना सर्वेषा तत्त्वाना विशिष्य जीवेश्वरयो स्वरूपनिरूपणपर उपनिषद्भाग । तस्य च परिशेषेण निर्विशेषब्रह्मपरत्वमास्थाय तदनुरोधेन जीवेश्वरस्वरूप स्वस्वबुद्ध्या परिष्कर्तुं प्रवृत्ता मृषामतस्थायिन बहुधा विवादमेव व्यदधु । तत्तदभिमतेषु प्रकारेषु कस्यापि श्रुतिमूल स्थापनस्य दुष्करत्वादेव तत्रान्यतमप्रकारपरिग्रहेण परेषा प्रकाराणा खण्डनमद्वैतिनामशक्यमासीत । सर्वोऽय यथाश्रुतब्रह्मकाण्डार्थपरित्यागेनाप्रमितनिर्विशेषब्रह्मनिरूपणश्रद्धानलन समापतितोऽनर्थ । ईदृश च विवाद शिशमयिषुणा तत्रभवता मूलशोधन विनैव युक्तिपुरस्कारेणान्यतरपक्षनिर्दिधारयिषया प्रवृत्तेन मायाऽविद्याभेदपक्ष, एकस्यैवाज्ञानस्याऽऽवरणविक्षेपशक्तिभेदनाविद्या मायापदवाच्यत्वपक्ष, मायाऽवि

द्वयोरभेदपक्षं, अनेकाविद्यापक्षं, एकाविद्यापक्षं च प्रदर्श्य जीवस्यावच्छेदवाद आभासवाद प्रतिबिम्बवाद, तत्रापि यथामत अविद्यावच्छेदादिपक्षान् अविद्याकार्यबुद्ध्यवच्छेदादिपक्षांश्च निर्दिश्य एकाविद्यामतप्रतिबिम्बरूपैकजीववाद एव समीचीन, अन्य सर्वोऽपि न क्षोदक्षम इति न्यरूपि । (पु. ९. १२. ) जीवस्याविद्याकार्यान्त करणावच्छेदाद्यधीनत्वे, कार्यत्वेनानादित्वासम्भव प्रळये विनाशश्च कण्ठोक्त । अकृताभ्यागमकृतविप्रणाशादयो दोषाश्चाभिसंहिता । अनेकाविद्यापक्षे प्रपञ्चस्य दृश्यमानस्य एकत्वात् एकजीवार्थैकाविद्याकार्यत्वमिति अन्येषां जीवानामविद्याना च प्रपञ्चसम्बन्धाभावप्रसङ्ग । एकस्यैव प्रपञ्चस्यानेकतन्त्वारब्धपटस्येवांशभेदेनानेकाविद्याकार्यत्वस्वीकारे कतिपयमुक्तौ कतिपयांशलोपेन प्रपञ्चन्यूनतापत्तिरिति चाभिहितम् । एवमविद्यावच्छिन्नैकजीववादे, 'द्वा सुपर्णा', 'य आत्मनि तिष्ठन्,' इत्यादीनामेकस्यैवोभयस्थितिप्रतिपादकवचनानामप्रामाण्यमापादितम् ।

एव च यदेवाज्ञानावच्छिन्न चैतन्य वाचस्पतिमिश्रमते जीव, तदेव भवन्मते ईश्वर इति सर्वमिद चेद्विमृश्यते, नूनमद्वैतिमतेऽथ यावत् जीवेश्वरस्वरूपमप्रतिष्ठितमेव दृश्यते । यत्तु वाचस्पतिमिश्रमते जीवैक्यमित्युक्तम्, तत् भामत्या 'तदधीनत्वादर्थवत्', 'अंशो नानाव्यपदेशा ' दित्यादौ अनेकजीववादस्य स्पष्टत्वात् स्वमतेऽपि ते नूनमयथाग्रहमावेदयति ।

एव बहु पर्यालोच्य जीवे तदन्त प्रविष्टत्वरूपतदवच्छेदवाद तथा-दात्म्यापन्नत्वरूपतदाभासवाद च परित्यज्य, केवलमेकामविद्यामङ्गीकृत्य, 'तत्प्रतिबिम्बो जीव । तदवच्छिन्न चैतन्यमीश्वर । जीवश्चैक एवे'ति स्वीकरणमेव साधिष्ठमिति भवता समर्थितम् । पर त्वेव समर्थ्य यत् पश्चादुक्तम्— (पु १२)'एव चाज्ञानप्रतिबिम्बित चैतन्य जीव । अज्ञानोपहित बिम्बचैतन्यमीश्वर इति प्र गुक्तपक्ष एव सिद्धान्तभूतोऽवतिष्ठत' इति— तत्र कि-

भिद्गृक्तं यम् । विवरणपक्षे न केवलाज्ञानप्रतिबिम्बितत्वम् ; किं त्वन्तःकर-
णावच्छिन्नाज्ञानप्रतिबिम्बितत्वम् । अत एव तन्मते जीवभेदः । त्वन्मते
जीवैक्यम् । एवमवच्छिन्नत्वाप्रतिहतत्वयोर्भेदस्य प्रागुक्ततया कथमवच्छिन्न-
चैतन्यमीश्वरः, उताहितचैतन्यमीश्वर इति पक्षद्वयमेकम् । एवं जलाव-
च्छिन्नाकाशस्य जल इव, अज्ञानावच्छिन्नचैतन्यप्रदेशस्याज्ञाने प्रतिबिम्बाव-
स्थानात् अज्ञानरहितस्यैव बिम्बत्वमिति भावच्छिन्नचैतन्येश्वरपक्षः बिम्बचैत-
न्येश्वरपक्षश्च एकः । बिम्बस्यैव भवतेश्वरत्वाङ्गीकारे च जीवेश्वरयोरेकत्र
स्थितिप्रतिपादकश्रुतिसंरक्षणं चिकीर्षितं न कृतं भवति । अतो वैलक्षण्ये
सत्यपि कथञ्चिदज्ञानप्रतिबिम्बितत्वमात्रेण जीवविषये, घटावच्छिन्नाकाश-
तदनवच्छिन्नाकाशयोरिवाज्ञानावच्छिन्नचैतन्य-बिम्बचैतन्ययोः कथञ्चिदभेदेन
ईश्वरविषये च प्रागुक्तरक्षैकरस्य भवता सम्पादनीयम् । एवमपि भवदुक्त
तदङ्गीकृतप्रकारविलक्षणमित्यत्र न विवाद । अस्त्वेतत् । एवं भवत्परि-
शेषितस्यैकस्य पक्षस्य दूषणेऽप्येषा भवतैव दूषितत्वेन भवदोऽस्य सुगमामि-
तीममेकमेव पक्षं समग्रेण चिन्तयाम ।

अचाक्षुषस्य चैतन्यस्य प्रतिबिम्बवर्णनमेव तावदशक्यम् । कुत्रापि
तादृशस्य प्रतिबिम्बाभावात् । न च जले आकाशस्य प्रतिबिम्बो दृश्यत
इति वाच्यम् । विहङ्गबलाहकादीनामेव तत्र प्रतिबिम्बाङ्गीकारात् । आ-
काशप्रतिबिम्बस्यानभ्युपगमात् । प्रतिबिम्बसद्भावो हि चक्षुषाऽधिगम्यः ।
न च नीरूपं चक्षुषा दृश्येत । आकाशस्यापि सरूपत्वे तु शङ्कैव न युक्ता ।
सर्वथा तावत् अचाक्षुषस्य न प्रतिफलनमिति ।

किं च न प्रतिबिम्ब इति किञ्चिद्वस्त्वस्ति । चाक्षुषरश्मीनां दर्पण
प्रतिहतानां मुखसम्बन्धेन मुखग्रहणमेव तत्र प्रतिबिम्बग्रहणं नाम । एवं
जलप्रतिहतरश्मिकृतात् सूर्यादिग्रहणात् सूर्यादिप्रतिबिम्बव्यवहार इति नाति
छाया चैतन्यप्रतिबिम्ब इति किञ्चित्सुवचम् ।

अपि च प्रतिबिम्बः किं बिम्बादतिरिक्तः । उत स एव । नाद्यः तर्हि 'तत्त्वमसि, अयमात्मा ब्रह्म' इत्यादिश्रुतीनां अभेदपरत्वासम्भवेन मूलभङ्गात् । तदेवेति चेत्—भवन्मतेऽपि 'द्वा सुपर्णा' 'य आत्मनि तिष्ठन्' इत्यादीनामवच्छेदवाद इवानुपपत्तिराविशिष्टा; द्वयोरभावात् । बिम्बात् प्रतिबिम्बस्य भिन्नत्वेऽपि बिम्बसत्ताधीनसत्ताकत्वादभेदकथनं तत्त्वमसीति श्रुतावुपपन्नमिति चेत्—तर्हि जीवस्याप्रतिबिम्बभूतस्य वस्तुतः पृथग्भूतस्यैव तदधीनसत्ताकत्वेनाभेदश्रुतिनिर्वाह इति व्यर्थं प्रतिबिम्बत्वकल्पनम् । न च 'अयमात्मा ब्रह्म'त्यत्र जीवे शुद्धचैतन्यरूपब्रह्माभेद एवोच्यते ; न तु बिम्बचैतन्यभूतेश्वराभेदः । अतो बिम्बप्रतिबिम्बयोर्भेदेऽपि न दोष इति वाच्यम् ; तत्त्वमसीत्यत्र ईश्वरप्रक्रमात् तच्छब्देन बिम्बभूतमीश्वरं गृहीत्वा तदभेदस्यैव कथनात् । एवं प्रतिबिम्बे ब्रह्माभेदोऽपि न सम्भवति, ब्रह्मणः अन्यसत्ताधीनसत्ताकत्वाभावात् बिम्बसत्ताधीनसत्ताकस्य प्रतिबिम्बस्य ब्रह्मत्वायोगात्। एवमज्ञानावच्छिन्नचैतन्यरूपेश्वरस्य तच्छब्दार्थत्वेऽपि त्वंपदोक्तप्रतिबिम्बस्य तदभेदसिद्धिः शुद्धब्रह्माभेदासिद्धिश्च द्रष्टव्या ।

एवमविद्याविनाशे ब्रह्मव्यतिरिक्तप्रतिबिम्बनाशस्यावश्यकत्वेन जीवस्य स्वनाशार्थमेव मोक्षप्रवृत्तिरिति शोभनो वो वेदान्तार्थः । अपि च जलाद्बहिष्ठस्य भास्करादेः जले प्रतिफलनम् ; न पुनस्तदन्तर्गतमत्स्यादेरपि । तथा चाविद्यान्तर्गतं तदवच्छिन्नं ब्रह्मेति कथं तस्य तत्र प्रतिबिम्बनम् । न च जलावच्छिन्नप्रदेशस्य जल इवाविद्यावच्छिन्नब्रह्मभागस्याविद्यायां प्रतिबिम्बासम्भवेऽपि तदनवच्छिन्नप्रदेशस्य तत्र प्रतिबिम्बोऽस्तीति वाच्यम् ; भवता जीवस्य श्रुतिसूत्रप्रसिद्धमणुत्वमुपेक्ष्य विभुत्वस्वीकारेण तदाधारस्याविद्याया अपि विभुत्वस्यावश्यकत्वेन ब्रह्मणो विभुनोऽपि तदन्तर्गतत्वस्यावर्जनीयत्वेन तस्य तत्र प्रतिबिम्बनं हि सर्वथा दुर्वचम् ।

अन्यच्च। प्रतिबिम्बजीवपक्षे जीवस्य संसारबन्ध एव दुरुपपादः। तथा हि—अहं जानामि करोमीत्यादौ प्रतिबिम्बस्य मालयाऽपि सम्बन्धो न दृश्यते। भवन्मतेऽहंशब्दस्याहङ्कार एव मुख्यवृत्तत्वेन अहमादिपदेन तदतिरिक्तग्रहणे प्रमाणाभावात्। ज्ञाधातुना च वृत्तिज्ञानस्यैव विवक्षिततया तस्यापि प्रतिबिम्बपरत्वाभावात्। प्रतिबिम्बस्य ज्ञानत्वासम्भवाच्च। न च बिम्बस्य चैतन्यरूपत्वेन प्रकाशकत्वेन प्रतिबिम्बस्यापि तथात्वम्। अग्नेर्दाहकत्वेऽपि तत्प्रतिबिम्बस्य दाहकत्वादर्शनात्। प्रतिबिम्बस्य बिम्बकार्यकारित्वाभावात्। अतः प्रतिबिम्बसम्बन्धबलात् अन्तःकरणस्य ज्ञातृत्वमित्यपि दुर्वचम्। यदि अन्तःकरणावच्छिन्नमपि चैतन्यमस्तीति तत्सम्बन्धादन्तःकरणस्य ज्ञातृत्वमुच्यते। तावता प्रतिबिम्बस्य कस्तत्र सम्बन्धः? अहंशब्देनान्तःकरणगतं प्रतिबिम्बमेव गृहीत्वा तत्र ज्ञातृत्वं जानामीत्यनेन उच्यत इति चेत् यथाश्रुते का वाऽनुपपत्तिः? अहंशब्दस्यात्मपरत्वानुभवात् प्रतिबिम्बपर्यन्तग्रहणमिति चेन्न— प्रतिबिम्बस्यात्मत्वाभावात्। आत्मशब्दस्य विशुद्धब्रह्मपरत्वेऽन्तःप्रविश्यनियन्तृपरत्वे वा प्रतिबिम्बे तदसम्भवात् तस्मान्न प्रतिबिम्बो जीवः। एवं प्रतिबिम्बजीवपक्षं परित्यज्य प्रतिबिम्बितत्वविशिष्टचैतन्यस्य जीवपदार्थत्वपक्षे कतिपयदोषपरिहारेऽपि न निस्तारः। अविद्याया विभुत्वेन बहिर्भ्रह्माभावादिना प्रतिबिम्बस्यैवासम्भवात्। मिथ्याभूताविद्याया काल्पनिकत्वेन कल्पनात् प्राक् अभावे अनादित्वभङ्गाच्च। प्रवाहाविद्यापक्षे च प्रतिबिम्बभेदात् जीवभेदः। अकृताभ्यागमः पूर्वाविद्यानिवृत्तौ तज्जीवकल्पिताविद्याया अपि कार्याक्षमत्वमित्यादि भाव्यम्।

एवमेकजीववादे उपदेष्टुपदेश्यबद्धमुक्तव्यवस्थाद्यनुपपत्तिरपि द्रष्टव्या। अनेकजीववादश्च जगन्मिथ्यात्वपक्षे तत्तत्कल्पितप्रपञ्चभेदापत्तिपरस्परसंव्यवहाराभावापत्त्यादिदोषेण न सम्भवति। भवद्भिश्चोपेक्षितश्च। स्वाभाविकसार्वज्ञ्यसर्वशक्तिसम्पन्नस्य नित्यनियन्तुरीश्वरस्याज्ञानावच्छिन्नत्वं लक्षणमाश्रित्य

श्रुतिकदर्थनं पुन आस्तिको न श्रोतुमर्हति । तस्मान्निर्गुणब्रह्म सत्यत्वेन जीवत्वादेरौपाधिकत्ववर्णनमनुपपन्नमित्यलमधिकेन ।

अज्ञानविषये श्रुतिस्मृतीरुदाहरता च [पृ १२] भवता सदसदनिर्वचनीयत्वे भावरूपत्वे च न किञ्चिदपि प्रमाणं दर्शितमिति ततो भवदभीष्टसिद्धिः । यत्तु 'इयमज्ञानपदवाच्याऽविद्या कथं जाता केन कारणेन अस्या ब्रह्मणा सम्बन्धो जात इति न चोदनीयम् । अविद्याया सम्बन्धस्य चानादित्वाङ्गीकारादिति—तत्र पृच्छयते । अविद्या सत्या मिथ्या वा ? आद्ये अद्वैतहानिः ज्ञाननिवर्त्यत्वासम्भवश्च । अन्त्ये कां सत्वमुक्तं भवतीति, यावत्कल्पकस्य दोषस्य कल्पनाशालिपुरुषस्य कल्पयाश्चासम्भवः तावदविद्याऽपि न सम्भवति । तेषां सम्भवे चानादि भङ्ग अविद्यायाः प्रवाहानादित्वे च तत्प्रतिबिम्बभूतानां जीवानामपि प्रवाहानादित्वेनेति नश्वरत्वाकृताभ्यागमादिदोषपाताद्वश्यम् । अतोऽनादित्वे अविद्यायाः पारमार्थिकत्वमेवेति अद्वैतहानिरेव । न च तस्या मिथ्यात्वे किञ्चित्प्रमाणमुपन्यस्तम् । को मायाशब्दार्थः ? कथं च सत्यत्वे 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्युपपत्तिरिति चेत्, अस्यामेव श्वेताश्वतरोपनिषदि— 'क्षरात्मानावीशते देव एकः' 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति' इति भेदज्ञानस्य मोक्षोपायत्वकथनेन जगन्मिथ्यात्ववर्णनस्य श्रुत्यर्थविरुद्धत्वात् मुक्तस्य समस्तप्रकृतिसम्बन्धनिवृत्तिरेवात्रोच्यत इति नानुपपत्तिलेशोऽपि । मायाशब्दार्थश्च वक्ष्यते ।

यत्तु अविद्याब्रह्मणोः सम्बन्धं विविञ्चता उक्तम्—यथाग्निर्जलं प्रविश्य तदीय शैत्यमपहृत्य स्वकीयमौष्ण्यं तदीयत्वेन प्रदर्शयति । तथाविद्या चैतन्यस्य निर्विषयकनिराश्रयस्वरूपमपहृत्य स्वकीयं सविषयत्वमाश्रयत्वं तदीयत्वेन प्रदर्शयतीति—तत्पुनः विवेचनीयम् । अविद्या हि 'अहं ब्रह्म न जानामि' इत्येवरूपा ब्रह्मविषयकाज्ञानरूपा जीवनिष्ठा । चैतन्ये स्वविषय

विषयकत्वाश्रयाश्रयकत्वयो आपादने च सति चैतन्य ब्रह्मविषयक जीवनिष्ठ भवतीत्युक्तमासीत् । तथा चाग्निरूपात् जलमुष्णमितिवत् अविद्यावशात् ब्रह्मज्ञानवान् जीव इति सिद्ध्यतीति नाविद्याया बन्धकत्वमिति । न चाज्ञानविषय ईश्वर एव । न तु ब्रह्मेति वाच्यम् । एवमपि जीवे ईश्वरज्ञानस्य स्वरूपत्वसिद्ध्या लोकानुभवशास्त्रयोनित्वाधिकरणादिविरोधात् वस्तुतो ब्रह्मणोऽज्ञानविषयत्वेन रूपेणेश्वरत्वेऽपि शुद्धब्रह्मण अज्ञानविषयत्वमपरिहार्यम् । अन्यथा तदज्ञानाभावे बन्धाभावप्रसङ्गात् । अत एव ब्रह्म न जानामीत्येवाविद्याऽऽकार प्रदर्शित इति पूर्वोक्तदोषस्तदवस्थ एव ।

यदपि (पु १३ )प्रथम क्रमेण महदहङ्कारतन्मात्राणा अविद्यापरिणामतया ब्रह्मविवर्ततया चोत्पत्ति । तत एकैकतन्मात्रात् एकैकभूतस्य, आकाशादीना भूतानामेकैकस्य सात्त्विकांशात् श्रोत्रत्वक्चक्षुरसनघ्राणानामेकैकस्य, राजसांशात् वाक्पाणिपादोपस्थपायूनामेकैकस्य, मिलितसात्त्विकांशसमुदायादन्त करणस्य, तथा मिलितराजसांशसमुदायाच्च प्राणस्येत्येवमुत्पत्तिपञ्चीकरणादिवर्णनम्—तत्राय क्रम उपनिषत्सुपबृंहणविरुद्ध इतीदमास्ता नाम । मृषावादिमते ईदृशसृष्टिक्रम एव न सङ्गच्छते । भवता हीश्वर अविद्याया विषय । जीवश्चाश्रय इति प्रागुक्तम् । मिथ्यावादिभि प्रतीयमानत्वनिबन्धना वस्तुस्थितिरास्थेया । न पुन प्रतीतेरभावेऽपि प्रतीते प्राग्वस्तुस्थिति , न हि शुक्तौ रजताध्यासोऽस्य पुरुषस्य कालान्तरे भविता इति प्रागेव शुक्तिरजतसृष्टिराद्रियते , अतो यदाप्रभृति जीवस्य महदहङ्कारादिप्रतीति तत प्राक् तत्सद्भाव न मिथ्यात्वमते सूपपाद । यावद्धि लगन्निरीक्षितोपदेशोपदेष्ट्रसमागमो वेदार्थश्रवण च न भवति तावन्नैव *महदहङ्कारतन्मात्रादय कथञ्चिज्ज्ञायन्ते इति तेषा प्रागुत्पन्नता ततश्च अय* दुत्पत्ति इत्यय क्रम कथङ्कार घटताम् ? यद्धि ब्रह्मणि पूर्वमध्यस्तम् तत्पूर्वमुत्पन्नम् यत् पश्चात् तत् पश्चादिति वक्तव्ये ईदृशसृष्टिक्रमस्याकल्पन

सर्वथा न शक्यत एव भवन्मते । उपनिषद्येव क्रम कथ्यत इति चेत् तर्हि त्यज्यतां मिथ्यात्वपक्षः । तस्मात् स्वमते दुरुपपादस्य क्रमस्य स्वयमास्थया वर्णनं स्वमतश्रद्धाविघातायैव भवतीति । उपनिषदां सृष्टिक्रमे निर्भरो नास्त्येवेति चेत् कुत्र वा निर्भरोऽस्ति । उपनिषदुक्तं तु न यथार्थम् , यथार्थं तु निर्गुणं ब्रह्म भवन्मते । अप्रमेयं च तद्ज्ञाप्यमिति । अत एवाविद्या काचिदस्तीति यावन्न ज्ञायते तावदविद्याऽपि नास्त्येवेति तत्सम्बन्धो वा प्रतिबिम्बो वा तदायत्तभ्रमो वा न किञ्चिदपि श्रुत्यर्थतया सुनिरूपम् । एतेन ब्रह्मणो महदादिविवर्तोपादानत्वमपि निरस्तम् । तद्विवर्तोपादानत्वं हि तदध्यासाधिष्ठानत्वमेव । न च तदध्यासकर्तुर्जीवस्याभावे ब्रह्मणोपादानत्वप्रसक्तिः । न च जीवस्य महदादिभूतादिविकाराऽऽहितकरणकलेवरविरहितस्य तथाऽध्यासप्रसक्तिरिति परस्पराश्रयादिपराहतमेतत् । को हि नाम महदादिकं किञ्चिदस्तीति विना शास्त्रमनुभवति । शास्त्रं वा कथं जीवानुभवमन्तरेणासदर्थं नाम बोधयति । अतो दृश्यमानघटाद्यध्यासाधिष्ठानत्वं ब्रह्मणः मृदादेश्च घटादिपरिणामित्वं कथञ्चित् स्यान्नाम । न कथञ्चिदपि तु शास्त्रोक्तं सृष्टिक्रमं सम्भावयितुमपि शक्यत इति असम्बद्ध एव मिथ्यावादिमते सृष्ट्युपन्यासः । तर्हि किं वक्तव्यमिति चेत् जगति जायमाना गृहक्षेत्रारामघटपटादिरूपा बुद्धिः सर्वापि ब्रह्मणि साक्षात् भ्रान्तिरूपेत्येतावदेव वक्तव्यम् । ननु सादृश्यादिमूला लोके शुक्त्यादौ रजतादिभ्रान्तिः सा ब्रह्मणि कथं स्यात् तस्य निर्गुणत्वेन तत्र सादृश्यस्य ग्रहणासम्भवादिति चेत् सत्यमेतत् तत सत्यमेतज्जगदिति निश्चीयताम् । भ्रान्तिगन्धस्याप्रसक्तेः इति ॥

किं च भवता साश्रयत्वेन सविषयत्वेन च भासमानं ज्ञानं महत्तत्त्वं ज्ञाताऽहङ्कारः ज्ञेयं शब्दतन्मात्रादीत्युक्तम् । महदहङ्कारतन्मात्रादेश्च क्रमः सर्वसम्मतः । तत्र ज्ञानं पूर्वमुत्पद्यते अनन्तरं तदाश्रय उत्पद्यते । अन

न्तरं तद्रूपेणेति को नु सहृदयोऽनुमन्तुमर्हति । आश्रयादितः प्राक् जायमानस्य कथं साश्रयत्वादि । कस्य वा तदा साश्रयत्वादिना भासत इति भवानेव पर्यालोचयतु ॥ अपञ्चीकृताकाशादेः तन्मात्रशब्देन व्यवहारः पञ्चीकृतानां चाकाशादिशब्देनेति परिभाषानो ज्ञायते । एवं सति तन्मात्रेभ्यः पृथगाकाशादीनामुत्पत्तिः ततः पञ्चीकरणमिति भवद्ग्रन्थः तु (पु. १३-१४) यथावत्प्रतीयमानोऽशास्त्रविरुद्धः । एकरसत्वमपेक्षितं चेद् ब्रह्मैकदेशेन सम्पाद्यम् । आनन्दमयश्च न कश्चित् कोशः, किंतु परमेव ब्रह्मेति आनन्दमयाधिकरणवास्तवार्थस्थापनेन परपक्षनिराकृतौ प्रपञ्चितमस्मदाचार्यचरणैरिति तत्रैव द्रष्टव्यम् ।

यत्तु [पु. १५] सञ्चितागामिप्रारब्धभेदेन त्रिविधे कर्मणि सञ्चितस्य तत्त्वज्ञानेन विनाशः आगामि तु नोत्पद्यत एव । प्रारब्धं पुनः भोगैकनाश्यमिति—तत् भवन्मते न शक्यं वक्तुम् । तत्त्वज्ञानस्य सकलमिथ्याज्ञानसमूलनिर्मूलकत्वोदयानन्तरमपि प्रारब्धं चेन्न नश्यति । न तर्हि तन्मिथ्या किन्तु सत्यमेवेति व्यक्तमिदं श्रीभाष्ये । वक्ष्यते चेति ।

यदपि जीवन्मुक्तो स्रक्चन्दनवनितादिविषयदर्शनं यत्, तन्न कार्यरूपेण किन्तु कारणीभूताविद्यादिशक्तिमद्ब्रह्मरूपेण । अतो न तस्य कार्यसम्बद्धसंस्काराधायकत्वम् । अतो विषयान् कार्यरूपेण न पश्यति ज्ञानी । बद्धस्तु पश्यतीति वैषम्यमुक्तम् । तदप्ययुक्तम् । केवलनिर्गुणब्रह्ममात्रनिष्ठस्य जीवन्मुक्तस्याविद्याशक्तिमद्ब्रह्मरूपेणापि दर्शनासम्भवात्, सत्यपि तथाविधब्रह्मज्ञाने मिथ्याभूताविद्यास्वरूपदर्शनमपि चेदस्ति । किमपराद्धं कार्यस्वरूपदर्शने ? अदृष्टकार्यस्वरूपस्य च जीवन्मुक्तस्य स्रक्चन्दनादौ धारणलेपनादिव्यवस्थितकार्यानुगुणा कथं प्रवृत्तिः । तथा च कार्यस्वरूपाणां तथात्वेनैव ज्ञानं संस्काराधायकं समस्त्येवेति न बद्धात् कश्चिद्विशेष इति कोऽसौ जीवन्मुक्तो नामेत्यलमत्र ।

यद्यपि(पु. १६.)जगतोऽनिर्वचनीयत्वं शुक्तिरूप्यदृष्टान्तेन दर्शयितुं दृष्टान्ते तत्स्थापनायोक्तं—'तद्धि न सत् । नेदं रजतमिति बाधानुपपत्तेः । नाप्यसत् । इदं रजतमिति प्रतीत्यनुपपत्तेः' इति तत्र विवेचनीयम् । किमिदं सदसदनिर्वचनीयत्वं नाम ? पूर्वं न सत् इत्यनेनासत्त्वस्य पश्चात् नाप्यसदित्यनेन सत्त्वस्य च भवतैवोक्तत्वेन सदसत्त्वयोः सिद्धयोः, सदसदनिर्वचनीयत्वं कथमुच्यताम् ? सत्त्वमपि न त्रैकालिकं असत्त्वमपि न त्रैकालिकमित्येतावतैव सत्त्वासत्त्वयोरनङ्गीकारो भवतः इति तावता कदाचित् सत्त्वं, कदाचिदसत्त्वं चैव सिद्ध्यति। न च सत्त्वासत्त्वयोर्विरोधः कालभेदेन परिहारात् । अतस्त्रैकालिकसत्त्वासत्त्वविशिष्टतयाऽनिर्वचनीयत्वं किञ्चित्कालिकसत्ताश्रयत्वकालान्तरावच्छिन्नासत्ताश्रयत्वरूपमेवेति इष्टमेवेदं जगति कार्येषु ।

परं तु तादृशस्य कार्यस्य ज्ञानविनाश्यत्वस्य क्वाप्यदर्शनात् मुद्गरादिनेव घटादेः उपायान्तरेणैव नाश्यत्वम् । न च शुक्तिरजतादौ तादृशे ज्ञाननिवर्त्यत्वं दृष्टमिति शङ्क्यम् । दृष्टान्तासिद्धेः । शुक्तिरजतादिकमेव हि न प्रामाणिकम् । तथा हि । शुक्तेः शुक्तित्वेनाग्रहणे, इदन्त्वेन ग्रहणे चाकचक्यादिज्ञाने च सति अनुभूतरजतस्य शुक्तौ रजतबुद्धिरुदेतीति । शुक्त्यज्ञानं इदन्त्वावच्छिन्नधर्मिज्ञानचाकचक्यादिज्ञानायत्तरजतसंस्कारोद्बोधसहकृतं रजतरूपेण परिणमतीति भवत्प्रक्रिया । तत्र रजतोत्पत्तिः किमर्थमिष्यते । रजताभावे रजतेन्द्रियसन्निकर्षरूपकारणस्य दुर्वचतया इदं रजतमिति ज्ञानस्य रजतांशे साक्षात्कारत्वमुपपादितं न भवतीति हि तदुत्पत्त्यङ्गीकारः । एवं च सति रजतसंस्कारोद्बोधानन्तरं रजतोत्पत्तिः । अथेन्द्रियसन्निकर्षः । अथ प्रत्यक्षमिति वक्तव्यम् । न चैवमुच्यते ।

ननु रजतस्य प्रातिभासिकत्वात् इन्द्रियस्य च व्यावहारिकत्वात् तयोः सन्निकर्षः दुरुपपादः । किञ्चावश्यं प्रातिभासिकरजतस्य प्रतिभास-

समयमानस्यापि त्वमङ्गीकर्तव्यम् । तत् इन्द्रियसन्निकर्षायत्तप्रतिभासाङ्गी-कारो न भवति, प्रातिभासिकस्यापि सत्त्वप्रसक्तेः । अत एवमुच्यते । शुक्तिरूपविषयावच्छिन्नचैतन्यनिष्ठाऽविद्या उक्तरजतसंस्कारोद्बोधादिसहकृता रजतरूपेण परिणमति । तदानीं एवाविद्यावृत्तिरपि काचिदुदेति । सैव रजतज्ञानमित्युच्यते । न पुनः प्रातिभासिकरजतज्ञानमन्तःकरणवृत्तिः, तस्याः इन्द्रियसन्निकर्षाधीनत्वात् । तस्य च तत्रास्वीकारात् । स्थितश्चेन्द्रि-यसन्निकर्षः शुक्तिरूपेदमर्थग्रहणे चाकचक्यादिग्रहणे चापक्षीणः । न च विषयावच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नचैतन्यरूपप्रमातुश्चाभेद एव विष-यप्रत्यक्षत्वमिति वेदान्तसिद्धान्तात् प्रकृते शुक्त्यवच्छिन्नचैतन्याध्यस्तत्वेन रजतस्य तदभिन्नत्वात् शुक्तिप्रत्यक्षसद्भावेन च शुक्तिचैतन्यस्य प्रमात्रभिन्नत्वात् प्रातिभासिकरजतस्यापि प्रमात्रभिन्नत्वसत्त्वादेवमेव तत्प्रत्यक्षत्वनिर्वाहे अवि-द्यावृत्तिः किमर्थमङ्गीकार्येति शङ्क्यम्, शुक्तेः प्रमात्रभिन्नत्वे, शुक्तिगतशु-क्लत्वादिसर्वधर्माणामपि शुक्तिचैतन्यमात्रातिरिक्तसत्ताशून्यानां प्रमात्रभि-न्नतया सर्वप्रत्यक्षत्वापत्तिरिति, तद्वारणाय स्वाकारकवृत्त्युपहितप्रमातृचैत-न्याभिन्नत्वं विषयस्य प्रत्यक्षत्वमिति निर्वचनीयमिति प्रकृते रजतस्य वृत्त्य-नङ्गीकारे शुक्तिशुक्लादिरिवाप्रत्यक्षत्वप्रसङ्ग इत्यविद्यावृत्तेरप्युरीकरणात् । तथा च रजतस्यानिर्वचनीयत्वानुपपत्तौ अविद्यावृत्तेरपरोक्षत्वस्य च दुर्वचतया तत्स्वी-कारः । इति चेत्—

नैवम्; अन्यथैवोपपत्तेः । तथा हि—प्रातिभासिकरजतस्यापि प्रतीतिकाले पारमार्थिकत्वेनैव प्रतीतिरिति तत्र पारमार्थिकत्वमपि प्रातिभा-सिकं किञ्चित् कल्पितमिति न कल्प्यते । ननु यत्र इन्द्रियसन्निकृष्टसिद्धव-स्तुना निर्वाहो न भवति तत्रैव प्रातिभासिककल्पना, पारमार्थिकत्वं च शुक्तौ वर्तमानमिन्द्रियसन्निकृष्टमन्यथाख्यातिनयात् रजते प्रतीयत इत्ये-वमेवोपपत्तौ न तत्कल्पना । अत एव स्फटिके जपाकुसुमलौहित्यमपि

प्रातिभासिकं नेष्यते । सन्निकृष्टलौहित्यान्यथाख्यात्यैव निर्वाहात् । एवमस्वीकृत्य प्रातिभासिकरजतं पारमार्थिकत्वस्यापि प्रातिभासिकस्याङ्गीकारे 'नेदं रजतं'मिति प्रतीतिरेव नोदेतुमर्हति । तत्र हि पारमार्थिकत्वेनापि रजतस्य प्रतीतिकालेऽभावो विषय इति वक्तुं न शक्यते । तेन रूपेणापि तत्र तदा रजतसत्त्वात् । अत एतद्विषयोऽन्यथाख्यातिरेवेति चेत् तर्हि प्रातिभासिकरजतानङ्गीकारेण दूरस्थरजतस्मृतिशुक्तिधर्मिज्ञानाभ्यामेव प्रवृत्तिनिर्वाहे किमर्थं तत्कल्पना । रजतं साक्षात्करोमीत्यनुभवभङ्गपरिहारायेति चेत् रजतं पारमार्थिकमित्यनुभवस्य अन्यथाख्यात्या निर्वाहवत् रजतस्मृतौ शुक्तिज्ञानगतसाक्षात्कारत्वान्यथाख्यात्यैव रजतं साक्षात्करोमीति भ्रमनिर्वाहे विप्रकृष्टरजतविषयत्वेनैवोपपत्तिरिति व्यर्था प्रातिभासिककल्पनेति पश्यतु भवान् । अवश्यं च रजतज्ञानं चाक्षुषम् । चक्षुषा रजतं पश्यामीत्यादीनामन्यथैव निर्वाहः कार्यः । रजतज्ञानस्याविद्यावृत्तिरूपस्य अन्तःकरणवृत्तिरूपशुक्तिज्ञानभिन्नतया चक्षुरादीन्द्रियजन्यत्वस्य भवतैवानङ्गीकारात् । एवं 'चक्षुः सन्निकृष्टं रजतं' 'रजतमुपाददे' इत्यादावप्यन्यथा निर्वाह आवश्यकः । एतेन नेदं रजतं, अत्र रजतं नास्तीत्यादौ यथाश्रुतार्थ एव समञ्जसो भवति । अन्यथा हि भवन्मते पूर्वक्षणे प्रातिभासिकरजतसत्त्वेन त्रैकालिकरजताभावासम्भवात् नात्र रजतमित्यत्र पारमार्थिकत्वरूपान्यधिकरणधर्मावच्छिन्नाभाव विषयत्वेन कल्पनीय इति गौरवम् । अतः स्वमते पूर्वान्यथोपपादनायप्रमित्याभासग्रहणेन प्रातिभासिककल्पनाप्रयासगौरव तद्दृष्टान्तेन जगदनिर्वचनीयत्वकल्पनं च सर्वथैवानुपपन्नमित्यलमलं ।

'नेह नाने'ति श्रुत्यर्थश्च निरूपयिष्यते । यत्तु 'यत्प्रतीयते तत्र सत् । यत्र सद्रूपं तत्र प्रतीयते' इति वचनम्—तत् भाष्यमत् । इदं रजतमिति प्रतीत्यनुपपत्तिरिति पूर्ववाक्येन व्याहतम् । प्रतीयमानस्य सत्त्वानियमे प्रतीत्यन्यथानुपपत्त्याऽपरमार्थनिराकरणासम्भवात् ।

यत्तु 'वेदा अवेदा', [बृ. ४. २. २२] इत्यत्र शास्त्रेण स्वयमेव स्वानिर्वचनीयत्वस्य प्रख्यापनमिति तन्न । तस्यान्यार्थत्वात् शास्त्रस्यासत्यत्वे तस्य तत्त्वज्ञानहेतुत्वासम्भवाच्च ।

यत्तु असत्यात् सत्योत्पत्तिर्भवितुमर्हतीत्यत्र दृष्टान्तवर्णनम्—स्वप्नगजादयोऽसत्याः सत्यमूत्रजनमुत्पादयन्ति सत्यभूतशुभमशुभं च सूचयन्ति चेति—तदप्यसत्, स्वाप्नरथादीनामपि सत्यत्वात् स्वाप्नभोगप्रद-कर्माभिव्यक्तिबलात् रथादिसृष्टिः स्वप्ने श्रुतिसिद्धेति भवन्तोऽपि मन्यन्ते । तत्रागन्तुकनिद्रादोषजन्यत्वात् जीवकल्पितत्वमिति यदुच्यते तदयुक्तम् । सर्वत्र ईश्वरस्य कर्मफलप्रदत्वेन तत्रापि तत्सृष्टत्वाभ्युपगमस्यैव युक्तत्वात्, जीव-कल्पिते प्रातिभासिके रूप्यादौ, शुक्तौ रजतं सृष्टमिति सृष्टिव्यवहाराभावेन श्रुत्या सृज्यमानत्वेन व्यवहृते स्वाप्ने कल्पितत्वायोगाच्च । अल्पकालमात्रावसानत्वं तु कर्मानुगुणं सर्वाङ्गीकृतमिति श्रौते यथाश्रुताङ्गीकारे न किंचिद्बाधकं लक्ष्यते । अतः स्वप्ने सत्यादेव सत्यस्योत्पत्तिः । किंच स्वप्ने प्रातिभासिकपदार्थ-कल्पनमप्ययुक्तम्, स्वाप्नज्ञानस्यानुभवकालान्तरस्थितार्थस्मृतिरूपत्वेनैवोप-पत्तेः । न च स्वप्ने रथं पश्यामि, अद्राक्षमित्याद्यनुभवानुरोधात् तत्कल्पनमिति वाच्यम् । तत्र, चक्षुषा पश्यामि, चक्षुषाऽद्राक्षमित्याद्यनुभवानुरोधेन चक्षुरा-दीन्द्रियानुपरमस्यापि स्वीकर्तव्यत्वापातात्, भवन्मते स्वप्ने देशकालरथादीनां सर्वेषामपि चैतन्येऽध्यस्तत्वेन चैतन्यस्य च स्वयंप्रकाशस्य इन्द्रियग्राह्यत्वाभावेन शुक्त्याद्यधिष्ठाने इन्द्रियसन्निकर्षवशेन रूप्यादिग्रहणवदपि स्वाप्नरथादिग्रहणे इन्द्रियसन्निकर्षायत्तत्वस्य दुर्वचतया चाक्षुषत्वादीनां तत्रारोपितत्वावश्यकत्वेन पश्यामीत्याद्यनुभवस्यापि तथैवोपपत्तेः । अतः श्रुतिप्रामाण्ये स्वाप्नस्य तत्काले वर्तमानैव । श्रुत्यनादरे च कालान्तरस्थवस्तुस्मृतिरिति न प्रातिभासिके वै किंचित्प्रमाणम् । एवञ्च कालान्तरस्थस्मृतिपक्षेऽपि तेषां वस्तूनां सत्यत्वेन नासत्यात्प्रतिपत्तिः, न च तत्कालेऽपि तत्र कथं प्रत्यक्षरूपग्रहणमिति शङ्क्यम् ।

अतीतानागतग्राहियोगिप्रत्यक्षवत् कर्मवशादुपपत्ते । प्राय सर्वेषा प्रत्यक्षस्य वर्तमानविषयकत्वेन अत्र प्रत्यक्षतया प्रतीते वर्तमानत्वभ्रम । न वस्तु स्वप्नकालिकम् ॥ न खलु च कदाऽपि कुत्र प्यसत् ज्ञानस्यालम्बन मिति भ्रम । शशविषाणाद्यनुभवानङ्गीकारात् । अङ्गीकारे वाऽसत्त्वस्यापि कचित् ज्ञानविषयत्वमात्र न तु ज्ञानजनकत्वमिति कासत्यात्सत्योत्पत्ति ?

यदपि सूचकत्वकथन तदप्ययुक्तम् । स्वप्नगजादिज्ञानस्यैव शुभा शुभसूचकत्वात् । अर्थस्यासूचकत्वात् । ज्ञानस्य च सत्यत्वेन सत्यादेव सत्योत्पत्ते । अधिकमुपरिष्टात् ।

यदपि शास्त्रस्य तत्त्वज्ञानजनकत्वम्—अज्ञाननिवर्तकत्वमेवेति—तद-प्यसत् । ज्ञान ह्यज्ञाननिवर्तकम् । अत कथ शास्त्रस्य साक्षान्निवर्तकता, साक्षान्निवर्तकत्वे च विना प्रयास सर्वेषां बन्धो निवर्तिष्यते । ज्ञानभिन्न निवर्त्यत्वे च जगतो मिथ्यात्वमेव न स्यात् ।

यदपि [पृ १७ १८ ] प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुप लब्धिभेदात् प्रमाणषाड्विध्यवर्णन तत्

'प्रत्यक्षमनुमान च शास्त्र च विविधागमम् ।
त्रय सुविदित कार्यं धर्मशुद्धिमभीप्सता' ॥ इति

प्रमाणविरुद्ध उपपत्तिविरुद्ध चेति प्रत्यक्षानुमानशब्दभेदेन त्रैविध्यमेव यु क्तम् । अन्येषा त्वत्रैवान्तर्भाव इत्यन्यत्र विस्तर ।

यत्तु अन्त करणस्य बहिर्निर्गत्य विषय यासिरूपा या वृत्ति तद्गत स्य चिदाभासस्य विषयचैतन्याभेद प्रत्यक्षमिति प्रत्यक्षलक्षणम्—तन्नोच्यते । चिदाभासो हि नाम चित्प्रतिबिम्ब । विषयचैतन्य नाम विषयावच्छिन्न चैतन्यम् । न त्विद प्रतिबिम्बरूपम् । अस्वच्छे घटादौ तदसम्भवात् । एव च बाह्यचैतन्यस्य प्रतिबिम्बस्य चाभेदकथनमयुक्तम् । न खलु जल

स्थितमाकाशं आकाशप्रतिबिम्बं चैकम् । अथ चिदाभास इति चैतन्यमेव विवक्षितम् । वृत्त्यवच्छिन्नचैतन्यं विषयावच्छिन्नचैतन्यं चाभिन्नं भवति प्रत्यक्षस्थल इत्याशय इति चेत् तदपि न । वृत्तेरप्रतिघातेन विषयदेशं व्याप्त्या चैतन्याभेदसम्पादनेऽपि रूपवान् घट इति प्रत्यक्षे परिमाणादेः कुतो न विषयता ? न खलु परिमाणावच्छिन्नचैतन्यस्य घटावच्छिन्नचैतन्यस्य च भेदोऽस्ति, गुणगुणिनोरभेदादपृथग्भावात् । परिमाणाकारवृत्त्यनुदयादिति चेत् किमिदं वृत्तेः परिमाणाकारत्वम् ? किं तदधीनाकारवत्त्वम्, उत तद्विषयकत्वं, आहोस्वित् तत्सम्बन्धित्वम् । नाद्य, विषयसमर्पिताकारशालित्वस्य ज्ञाने बौद्धैरेवाङ्गीकारादपसिद्धान्तात् । तत्सम्मतावपि समर्पणमेव कुतो नास्तीति प्रश्नासमाधानात् । न द्वितीयः, जडाया वृत्तेरविषयकत्वात् । वृत्त्यवच्छिन्नचैतन्यगतं सविषयकत्वमादायोक्तौ च, 'कुतो न परिमाणविषयकत्व'मिति प्रश्ने तस्यैवानुत्तरत्वात् । न तृतीयः, अन्तःकरणात्मकवृत्तौ घटीयपरिमाणस्य साक्षात्सम्बन्धायोगात् । परम्परासम्बन्धस्य घटसम्बद्धाया वृत्तावनपायात् । इत्थं च रूपी घट इति प्रत्यक्षस्थले रूपाकारवृत्तेरिव परिमाणाकारवृत्तेरप्युदय उक्तरीत्याऽवर्जनीय इति तस्यापि प्रत्यक्षत्वं तत्तदाकारवृत्त्युपहितत्वघटितलक्षणरीत्याऽपि दुर्वारम् ।

किञ्च विषयावच्छिन्नचैतन्याभेदः वृत्त्यवच्छिन्नचैतन्यस्य ज्ञानप्रत्यक्षत्वम् ? विषयावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदो विषयप्रत्यक्षत्वमिति विभाग एव निर्मूलः । वृत्त्यवच्छिन्नचैतन्यस्य यदवच्छिन्नचैतन्याभेदात् ज्ञानप्रत्यक्षत्वम् तस्य विषयस्यैव प्रत्यक्षत्वमिति एकप्रकारस्यैव सुवचत्वात् । ज्ञानप्रत्यक्षत्वे वा प्रमातृचैतन्यस्यैव विषयावच्छिन्नचैतन्याभेदः कुतो नोच्यते । विषयस्यापि विषयाकारवृत्त्यवच्छिन्नचैतन्यं प्रत्यक्षज्ञानमित्येतावदेवाऽलमिति विषयावच्छिन्नचैतन्याभेदकल्पनमपि मुधा । अविद्याप्रतिबिम्बजीववादे च प्रान्तनिष्कृष्टे अन्तःकरणवृत्त्यवच्छिन्नचैतन्यप्रमाता-

दाय जीवस्य प्रमातृत्वं दुर्घटम्। चैतन्यात्मकस्य च जीवस्य सर्वव्यापित्वे स्वत एव घटसम्बन्धात् घटावभास स्यादिति अन्त करणवृत्ति किमर्था। न चान्त करणवृत्ति स्वच्छा घटेन सम्बद्ध्य तस्य स्वच्छतामापादयति। ततश्च घट स्वावच्छिन्न चैतन्यमभिव्यनक्ति तस्य चैतन्यस्य घटावभासकत्वमिति वाच्यम्। घटस्य चैतन्याभिव्यञ्जकत्वेऽन्त करणस्येव घटस्यापि चेतनत्वेन प्रतीत्यापत्तेरित्यादिकमूह्यम्। किञ्च प्रत्यक्षस्थलेऽन्त करणवहिर्निर्गमनादेरननुभूयमानत्वेनाभावात् कथ वृत्तिरूपेण नि सरणम् ? कथतरा च विषयव्याप्ति ? कथतमा चाभेदवर्णनम् ? न चाननुभूयमानत्वेऽपि वस्तुत तत्स्थितौ को दोष इति वाच्यम् मिथ्यात्ववादिभि। अननुभवकाले वस्तुसत्ताङ्गीकारासम्भवात्। रजत हि प्रातिभासिक प्रतिभाससमानकालिकमिति तद्वदेव मिथ्यात्वहेतुना तावन्मात्रसत्ताकत्वानुमानसम्भवात्। रजतदृष्टान्तेन मिथ्यात्वानुमानवदेतदनुमानेऽपि विरोधाभावात्। एव प्रतीतिसमसत्ताकत्वानङ्गीकारे च, विमतं मिथ्या, इत्यनुमाने प्रतीतिसमसत्ताकत्वस्यैव उपाधित्वप्रसङ्गात्। मिथ्यावस्तुना प्रतीतिकालप्रभृति यावद्बाधोदय सद्भावस्वीकारेऽपि प्रतीत प्राक् सत्त्वस्याप्रामाणिकतया वृत्तिनिर्गमनादेरप्रतीतस्यासत्त्वमलाभामावेन प्रत्यक्षस्यैव दुर्वचत्वात्। न केवलमेतावत्। मृषावादिमते एवरीत्या सर्वत्र प्रापञ्चिकपदार्थसृष्टिलोकव्यवहारादिभङ्गो द्रष्टव्य। अस्मद्बुद्धिनिरपेक्षमेव वस्तूत्पत्तिविनाशाद्यङ्गीकारे सत्यवस्तुन एव मिथ्येति परिभाषामात्र स्यादिति न तादृशस्य ज्ञानबाध्यत्वसम्भव इति।

यदपि घटादिप्रत्यक्षस्थले घटादौ अन्त करणवृत्तिव्याप्ति वृत्तिगतचिदाभासव्याप्तिश्च। महावाक्यजन्यात्मसाक्षात्कारस्थले तु जीवब्रह्मणोरक्यस्याज्ञानेनावृतत्वात् तदज्ञानस्य निवृत्तये अह ब्रह्मास्मीत्याकारकवाक्यजन्यान्त करणवृत्तिव्याप्तिमात्रमपेक्षितम्। तस्यैवात्मन स्फुरणरूपत्वात् न चिदाभासव्याप्तिरिति॥ तत्राज्ञानावृतमैक्यं प्रमातिरिक्त वा

तदेव वा, नाद्य, तथा सति तस्य स्फुरणरूपत्वाभावेन चिदाभासव्याप्तेर-प्यावश्यकत्वात् । अखण्डार्थसाक्षात्कारस्य च ब्रह्मातिरिक्ततादृशैकत्वाविषयकत्वेन, तेनाज्ञाननिवृत्त्यसम्भवापत्तेश्च । अन्त्यपक्षे च ब्रह्माकारवृत्तिव्याप्तिस्त्वेत्येतदेव दुर्निरूपम् । तथा हि— वृत्तेर्ब्रह्माकारत्वं न ब्रह्मण्यध्यस्तत्वम्, ब्रह्मावच्छेदकत्वादिकं वा, तस्य प्रपञ्चवृत्त्यन्तरसाधारण्यात् । नापि ब्रह्मविषयकत्वं, जडाया वृत्तौ तदसम्भवात् । न च वृत्त्यवच्छिन्नचैतन्यस्य ब्रह्मविषयकत्वम्, तस्य ब्रह्मानतिरिक्तत्वेन विषयविषयिभावासिद्धेः । स्वप्रकाशत्वेन तस्य तद्विषयकत्वोपपादने च वृत्तिवैयर्थ्यम् । वृत्त्यवच्छिन्नत्वाभावेऽपि चैतन्यस्य स्वप्रकाशत्वसत्त्वात्, सकलवृत्त्यवच्छिन्नचैतन्यस्यापि तथात्वसम्भवेनाविशेषाच्च । वृत्त्यवच्छिन्नचैतन्यस्य ब्रह्मातिरिक्तत्वे चैतन्यान्तराङ्गीकारादपसिद्धान्तः । स्वस्यैव स्फुरणरूपत्वात् चिदाभासव्याप्तिर्नापेक्ष्यत इति स्वोक्तिविरोधश्च । अतो ब्रह्माकारत्वस्य वृत्तौ दुर्निरूपत्वात् ब्रह्मणि वृत्तिव्याप्तिरपि वृत्त्यन्तरसाधारण्यविरहिता वक्तु न शक्यत इति अखण्डार्थसाक्षात्कारः ब्रह्माकारवृत्तिरित्यादेर्दुस्थत्वादेव सविकल्पकनिर्विकल्पकभेदेन प्रत्यक्षद्वैविध्यमपि परास्तम् । धर्मसामान्याविषयकव्यक्तिमात्रविषयकज्ञानस्य लोके प्रसिद्धिविरहेण निर्विकल्पकस्य तादृशस्य स्वीकार एव न शक्य इति च वक्ष्यते ।

यत्तु शब्दादपि तत्त्वमसीत्यादितो निर्विकल्पकप्रत्यक्षं जायत इति तदत्यन्तदुस्थम् । पदस्य शक्यतावच्छेदकविशिष्टकिञ्चिदर्थशक्तत्वेन, तत्समुदायरूपस्य वाक्यस्य नानाधर्मविशिष्टबोधकत्वस्यावश्यकत्वात्, 'तत्त्व'मिति वाक्यस्य निर्धर्मितावच्छेदकबोधजनकत्वे, तादृशज्ञानस्य यत्किञ्चिज्ज्ञानाविरोधित्वाभावेन 'न तत्त्व'मित्यादिभेदज्ञानबाधकत्वासम्भवेन प्रपञ्चबाधस्य दुर्वचत्वाच्च । तत्त्वमित्यत्र प्रतीयमानविशेषणांशपरित्यागेन विशेष्यमात्रग्रहणे लक्षणापत्तेश्च । एवं गृहीतस्यापि विशेष्यमात्रस्यार्थवादस्यानेकपद-

समुदायात्मन प्राशस्त्यलक्षकत्वपक्षे लक्षितमात्रस्यस्येव वाक्यार्थत्वाभावेन तज्ज्ञानस्य पदार्थोपस्थितिमात्ररूपतया तत्त्वमसि वाक्यस्य बोधकत्वासम्भवाच्च । एवं शब्दस्य प्रत्यक्षाजनकत्वादपि इदमयुक्तम् । न चास्माभिः इन्द्रियजन्यत्वं प्रत्यक्षत्वप्रयोजकं नेष्यते । किं तर्हि वृत्त्यवच्छिन्नचैतन्यस्य विषयचैतन्याभेद एव । प्रमाणानि च वृत्तिज्ञानजनकानि, तथा च त्वं सुखीति वाक्यजन्यस्य, अहं सुखीति बोधस्य वृत्त्यात्मकस्य नित्यसन्निकृष्टविषयकत्वेन यथावृत्त्यवच्छिन्नविषयावच्छिन्नचैतन्ययोरभेद इति प्रत्यक्षरूपत्वम् । तथा तत्त्वमसीति वाक्यार्थज्ञानस्यापि अहं तदित्याकारस्येति वाच्यम् । अहं धर्मवान् इति शाब्दबोधस्य प्रत्यक्षत्ववारणाय योग्यपदार्थावच्छिन्नचैतन्यगतस्यैव वृत्त्यवच्छिन्नचैतन्याभेदस्य प्रत्यक्षत्वप्रयोजकत्वमङ्गीकृत्य धर्मस्यायोग्यत्वेन वारणस्यावश्यकतया अहमर्थतद्गतसुखादीनां योग्यत्वेऽपि 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इत्ययोग्यतया प्रमितब्रह्मणि योग्यत्वाभावेन तद्ज्ञानस्य प्रत्यक्षत्वासम्भवात्, ब्रह्मातिरिक्तज्ञानाभावेन विषयपदेन ब्रह्म गृहीत्वा विषयावच्छिन्नचैतन्यसम्पादनस्य दुष्करत्वेन प्रकृते प्रत्यक्षलक्षणसमन्वयासम्भवाच्च, वृत्तेर्ब्रह्माकारत्वासम्भवस्य प्रागुक्तत्वेन वृत्त्यवच्छिन्नचैतन्याभावाच्च, बाह्ये मूर्ते हि पदार्थे वृत्तिर्व्याप्नुवन्ती शङ्खे पिण्डद्रव्यमिव विषयतुल्यं परिमाणं लभत इति युज्येतापि तत्र तदाकारत्वम् । अन्यत्र तु वृत्तेर्विषयाकारत्वं दुर्निरूपमेव, निरवयवे च ब्रह्मणि को वृत्तेराकारः । यदि तु 'अर्थेनैव विशेषो हि निराकारतया धिया' इत्यादुक्तप्रकारेण घटज्ञानं पटज्ञानमित्याद्यनुभवेन ज्ञानस्य विषयस्य च स्वाभाविकः प्रतिनियतो निरूप्यनिरूपकभावो यथा, तथाऽन्तःकरणवृत्तेर्वस्तुनश्च निरूप्यनिरूपकभावः स्वीक्रियते, स एव वृत्तेस्तदाकारत्वमित्युच्यते । तर्हि सर्वत्र वृत्तेरेव सविषयकत्वं ज्ञानशब्दवाच्यत्वं च सुवचमिति जडायास्तस्याः सविषयकत्वं नास्तीत्युक्तिः तदर्थं तत्र चैतन्यप्रतिफ

लनादिकल्पनं च भवन्मतेऽनुपपन्नमेव । ननु अस्वयंप्रकाशायाः प्रकृतिपरिणामान्तःकरणकार्याया कथं स्वभावतः सविषयकत्वमिति चेत्, किं स्वयंप्रकाशस्य वा सविषयकत्वं क्वचित् भवता दृष्टमस्ति । ब्रह्मणः स्वयंप्रकाशत्वेनाभिमतस्य निर्विशेषस्य सविषयकत्वाभावात्, न्यायमते अस्वयंप्रकाशस्य ज्ञानस्यैव वृत्तेः सविषयकत्वे बाधकाभावाच्च, प्रकृतिकार्यायामपि वृत्तौ प्रकृत्यदृष्टस्य धर्मान्तरस्येव स्वप्रकाशत्वस्यापि स्वीकारसम्भवाच्च, स्वप्रकाशत्वं स्वव्यवहारकरत्वं, तच्चार्थान्तरव्यवहारहेतोः वृत्तेरनुमातुं शक्यत एव । न हि चैतन्यसम्बन्धबलात् वृत्तेर्विषयव्यवहारहेतुता, चैतन्येऽपि निर्विशेषे तद्दर्शनेन तदयोगात् । तथा च सविषयकवृत्तेर्बहिर्निर्गताया स्वेन विषयेण साक्षात्सम्बन्धे प्रत्यक्षमिति व्यवहारः, अन्यदा तु परोक्षमिति एतावदेव वक्तव्यमिति वृत्त्यवच्छिन्नचैतन्याभेदादिवर्णनमसङ्गतमापतति । एवं च भवदभिमतरीत्यैव ब्रह्मज्ञानस्य 'तत्त्वमस्यादिवाक्यजन्यस्य प्रत्यक्षत्वस्य दुर्वचतया न भवदभिमतनिर्विकल्पकप्रत्यक्षे किञ्चित्प्रमाणम् ।

यत्तु तत्त्वमस्यादिवाक्यजन्यज्ञानस्य निर्विकल्पकत्वे कथं शाब्दत्वम्; शाब्दज्ञानस्य पदार्थमिथःसंसर्गावगाहित्वनियमादित्याशङ्कायामुक्तम् । न शाब्दं ज्ञानं संसर्गावगाह्येवेति नियमः । किं तु तात्पर्यविषयविषयकमेवेत्येवेति—तन्न; संसर्गावगाहित्वनियमस्य दृष्टस्य स्वीकारे बाधकाभावात् । निर्विकल्पकस्य च निरस्तत्वात् । तात्पर्यविषयविषयकत्वनियम एव तु न भवति; तात्पर्यभ्रमेण जायमानस्य बोधस्य शाब्दबोधत्वासम्भवप्रसङ्गात् । किञ्चापौरुषेये वेदे वस्तुतात्पर्याभावात् प्रकृते तत्त्वमसीत्यादौ एतत्समन्वयोऽपि दुर्घटः । ननु वस्तुतात्पर्यमिति न तत्प्रतीतीच्छयोच्चरितत्वं विवक्षितम् । किं तु तत्प्रतीतिजननस्वरूपयोग्यत्वमेव तात्पर्यमिति चेत्—इदं तात्पर्यं तात्पर्यभ्रमाद्बोधस्थलेऽस्ति न वा । न चेत्; उक्तनियमभङ्गस्तदवस्थ एव । अस्ति चेत्, अनुकूलप्रतिकूलसर्वविधबोधाऽऽ

पादकस्यास्य किमिति कारणत्वकल्पना । किञ्चाश्वपरेऽपि सैन्धवमानयेति वाक्ये लवणतात्पर्यापत्तिः । न च तदन्यप्रतीतीच्छयाऽनुच्चारितत्वविशिष्ट-तत्प्रतीतिजननस्वरूपयोग्यत्वं तात्पर्यमिति वाच्यम्, उभयपरतया प्रयुक्ते वाक्येऽव्याप्त्यापत्तेः । न च तदन्यप्रतीतीच्छयेत्यस्य तदन्यमात्रप्रतीती-च्छयेत्यर्थ इति न दोष इति वाच्यम् । एवमपि नानार्थबोधनार्हस्य वैदिक-वाक्यस्य पूर्वापरपर्यालोचनया नियन्त्रितस्य सर्वतात्पर्यकत्वापत्तेः । तत्रापौ-रुषेये किञ्चित्प्रतीतीच्छयोच्चारितत्वाभावात् । न चेश्वरप्रणीतत्वाङ्गीकारात् वेदे किञ्चित्प्रतीतीच्छयोच्चारितत्वमस्तीति वाच्यम्, ईश्वरानङ्गीकर्तृमीमांस-कादिमतेऽपि बोधदर्शनेन तदनुरूपतात्पर्यस्यैव निर्वचनीयत्वात् तथैव परि-भाषाग्रन्थस्य प्रवृत्तत्वाच्च ।

किञ्च तत्प्रतीतिजननस्वरूपयोग्यत्वं चेत् किं रूपम्? यदि शक्ति-लक्षणादिवृत्तिरूपम् । तर्हि तद्ज्ञानकारणत्वातिरिक्तं तात्पर्यज्ञानकारणत्वं न सिद्ध्यति । यदि समभिव्याहारविशेषरूपम्; तदाऽपि तादृशाकाङ्क्षा-ज्ञानकारणत्वातिरिक्तं तन्न सिद्ध्यति । आकाङ्क्षायोग्यताऽऽसत्त्यादिकल्प-नातिरिक्तयोग्यता च दुर्वचा । वाक्य पृथक्त्वेनैवाकरणत्वस्वीकाराच्च न विलक्षणशक्तिरूपं तात्पर्यं भवितुमर्हति । यद्यपि सर्वत्र कारणानां का-र्यजनकत्वं शक्तिमन्तरेणेति काचन शक्तिः स्वीकार्या स्यात् । तथापि वा-क्यस्य स्वरूपसतः कारणत्वाभावात् मूकभाषितवाक्यस्थल इव च वाक्यज्ञान-स्यैव कारणत्वात् तत्रैव तादृशी शक्तिः स्यादिति तस्याः स्वरूपसत्त्या एव कारणत्वात् ज्ञानमनपेक्षितमिति न तादृशतात्पर्यज्ञानं कारणम् । एवं तदन्य-प्रतीतीच्छयोच्चारितत्वज्ञानं प्रतिबन्धकम् । तदभावश्च कारणमिति लाघवात् स्वीक्रियते; न तु तदन्यप्रतीतीच्छयाऽनुच्चारितत्वविशिष्टतत्प्रतीतिजनन-स्वरूपयोग्यताज्ञानस्य कारणत्वकल्पना । तस्या योग्यतायाः स्वरूपत एव कार्यप्रयोजकत्वसम्भवे ज्ञायमानत्वनिर्वचनस्यानुचितत्वात् । अत ईदृश

तात्पर्यज्ञानस्य कारणत्वाभावात्, अस्य तात्पर्यरूपत्वाभावात्, तात्पर्यज्ञानाभावेऽपि बोधस्यानुभविकत्वाच्च न शाब्दबोधस्य तात्पर्यविषयविषयकत्वनियमः, किन्तु संसर्गावगाहित्वनियम एव । न च तत्त्वमस्यादिवाक्यजन्यज्ञानस्य संसर्गावगाहित्वाभावादव्याप्तिः ; अभेदान्वयावगाहित्वस्य परिभाषायामेव सूचितत्वात् ; यथाऽऽगमपरिच्छेदे, 'अभेदान्वये च समानविभक्तिकपदप्रतिपाद्यत्व'मिति । न चेदं नीलो घट इत्यादिवाक्यमात्रविषयकमिति शङ्क्यम्, समानविभक्तिकपदप्रतिपाद्यत्वरूपनियामकस्योक्तस्य तत्त्वमसीत्यत्राप्यक्षतत्वेन सङ्कोचायोगात् ; व्याख्याविरोधाच्च । न च परिभाषारम्भे संसर्गानवगाहित्वोक्त्या तद्विरोध इति वाच्यम् ; तत्रोक्तस्यानुपपन्नत्वात् । तत्र हि संसर्गानवगाहित्वमुक्त्वा, 'वाक्यजन्यज्ञानविषयत्वे पदार्थसंसर्गत्वं तन्त्र'मिति पश्चादाक्षिप्य, 'न पदार्थसंसर्गत्वं तन्त्रं, किन्तु तात्पर्यविषयत्व'मित्युक्तम् । तत्र तात्पर्यमिदं तत्प्रतीतीच्छयोच्चरितत्वरूपं वेदेऽपौरुषेयत्वादिना न सम्मतम् । तत्प्रतीतिजननस्वरूपयोग्यत्वरूपं तु तात्पर्यम्, अश्वपरतया प्रयुक्तं सैन्धववाक्यं लवणप्रतीतिजननस्वरूपयोग्यत्वस्येव तत्त्वमस्यादिवाक्ये मतान्तरसम्मतान्यादृशार्थप्रतीतिजननस्वरूपयोग्यत्वस्यापि सत्त्वादखण्डार्थमात्रपरत्वासाधकत्वात् प्रकृतानुपयोगि । न चाखण्डार्थप्रतीतीच्छयोच्चरितत्वमस्य सुवचम् ; अपौरुषेयत्वात् । अतस्तात्पर्यविषयत्वमपि वाक्यजन्यज्ञानविषयत्वे न तन्त्रम् । न च तर्हि पदार्थसंसर्गत्वं कथं तन्त्रम् ? अनभिमतसंसर्गस्यापि मानापत्तेरिति वाच्यम् ; न हि यो यः संसर्गः स प्रकृतवाक्यजन्यज्ञानविषय इति ब्रूमः । किन्तु शाब्दबोधत्वं यत्र तत्र किञ्चित्संसर्गावगाहित्वमावश्यकमिति । कश्च संसर्गो भासत इत्यत्र नियामकं त्वन्यत् । न च तत्त्वमस्यादिवाक्येऽभेदसंसर्गावगाहनस्वीकारेऽपि न निर्विकल्पकत्वक्षतिरिति वाच्यम् । प्रतिपदं विभिन्नधर्मावच्छिन्नोपस्थापनाऽभावे बोधासम्भवेन तदावश्यकत्वे निर्विकल्पकत्वाप्रसक्तेरित्यलम् ।

यत्तु जगतो ब्रह्मभिन्नत्वेन मिथ्यात्वं ज्ञायत इति तदपेक्ष्यमनुमानमिति—तन्न ; प्रतिपक्षोपाधौ बाधादर्शनात् । हेतोरप्रयोजकत्वाच्च । न च प्रतिपक्षोपाधौ बाधितत्वस्य दोषविशेषजन्यत्वादेर्वा मिथ्यात्वप्रयोजकत्वापेक्षया लाघवाद्ब्रह्मभिन्नत्वस्य प्रयोजकत्वं युक्तमिति वाच्यम् । तदपेक्षया वस्तुत्वस्य प्रयोजकत्वेऽतिलाघवमिति । विमतं मिथ्यावस्तुत्वादित्यनुमानेन ब्रह्मणोऽपि मिथ्यात्वापत्तेः । ब्रह्मणस्सत्यत्वग्राहिश्रुतिविरोधान्नेदं युक्तमिति चेत् —जगतः सत्यत्वग्राहिश्रुतिप्रत्यक्षादिसर्वप्रमाणविरोधादिदमपि न युक्तम् । अधिष्ठानं विना कुत्राध्यास इति चेत्—दोषादिकं सत्यभूतं विना केनाध्यास इत्यलमिदानीम् ।

उपमानार्थापत्त्यनुपलब्धीनां पृथङ्निर्दिष्टाना (पु. १८)मतिरिक्तप्रमाणत्वाभावश्च । न्यायपरिशुद्ध्यादिष्वाचार्यैर्वर्णीति किमत्र प्रसङ्गेन, अथापि किञ्चिदुच्यते— गवयं गोसादृश्यज्ञानमुपमानम् । गवि गवयसादृश्यज्ञानं पश्चाज्जातमुपमितिरिति ह्युच्यते । तत्र गवये गोसादृश्यज्ञाने सति गवयनिष्ठसादृश्यनिरूपकत्वं गवि ज्ञातमेवेति तस्य सादृश्यनिरूपकत्वरूपहेतो गवि गवयनिरूपितसादृश्यस्य च सामानाधिकरण्यसत्त्वादनुमानमेवात्र निराबाधम् । न्यायकुसुमाञ्जलौ च 'साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते । अर्थापत्तिरसौ व्यक्तमिति चेत् प्रकृते न किम्' इत्युक्तमनुसन्धेयम् । गवयो गवयपदवाच्य इत्युपमितिस्तु न्यायविदादृता न भवत्सम्मता । साऽपि न भवति । गवयस्य प्राणित्वादेव विलक्षणजातिमत्त्वेऽनुमिते गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यावगतसादृश्यस्य च गुरुभूतत्वात् । गवयपदप्रवृत्तिनिमित्तत्वासम्भवे बुद्धे गवयत्वजातिमान् गवयपदवाच्य इत्यनुमिते अपेक्षं जातत्वात् । गवयपिण्डदर्शनकाले तु प्रागभूद्धेतुगवयत्वजातेः प्रत्यभिज्ञामात्रम् । अयमसौ गवय इति । अतो नोपमानमतिरिक्तम् ।

व्यतिरेक्यनुमानस्य पृथगनङ्गीकारेऽपि अर्थापत्तिस्थले यत्र रात्रिभोज-

नाभावः तत्र दिवाभोजनविरहविशिष्टपीनत्वाभाव इति अभावस्यैवोपस्थिति-ग्रहणे व्यतिरेकव्याप्त्याऽन्यथाऽसिद्धिमनुमाय रात्रिभोजनमनुमिनोतीति न प्रमाणाधिक्यम् । यथा झटिति प्रचुरा प्रवृत्तिरम्भसि पिपासूनां जायत इत्येवं सत्यपि पिपासोपशमनशक्तिरम्भसि न प्रत्यक्षा । किं त्वनुमेयैव । एवमेवात्रापि ज्ञातव्यमिति ।

अनुपलब्धेर्मानान्तरत्वमपि भवन्मते दुरुपपादम् । अधिकरणेन्द्रियसन्निकर्षस्यापेक्षिततया अभावेऽपि संयुक्तविशेषणतारूपसन्निकर्षस्य सुवचत्वेन अधिकरणग्रहे इन्द्रियस्योपक्षीणत्वकल्पने प्रमाणाभावात् , अधिकरणगतरूपादिग्रहणाय परम्परासन्निकर्षस्यापि हेतुत्वात् । समवायस्य वेदान्तिभिरनङ्गीकारेण गुणादिषु यथेऽधिकरणाभिन्नत्वरूपसन्निकर्षस्यैव वक्तव्यत्वेन तस्यात्राप्यनपायात् । भवन्मते प्रमात्रभिन्नत्वस्यैव विषयप्रत्यक्षतारूपतया अधिकरणेन्द्रियसन्निकर्षबलात् अधिकरणरूपविषयावच्छिन्नचैतन्यस्यान्तःकरणावच्छिन्नचैतन्यस्य चाभिन्नत्वात्, अधिकरणावच्छिन्नचैतन्यस्य च तद्वृत्त्यभावरूपधर्मावच्छिन्नचैतन्याभेदस्य स्वत एव सत्त्वात्, अभावस्य प्रमातृभूतान्तःकरणावच्छिन्नचैतन्यसत्तानतिरिक्तसत्ताकत्वेन तदभिन्नत्वमस्तीति अभावप्रत्यक्षत्वस्याङ्गीकरणसम्भवेनानुपलब्धिरूपमानान्तरासम्भवाच्च । न चाहं धर्मवानित्यादिधर्माधर्मविषयकबोधस्य प्रत्यक्षत्ववारणाय विषययोग्यत्वस्य प्रत्यक्षत्वे तन्त्रताया इष्टतया अभावस्य चायोग्यत्वान्न प्रत्यक्षत्वमिति वाच्यम्—'इह योग्य इदमयोग्य'मित्यत्र फलबलकल्प्यः स्वभाव एव शरणं'(परिभाषा)मित्यस्य सर्वस्वीकृतत्वेन अभावं साक्षात्करोमीत्यनुभवबलादभावे योग्यताया अक्षतत्वात् । अनुपलब्धिरूपमानान्तरकल्पनाय तदयोग्यत्वकल्पनस्य चायुक्तत्वात् । एतेन अभावज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणमतिरिक्तमेव , अधिकरणवृत्त्यपेक्षयाऽनुपलब्धिजन्यायाः अभाववृत्तेरतिरिक्तत्वात्—इति शङ्काऽपि निरस्ता ; रूपवान् घट इत्यादौ रूपे घटाद्याकारवृत्त्यतिरिक्ताया

अनतिरिक्ताया वेन्द्रियवृत्तेरिव अभाववत् भूतलमित्यत्राभावांशेऽपीन्द्रियवृत्ते स्वीकारे बाधकाभावात् । अनुपलब्धिजन्यातिरिक्तवृत्तिस्वीकारेऽपि तादृश वृत्तिकारणतयाऽनुपलब्धेः प्रमाणान्तरत्वकल्पने सुरादु साधात्मधर्मविषयक- वृत्ते रेन्द्रियमात्रिकर्षाधीनाया अतिरिक्तया तत्करणस्यापि कस्यचिद्वाच्य त्वेन प्रमाणषाड्विध्यभङ्गप्रसङ्गात् ।

एवं शुक्तिरूप्यादिस्थल इन्द्रियजन्यशुक्तिवृत्त्यपेक्षया रजतविषयका- विद्यावृत्तेरतिरिक्ततया तत्करणस्यापि कस्यचिद्वाच्यतया प्रमाणषाड्विध्यभङ्ग प्रसजति । न च रजतवृत्तेर्भ्रमत्वात् न तदर्थमतिरिक्ते प्रमाणकल्पनापत्ति रिति वाच्यम् , इदं रजतमिति ज्ञानस्य रजते पारमार्थिकत्वांशे भ्रमत्वेऽपि अनिर्वचनीयरजतोत्पत्तिस्वीकारेण वर्तमानरजतावगाहिन्या वृत्ते रजतत्वविशि- ष्टधर्म्यंशे प्रमात्वात् । न चाबाधितवस्तुविषयकज्ञानत्वं प्रमात्वम् । तच्च रजतवृत्तौ न सम्भवतीति वाच्यम् , येन रूपेण यस्याभावो गृह्यते , तेन रूपेण तस्य बाधितत्वेऽप्यन्यरूपेण तस्य बाधितत्वे प्रमाणाभावात् , अनुभव- विरुद्धत्वाच्च । अत पारमार्थिकत्वेन रूपेण तस्य बाधितत्वेऽपि रजतत्वेन रूपेण तस्याबाधितत्वादबाधितार्थविषयकत्वरूपं प्रमात्वमक्षतम् । किंचाबाधि तार्थविषयकत्वं न तावत् परिभाषाद्व्दिशा संसारदशाकालिकज्ञाननिवर्त्य , प्रातिभासिक , आगन्तुकदोषजन्यो य पदार्थस्तद्भिन्नविषयकत्वरूपम् , रक्त स्फटिक इति ज्ञानस्य प्रमात्वापत्त । तत्र सान्निहतजपाकुसुमलौ हत्यनैव निर्वाहण मिथ्यावस्तुकल्पनाऽभावात् । तदिदं निरूपयिष्यते । अतस्त दनुसारेण बाधितत्वं गृह्यमाणप्रकाराभाववत्त्वम् । अबाधितत्वं च गृह्यमाण प्रकाराभाववद्भिन्नत्वं गृह्यमाणप्रकारवत्त्वमेवेति, अबाधितार्थविषयकत्वं तद्वति तत्प्रकारकत्वरूपमेवेति रजतवृत्तेरपि रजतत्ववति रजतत्वप्रकारकत्वसत्त्वात् प्रमात्वमव्याहतमेव । तथा च तद्विषयवृत्तिं प्रति करणस्यापि प्रमाणत्वेन सुखादिवृत्तिकरणस्येव प्रमाणषाड्विध्यभङ्गकत्वमापद्यते ।

एवं तत्त्वमस्यादिवाक्यस्यापि प्रत्यक्षकरणस्य इन्द्रियातिरिक्ततया प्रमाणान्तरत्वापत्तिः । अत्र प्रत्यक्षप्रमाकरणं प्रत्यक्षमित्येव तत्प्रमाणलक्षणस्य वक्तव्यतया तथैव परिभाषायामुक्ततया चानुपलब्धेः प्रत्यक्षप्रमाकरणतया प्रत्यक्षान्तर्भूतत्वेन न षष्ठप्रमाणत्वम् । अपि च तार्किकाः रूपादिविषयप्रत्यक्षे क्लृप्तेन संयुक्तसमवायादिना सन्निकर्षेणाभावप्रत्यक्षं न सम्भवति, अभावस्यासमवेतत्वादित्यालोच्य अनुपलब्धिमात्रेणानिर्वाहं च निरूपयन्तो विशेष्यविशेषणभावाख्यं सन्निकर्षमपि कल्पयित्वाऽभावप्रत्यक्षस्येन्द्रियजन्यत्वमातिष्ठन्ते । एवं स्थिते कैमुतिकन्यायसिद्धमिदमस्मन्मते; यतोऽस्माभिः समवायानङ्गीकारात् रूपादिप्रत्यक्षनिर्वाहायेन्द्रियसंयुक्ताधिष्ठानविषयकप्रत्यक्षे इन्द्रियसंयुक्ताधिष्ठानत्वं सन्निकर्ष इत्येव वक्तव्यम् । अतोऽभावप्रत्यक्षस्यापि क्लृप्तकार्यतावच्छेदकाक्रान्तत्वात् क्लृप्तसन्निकर्षजन्यत्वमक्षतमिति दुर्वारैवाभावविषयेऽपीन्द्रियाधीनतेति अनुपलब्धेर्मितिकरणत्वरूपमानत्वस्यैवासिद्धौ कुतो मानान्तरत्वशङ्केति । तथा च (पृ. १८) अभावप्रत्यक्षे इन्द्रियस्याकरणत्वं अभावे इन्द्रियार्थासन्निकृष्टत्वं अनुपलब्धेरिन्द्रियाद्भिन्नतया प्रमाणासाङ्कर्यं च भवदुक्तमयुक्तम् ॥

यत्तु— 'अत एवाहमर्थस्य ज्ञातृत्वं च प्रामाणिकमपह्नुत्याहङ्कारस्यैवाहमर्थत्वं ज्ञातृत्वं चेत्युक्तम्' । तत्र प्रामाणिकत्वस्थापनं पश्चात् करिष्यते । इह त्वेतावदुच्यते, भवता हि 'ज्ञाताऽहङ्कार' इति (पृ. १३) प्रागुक्तम् । अत्रापि (पृ. १८-१९) 'अत एव तत्र ज्ञातृत्वमन्तःकरणस्य' इत्युक्त्वा, 'ज्ञातृत्वमपि नात्मनः, किन्त्वहमर्थस्य । अहमर्थस्तु नात्मा, किन्त्वविद्यापरिणामान्तर्गतोऽहङ्कार' इत्यभिहितम् । तत्राहङ्कारोऽन्तःकरणे किमभिन्न उत भिन्न? नाद्यः, अन्तःकरणस्य पञ्चभूतसात्त्विकांशसमष्टिजन्यतायाः प्रागुक्तत्वात् अहङ्कारस्य च महत्तत्त्वानन्तरस्य तन्मात्रपूर्वभाविनस्ततोऽन्यत्वात् परिभाषायां (नि. प.) 'तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि' इति वच

नोदाहरणेन 'अष्टौ प्रकृतय' इति प्रसिद्धप्रकृत्यष्टकान्तर्गतमूलप्रकृत्यतिरिक्तमहदहङ्कारतन्मात्रपञ्चकरूपप्रकृतिसप्तकाङ्गीकारदर्शनात् भाष्यादावपि तथैवोपलम्भात् अहङ्कारस्य तादृशस्य निषेधासम्भवात् । नान्त्य ; अन्तःकरणपरिणामाख्याया वृत्तेरेव ज्ञानतया तदाश्रयत्वरूपज्ञातृत्वस्यान्तःकरण एव सम्भवेन , तथैव भवता वर्णितत्वेन च तद्भिन्नेऽहङ्कारे तस्य वस्तुतस्सद्भावासम्भवादिति ॥

यदपि(पु १९)ब्रह्मज्ञानेऽधिकारी साधनचतुष्टयसम्पन्न एवेति–तत्र किं श्रवणोपयोगित्वं साधनचतुष्टयस्य, उत साक्षात्कारोपयोगित्वम् । नाद्य ; भवतैव 'तस्माच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं पश्येत्' (बृ. ४. ४. २३), 'शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ समान' (शाट्या ५) इति वाक्योदाहरणेन साक्षात्कारसाधनत्वस्यैव प्रतिपादनात् , श्रवणसाधनत्वस्य प्रमाणादलाभात् , भगवता बादरायणेनापि, 'शमदमाद्युपेतः स्यात्' इति पश्चादेव तदपेक्षावर्णनात् । नान्त्य , श्रवणाधिकारत्वेन तस्य भवता भवदीयैश्च गृहीतत्वेनापसिद्धान्तात् । किञ्च साधनचतुष्टयसम्पन्न एवेति एवकारेण किं व्यावर्त्यते । विशिष्टाद्वैतिभि अथशब्दार्थानन्तर्यप्रतियोगितया समादृत कर्मविचार इति चेत्– किं कर्मविचारस्याधिकारत्वं न सम्भवति, येन स व्यावर्त्येत । न च कर्मविचारोऽनपेक्षित , तदभावे भवदीयसाधनचतुष्टयस्यैवासम्भवात् । भवत्साधनचतुष्टये ह्यथ कर्मोऽवश्यमेव भवताऽपि स्वीकार्यं , यत्प्रथमत 'इदं नित्यं इदमनित्य'मिति विवेकं लब्ध्वा, अत एव हेतोरनित्ये इहामुत्र फले विरज्य , तदौपयिककर्मानारम्भेण शान्तो दान्तश्च भूत्वा , नित्यवस्तुलिप्सारूपा मुमुक्षा निरन्तरमाप्नोतीति । इयं च दशा न फलेतिकर्तव्यतादिपरिज्ञानहेतुकर्मस्वरूपविचारं विना भविष्यति । न च विशिष्य कर्मतत्फलानित्यत्वज्ञानमन्तरेण कश्चित् विरज्येत् । अत एव भाषितम् ।

'नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न सम्पत्स्यन्ते' इति । अत पूर्वपरिगणितानामंशानां कर्मविचारजन्यत्वात् साधनचतुष्टयवादिना तदनपेक्षा वा तस्याधिकारित्वासम्भवो वा न मन्तुं शक्यते। एवञ्च विशिष्य तत्तन्निर्देशं विहाय यदुक्तौ तेषां सर्वेषामर्थतः सिद्धिः तस्य कर्मविचारस्य तत्त्वेन निर्देशे च ब्रह्मसूत्रकारिष्यमाणसगुणब्रह्मोपासनतदितिकर्तव्यतारूपकर्मकलापतद्बोधकत्वापादकविषयविशेषविचारपूर्वमीमांसान्यायातिदेशप्रकारादिसर्वांशोपयोगिसाधनं प्रदर्शितं भवति । 'परीक्ष्य लोकान् कर्मचितान्' इति श्रुत्यर्थोऽपि रक्षितोऽनुसृतश्च भवति । व्याख्येयग्रन्थक्रमानुसरणं च व्याख्यानस्य समर्थितं भवति । संसारसङ्कटपुण्यपापादिकमश्चैवमौत्सर्गिकः परिशीलितो भवतीति ब्रह्मयोगिनः प्रामाणिकस्य कर्मविचारस्य व्यावर्तनं अभिमन्तुमपि न शक्यते । एवं च वराहोपनिषद्वाक्यम् —

'साधनं प्रभवेत् पुंसां वैराग्यादिचतुष्टयम् ।
नित्यानित्यविवेकश्च इहामुत्र विरागता ।
शमादिषट्कसम्पत्तिर्मुमुक्षा तां समभ्यसेत् ॥' (२. ३)

इति भवदुद्धृतं यदि प्रमाणं तदाऽपि कर्मविचारसिद्धाशकथनरूपमिति न तस्य कर्मविचारनिषेधकत्वम् । अतश्च शमदमादिरपि श्रवणात् पूर्वं सम्भवन्नेव ग्राह्यः । न साक्षात्कारनिर्वर्तनाय पेक्षितो यावांस्तावानिह सुवच ॥ विनैव कर्मविचारं हितकारित्वानर्थविस्रम्भात्सम्पन्नमुमुक्षो भविष्यतीति चेत् — तादृशस्तस्य हितकारिणो वाक्यादेवाहं ब्रह्मास्मीत्यपि ज्ञास्यतीति किमर्थस्तस्यैतावान् वेदान्तविचारः । ननु ब्रह्मादिकमेव नास्तीत्यर्थमीमांसकसंक्षोभितहृदयस्य निश्शङ्कत्वाय ब्रह्मविचारोऽपेक्षित इति चेत्—तादृशहृदयस्यैव कर्मफलमप्यक्षय्यमित्याशङ्कापरिहाराय कर्मविचारोऽपि यथावदपेक्षित एव । एवं अत्र येषु फलेषु विरागो लिप्सित तेषां तदुपायानां च साक्षात्प्रतिपादकस्य वेदभागस्य कर्मकाण्डस्य यथावत्परिशीलनं विना प्रकारा-

न्तरेण शास्त्रान्तरादिना कथञ्चित् सम्भवत्प्राप्तिकोऽपि नित्यानित्यवस्तुविवेक कर्मकाण्डविरुद्धत्वशङ्कया विश्वसनीयत्वविरहेण तत्र तत्र कर्मफलनिन्दनस्य 'न हि निन्दा'न्यायेन उपपन्नत्वसम्भावनया च स्वयमप्रतिष्ठित एव भवतीति, अवश्य कर्मकाण्डविचार एतावताभ्यर्हितापायो लक्ष्यते। तत्रापि जैमिनीयमीमांसामार्गमेव पीन पुन्येन स्वाभिमतार्थोपयोगितया गृह्णन् भगवान् बादरायण स कृतमेव कर्मविचारमवश्यापेक्षितमाकलयतीति औचित्यचिन्तनया सुदृढमवधार्यत इतीदृशस्य कर्मनिर्णयस्य साधनत्व निराबाधम्।

'शमादीनामन्तरङ्गसाधनत्व, श्रवणादीनां त्रयाणान्त्वन्तरङ्गतरसाधनत्व' इत्यपि न युक्तम्। श्रवणमनननानन्तरमपि शमादे साक्षात्कारपर्यन्तमपेक्षितत्वात्। पर तु शमदमादेर्ब्रह्मातिरिक्तकर्मादिविषयकत्वात्, श्रवणादेश्च ब्रह्मविषयकत्वादस्यैव साक्षात्सम्बन्धित्वमितीद वैलक्षण्यमुचित भावयितुम्॥

यदपि—'कर्म तु चित्तशुद्धिद्वारा ज्ञानसाधनमिति बहिरङ्गम्' इति तावता ज्ञानसाधनत्वस्य कण्ठोक्त्वेन कर्मविचारस्य साधनत्वमपाकृत न भवति। किं तु आवेदान्तचतुरध्यायीश्रवणमवाप्तिं प्रत्युपयोगितया चित्तशुद्धये कर्मणामनुष्ठेयत्वसिद्ध्या कर्मविचारस्य पूर्ववृत्तत्वमेव समर्थित भवति। किञ्च 'ब्रह्मलोकप्रापकसुकृतकर्मविशेषानुसारिणी ब्रह्मलोकच्छाऽपि कस्यचित् जायमाना भाविप्रतिबन्ध एव (पृ २१) इति सगुणब्रह्मप्राप्ते सांसारिकफलतया हेयत्वेन कीर्तनात् वेदान्तश्रवणपूर्वभाविनी मुमुक्षा किं निर्गुणब्रह्मप्राप्तीच्छामात्रमित्यभिमतम्। उत सगुणप्राप्तेरपि क्रममुक्तित्वाच्चादिच्छाऽपि मुमुक्षेति। नाद्य, तथा सति इह तावद्विवेकिन विरक्तस्य चतुरध्यायी नारब्धव्या, तत्र सगुणब्रह्मतदुपासनतदुपकरणादेरेव वर्णनात्। अतो न तादृशमुमुक्षाया इदन्तवेदान्तार्थश्रवणसाधनत्वम्। न खलु श्रीशङ्कराचार्यादिभिरपि निर्गुणब्रह्मप्रतिपादकतया, वेदान्तानां सगुणब्रह्मपरत्वशङ्कापक्षपूर्वक निर्गुणब्रह्मपरत्वस्थापनपरतया वा सूत्राण्यभ्योज्यन्त। नान्त्य, तथा हि सति

सगुणब्रह्मोपासनसाधनप्रभृत परमार्थं तत्परिकरत्वेन स्वेनैव वक्ष्यमाण धर्मं येन विचारितं, न विचारयिष्यते च, तादृशानधिकृत्य सूत्राणि प्रणिनायेतीदं कथका युज्यताम् । अत प्रकृतचतुरध्यायीविचारः कर्मविचारनापेक्ष एव । अतस्साधनचतुष्टयसाधनत्वसमर्थनेन कर्मविचारस्य साधनत्व न शक्यं प्रतिपत्तुम् । विशिष्य नित्यानित्यवस्तुविवेकादिपदार्थस्वरूपशोधनप्रत्युदाहरण दिक् चान्यत्र द्रष्टव्यम् ।

यत्तु, 'शब्दशक्तिविषययुक्तिभि निरूपणं श्रवणम् । तेन वेदान्तवाक्यान्यद्वितीये ब्रह्मणि प्रमाणं नवेति संशयनिवृत्तिः । वस्तुतत्त्वविषयं युक्तिभि निरूपणं मननम् । तेन प्रपञ्चसत्यत्वजीवपरभेदादिसंशया निवर्तन्ते । निदिध्यासनेन ब्रह्मस्थितिमात्रधारणरूपेण अहमज्ञ इत्यादिभ्रमोऽपैति । एवं संशयभ्रमनिवृत्तौ प्रतिबन्धाभावे अहं ब्रह्मास्मीत्यपरोक्षप्रमा जायते'— (पु २०) इति तत्रापि विचार्यते । एवं श्रवणानन्तरमप्यनुवर्तमानवस्तुविषयसंशयनिवर्तकत्वं मननस्य प्रतिपादयता भवता हीदमुक्तं भवति, यत्, यद्यपि वेदान्तवाक्यान्यद्वितीयब्रह्मपरा एव शक्तिरस्ति, न त्वन्यथा । अथापि वस्तुतत्त्वमन्यथैव स्यादुतान्यथेति शङ्कापरिहारायानुकूला युक्तयः परिशील्यन्त इति । तथा चेत् शङ्कमानो वस्तुतत्त्वविरुद्धमेव वेदान्तोक्तं स्यादिति चेन्मन्येत–तर्हि वेदाप्रामाण्य पर्यवसानादिति मूले कुठारः । एवञ्च वेदान्ताभिहितार्थस्य संशयितत्वात् श्रवणस्य निर्णयरूपत्वोक्ति तेनाप्रामाण्यसंशयनिवृत्त्युक्तिश्च विरुद्ध्येते । वेदान्तस्य प्रमाणतयाऽप्रमाणतया वाऽद्वितीयब्रह्मप्रतिपादकत्व निर्णयं परं कथञ्चित्स्यात् । यदि वस्तुतत्त्वाविरोधेन वेदस्यान्योऽर्थस्स्यादितिव्यवस्थति, तदाप्यद्वितीये ब्रह्मणि वेदान्तप्रामाण्यबुद्धिरेवाप्रतिष्ठितेति न श्रवणं संशयनिवृत्ति । तस्मादित्थं विषयव्यवस्था विधूय वेदप्रामाण्यस्य प्रागेव सिद्धतया गुरुमुखाच्छ्रुत एव किं वेदार्थ, उतान्य इति शङ्कापरिहारायाद्वितीयब्रह्मपरत्वस्थापनायैवानुकूलतर्को वस्तुतत्त्वशोधन

मुखेन प्रवर्त्यन्त इति विवेचनं भवतो युक्तम् । यदपि, ध्यानेन भ्रमनिवृत्तिरिति—तदर्थपरोक्षप्रमारूपं वृत्तिज्ञानं किमर्थं स्वीक्रियते । भावरूपाज्ञाननिवृत्त्यर्थमिति चेत्, तर्हि तन्निवृत्तिपर्यन्तं भ्रम उदेष्यत्येवेति कथं भ्रमनिवृत्तिः । ध्यानात् प्राक्तनास्तु भ्रमाः स्वयमेव क्षणिकतया विनंक्ष्यन्तीति न तेषामिति निवृत्त्यपेक्षया, अन्यथा ध्यानादपि भ्रमनिवृत्तिः, ततोऽपरोक्षप्रमायां जातायां तथापि भ्रमनिवृत्तिरित्यङ्गीकारे भ्रमनिवृत्त्यपरोक्षप्रमयोः परस्पराश्रयापत्तिश्च । तस्मा-मननमाश्रितमात्र एव निवेशितत्वेन विषयान्तरासंस्पर्शाद्भ्रमो नावकाशं लभते इत्येव भ्रमनिवृत्तिशब्दार्थो वक्तव्यः । अतश्च त्वदुक्तेः मनसोऽन्यत्र प्रवृत्त्य भ्रम्यति विहरति चेत्यनुभवसिद्धं स्वीकृतेऽपि ईदृशानुभवानुसारेणापरोक्षप्रमाया जातायामपि मध्ये भ्रममूलभूतस्य भावरूपाज्ञानस्य तथा निवृत्तिर्वक्तुं शक्यते ; कार्येण कारणसत्त्वस्यानुमानात् । अनिवृत्तौ अज्ञानादर्मिथ्यात्वं न स्यादिति चेन्माभूत् । अज्ञाननिवृत्तावपि संसारानुवृत्तिकथनं तु निराकरिष्यते । 'भिद्यते हृदयग्रन्थि'रिति शास्त्रेण च साक्षात्कारस्य कर्मसंशयग्रन्थ्यादिनिवर्तकत्वमेवोक्तम्, न पुनर्जगन्निवर्तकत्वम् । शुक्तिरूप्यादिस्थले च पूर्वं रजतभ्रमनिवृत्तिः, पश्चाद्रजतस्योपादानाविद्यानिवृत्तिरित्येवमंशद्वयं नानुभविकम् ; एवं निवर्तकज्ञानद्वयमपि, अधिष्ठानज्ञानस्यैकस्यैव तत्र दृष्टत्वानुभवात् । तस्मात् ध्यानेन भ्रमनिवृत्तिः, साक्षात्कारेणाज्ञाननिवृत्तिः इत्यादिकमखिलमनुपपन्नम् ।

यदपि—कर्णो व्याधकुल एव वर्धितो राधेयत्वेनात्मानं गृहीतवान् शापावमानादिलक्षणं दुःखं प्राप्य सूर्येण 'कौन्तेयस्त्वं न राधेयः' इति स्मारितनिजरूपः राधेयत्वनिवृत्तौ दुःखं त्यक्त्वा कौन्तेयत्वप्रयुक्तं श्रेयः प्रापेति दृष्टान्तवर्णनम्—तत्र कथं कर्णो व्याध आसीत्? कथं च सोऽननुभूतं क्षत्रियत्वकौन्तेयत्वादिनिजरूपं संसार? कथं च शापादिदुःखत्याग इति भवतैव विमर्शनीयम्, सर्वस्य प्रमाणयुक्तिविरुद्धत्वात् । तत्र राधेयत्वोपचितनिवृ-

ष्यादिकथनं तु शुक्तिरूप्यादिस्थलकल्पितस्वमतवासनावशायत्तमिति न तत्रापि प्रमाणमस्ति ।

यत्तु, संसारदशायामविद्याकल्पितेन शास्त्रेणोत्पादितया स्वगोचरविद्यया .... अविद्यानिवृत्तौ नित्यसिद्धनिरतिशयानन्दस्वरूपेणावतिष्ठत इति—तत्र यदि ब्रह्म स्वयमेव शास्त्रं स्वविद्यया कल्पयति, तर्हि कल्पनावसर एव तदर्थमपि विजानातीति तत्र एवाविद्यानिवृत्तौ निराबाधायां क्व गुरुशिष्यादिकल्पनाव्यापकाश इति विमृश्यताम् । शास्त्रकल्पनात् प्रागेवार्थज्ञाने शास्त्रमपि व्यर्थम् । अर्थज्ञानेऽसंजातविद्य कल्पितत्वेऽपि गुर्वादिकल्पनात् प्राग्यो ज्ञात एवेति । न खलु ज्ञानस्यान्तरेणद्वाराऽविद्यानिवर्तकत्वम् । येनेदमेव निवर्तकम्, तदज्ञाननिवर्तकमिति नियम्येत । कथं च संसारदशायां शास्त्रकल्पनासमर्थं स्वदुःखनिवृत्तये स्वयमेव न प्रवर्तते । कथं च कमपि समर्थशिष्यान्तरं सपदि स्वयमनुपाय एवमनन्तमनन्तसंसारसागरान्तःपातमात्मनः कल्पयति । नित्यशुद्धस्य किमस्ति दुःखमिति चेत्—तर्हि वृथैवायमद्वैतोपदेशग्रन्थनिर्माणपरमतखण्डनादिपरिश्रम इति मूकीभवितव्यम् । एवंविधाभिसन्धिपरिष्कृतप्रकृष्टमानसानां धर्माधर्मतदुपायतदाचरणपद्धतिप्रभेदा अपि न कथञ्चित्सम्भवन्तीति सर्वविप्लवप्रसङ्ग इत्यलमतिप्रसङ्गेन ।

यत्पुनः—'इयञ्च मुक्तिर्जीवतोऽपि भवति बाधकाभावात्' इत्यादिवचनम्—तत्र प्रमाणमन्यद्दृष्टस्य जीवन्मुक्तशब्दस्य वयमपि कञ्चिदबाधितमर्थं ब्रूम एव । उक्तञ्च भगवता बादरायणेन— 'अमृतत्वं चानुपोष्ये'ति । भवदभिमता पुनर्जीवन्मुक्तिर्भवन्मताऽऽलम्बनेनैव विचारे क्रियमाणे किं शक्योपपादना? इत नेति परं विचारणीयम् । मुक्तिशब्दो ह्यविशेषादसङ्कोचात् सर्वस्मादपि बन्धान्मुक्तिमाह । बन्धश्च न कश्चित् पारमार्थिकोऽस्तीति व्यावहारिकसर्वनिवृत्त्यपेक्षिताया मुक्तिशब्दमुख्यार्थताया विवक्षणीयायां च सत्यां तत्र प्रारब्धकर्मशेषकृतस्थूलशरीरधारणभोजनादिविविधव्यापारव्यूहविधायिजीवन-

विशेषमात्रस्य परित्यागेन तदतिरिक्तान्यानिवृत्तिरेव मुक्तिशब्दमुख्यार्थ इति कथनं नोपपत्तिसहम् । कर्मविशेषाधीनस्य तस्य बन्धत्वमेव नास्तीत्यप्यनुभवविरुद्धम् । क्षुदादेः पारमार्थिकदुःखजनकत्वं च सर्वबद्धसाधारणमिति सर्वेऽपि सर्वदा मुक्ता एवेति नैष जीवन्मुक्ते विशेषः । तस्य दुःखाभावेऽपि अन्यद्दृष्ट्या तथा बुद्धिरिति चेत् —इदमपि सर्वदैव सर्वेषां सुवचम् । न ह्यक्लृप्तं किञ्चिदस्ति । मिथ्याभूतमूलाविद्योच्छेदे तत्कार्यसर्वोच्छेदेऽशमात्रपरिशेषणमनुपपत्तिमत्तम् । कतिपयशक्तिविशेषाविनाशश्च शक्तेरपि मिथ्यात्वेन परिशेषयितुमशक्यत्वादेव दुर्वचः । विस्तरश्च पश्चात् ।

यानि तु जीवन्मुक्त्यवस्थाप्रयोजनानि ज्ञानरक्षा, तपः, विसंवादाभावः, दुःखनिवृत्तिः, सुखाविर्भावश्चेति पञ्च परिगण्यन्ते । तत्र ज्ञानरक्षा नाम संशयविपर्ययानुत्पत्तिः । सा च तपस्येवान्तर्भवति तस्याखिलवृत्त्यनुदयेन चित्तैकाग्र्यरूपत्वात् । अखिलवृत्त्यनुदयशब्दो हीन्द्रियान्तरवृत्त्यनुत्पत्तिमिव संशयविपर्ययानुत्पत्तिमप्याह । अथापि चित्तैकाग्र्यमात्रं तप इति चेत्, तर्हि संशयविपर्ययानुत्पत्तिरिति विभागं परित्यज्याखिलवृत्त्यनुदय एव रक्षापदेन विवक्ष्यताम् । यदि ऐकाग्र्यमित्यनेन लब्ध इत्युच्यते ; तदा संशयविपर्ययानुत्पत्तिरपि तत्र प्रविष्टेति तुल्यम् । वस्तुत इदं तप एव न संभवति, बहुविधबाह्यव्यापारव्यग्रमनसा—

'ज्ञात्वा वयं तत्त्वनिष्ठां ननु मोदामहे वयम् ।
अनुशोचाम एवान्यान्न भ्रान्तैर्विवदामहे ॥'

इति भवदुदाहृतश्लोके स्वानुशोचनादिवृत्तिशालिनां कथमखिलवृत्त्यनुदयसाध्यं तपः । न च व्युत्थानदशायां वृत्त्यन्तरसद्भावेऽपि योगदशायामक्षतं तप इति वाच्यम् । व्युत्थानदशायामपि वृत्त्यन्तरानुदयस्य भवदिष्टत्वेन तद्विरोधात् ॥ दुःखनिवृत्त्यतिरिक्तसुखाविर्भावकथनं च न घटते ; दुःखाभा-

व्यतिरिक्तस्य सुखस्य भवन्मतेऽभावात् । आनन्दो ब्रह्मेत्यादीनां तावन्मात्रार्थत्वात् । अतश्च 'परिपूर्णब्रह्मानन्दानुभवसुखाविर्भाव' इति सकलपर्यायशब्दप्रवेशेनाऽपि न दुःखनिवृत्तेरन्यत्सेत्स्यति ।

'न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ॥'

इति भवद्गृहीत वचनमपि भवन्मते अत एवापार्थम् । ब्रह्मात्मनः सुखस्याग्राह्यत्वादपि अन्तःकरणग्राह्यत्ववचनमसङ्गतम् । यदपि विदेहमुक्तौ ब्रह्मभावसाधकम्—

'घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ।
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् ॥'

इति वचनम् । तदपि मतस्थापनाचार्यव्याख्यातापरिगृहीतोदावनोपनिषदन्तर्गतात्मोपनिषद्गतत्वादश्रद्धेयम् । श्रद्धेयत्वेऽपि, उपक्रमे 'त्रिविधः पुरुषो यत आत्माऽन्तरात्मा परमात्मा चे'ति देहजीवपरात्मनो विभज्य देहजीवाविशेष जीवपरयोर्भेदप्रदर्शनात् । उपर्यपि—

'क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ।
संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः ॥'

इति क्षिप्यमाणक्षीरादेः क्षेपाधारक्षीरादित इव जीवस्य परतो भेदवर्णनाच्च न ब्रह्मजीवाभेदविषयम् । किन्तु ब्रह्मैव सन् ब्रह्माप्येतीति ब्रह्माप्ययवचनात् प्राक् स्थितत्वेन निर्दिष्टस्य ब्रह्मैव सन्निति ब्रह्मभावस्य ब्राह्मगुणवत्त्वात्मकस्वस्वरूपाविर्भावस्य सर्वोपाधिविलये सम्भवतः प्रतिरोधकमिति ध्येयम् । 'विभेदजनके' इत्यादिविष्णुपुराणवचनार्थश्च विवेचयिष्यते ।

अद्वैतमतस्यानुपपन्नत्वविषये यावद्वक्तव्यम् तावतोऽप्यर्थस्य प्राक्तनपरमाचार्यैरेव प्रतिपादितत्वेन वक्तव्याभावात् अद्वैताभेदभङ्गनिरूपित-

कतिपयांशमात्रसंक्षिप्तखण्डन एव संप्रति प्रवृत्तत्वाच्च विस्तरवर्जनेन उक्ताद्वैतमतपरिशीलनविषये एतावत्युपरम्य विशिष्टाद्वैतमतानुपपत्तिमाविष्कृतामितः खण्डयिष्यामः । तथापि यथाश्रुतार्थभाष्यमपि तत्स्थलेऽपि सामग्र्येणापरिशील्य विशिष्टाद्वैतमतानुपपत्तिकल्पने व्यापृतस्य अद्वैतामोदकर्तुरस्य पूर्वापरभाष्यमार्गेणैव सर्वत्र दत्तमुत्तरमिति न व्याख्यानमन्येषु वर्तमानस्यापि विचारस्य सम्प्रति प्रकटनमपेक्षितम् । अनेकत्र चायथावत्स्पष्टत्वानुवादात् यथाश्रितार्थग्रहणाच्च केवलमवद्यं कृत्वा कुचोद्यकरणमेव तेन कृतमस्ति । इत्थं स्थिते, प्राज्ञाः पश्यन्तु कियन्तोऽसद्यत्नाकल्पं भविष्यतीति । तथापि यथोचितं संग्रहणाऽऽनुपूर्व्येणानुपपत्तीः परिहरता सम्मुखेन पुनरपि भागित्रामेऽप्यभिनवयुक्तिकदम्बितेन ग्रन्थान्तरेण अद्वैतमतानुपपत्तय एव मुख्यमाविष्क्रियन्त इति विज्ञेयम् ॥

मतदूषणप्रादिपरदत्तनिशितमन्थशातितं तु गतम् ।
तादृङ्निरीक्षणाक्षमशङ्काशमनाय क प्रयासो न ॥'

पश्यन्तु पण्डिता इह परिमाणापरिमल्लादिदृष्टाना ।
अज्ञानामपि विहितान्यवसरतो दूषणान्यपूर्व्याणि ॥

यदत्र-मायावादस्य प्राचीनतापरीक्षणाय प्रथमं कथितम्, अथ च मायावादः श्रीमच्छङ्कराचार्यैः अपूर्व एव स्वकपोलकल्पनयोद्भावित इति न भ्रमितव्यम्; पैरेव तत्र तत्र सूत्रेषु तस्य पूर्वपक्षत्वेन ब्रह्मसूत्रकाराभिमतताया प्रदर्शितत्वा(पृ. ५०)दिति । तत्रोच्यते---

देहात्मैक्यवादः कैश्चिदर्वाचीनैः अपूर्वः स्वकपोलकल्पित इति न भ्रमितव्यम्; उपनिषत्स्वेव तद्दर्शनात् । बृहस्पतिना सूत्रस्यापि प्रणयनात् । मीमांसाकारैः आत्मनित्यत्वस्थापनाय एतत्पूर्वपक्षवर्णनात् । किं बहुना, श्रीशङ्कराचार्यैरेव 'एक आत्मनः शरीरे भावा'दित्यधिकरणं (३. ३)

देहात्मवादिमतस्य पूर्वपक्षत्वेन भगवद्बादरायणविवक्षितत्वेन वर्णितत्वाच्चेति कथनमात्रेण यथा न चार्वाकमतं कश्चिदाद्रियेत, तथैवाद्वैतमपीति हि शक्यं प्रतिवक्तुमिति । यदपि अयं मायावादो ब्रह्मसूत्रकारानभिमत इति न कल्पनीयम्, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतावेव तद्दर्शनादिति लेखनम्—इदमेव तावत् सूत्रकारानभिमतिं सम्यगाविष्करोति । यतः पञ्चचत्वारिंशदुत्तरपञ्चशतीसंख्याकेषु ब्रह्मसूत्रेषु एकस्यापि हि मायावादे प्रमाणतया ग्रहणं भवत एवाशक्यमासीत् । मुधैव सूत्राण्युत्सृज्य सूत्रकारहृदयं विधान्तरेण कल्पयितुं प्रयत्यते, न च भवदुदाहृतायां श्रुतावपि भवन्निरुक्तमायैव मायाशब्दार्थ इति निरूपितमस्तीति किमनेन? योऽपि ब्रह्मसूत्रसिद्धान्तदर्शनं निरञ्जनभाष्य तदुदाहृता श्रुतिः इत्येतेषामन्वेषणेन मायावादस्य सूत्रकाराभिमतत्वकल्पनप्रयासः, सोऽपि तेषां सर्वशिष्टापरिगृहीतानां श्रद्धाधिक्येन कैश्चित् कल्पितानां सूत्रकाराभिमत्यसाधकत्वात्, तत्रापि भवदभिमतरीत्या मायाशब्दनिर्वचनाद्यभावेन भवन्मतविरुद्धवर्णनाभावाच्च सर्वथोपेक्षणीय एव ॥

बृहत्त्वं पुष्कलं यत्र तदेव ब्रह्म शब्दितम् ।
जीवन्ति भवमुक्तिं न चैषा ब्रह्ममात्रता ॥

यदुक्तम्—विश्वोपादानभूतः पुरुष एव ब्रह्म । बृंहणं व्यापनम् । उपादानकारणं हि कृत्स्नं कार्यजातं व्याप्नोत्येव । श्रीभाष्ये 'बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः' इत्युक्तं न घटते । बृहत्त्वस्य परिणामविशेषत्वात् अनवधिकातिशयबृहत्त्वस्य परममहत्त्वरूपस्य गुणेष्वसम्भवात्; गुणे गुणानङ्गीकारात् । गुणवाचकशब्दानां च गुण एव सामान्यतः प्रवृत्तिनिमित्तमिति तत्रानवधिकातिशयप्रवेशोऽपि न युक्तः । महत्त्वे निरतिशयत्वाभावेऽपि महान् गज इत्यादिमुख्यप्रयोगादिति—तदिदं व्याहतं युक्ति-

प्रमाणविरुद्धं च । तथा हि—भवदुक्तव्यापनमात्रस्य ब्रह्मपदार्थत्वे व्यापिषु
कालाकाशादिष्वपि ब्रह्मशब्दप्रयोगप्रसङ्गात् उपादानमात्रे कथं सङ्कोचः ?
तत्राप्युपादानभूते मृदादौ परिणाम्युपादाने भावरूपाज्ञाने च तत्प्रयोगास-
म्भवात्, विवर्तोपादानभूत एव, तत्रापि पुरुष एवेति कथं सङ्कोचः ?
बृहन्महच्छब्दादिरिव ब्रह्मशब्दस्यापि गुणमात्रप्रवृत्तिनिमित्तकत्वे, महान् गजः,
महान् घट इति सर्वत्र महत्त्वयोगिषु तद्विवक्षया कथं न तत्प्रयोगः ? अतो
भवताऽपि सङ्कोचः कृतः । कर्तव्यश्च । अतोऽन्यत्र तत्प्रयोगवारणाय प्रामा-
णिकांशस्य प्रवृत्तिनिमित्तकोटौ निवेशो युक्त इति अनवधिकातिशयत्वस्य
निवेशः क्रियते, न तु विवर्तोपादानत्वादेः, अप्रामाणिकत्वादसिद्धत्वात् ।
न च बृहत्त्वं गुणे न सम्भवतीत्यारोचनीयम् । गुणे गुणाभावस्य वैशे-
षिकमात्रगृहीतस्यास्माभिरनादरणात्, धर्मभूतज्ञानस्य विशेषणत्वात् गुणभू-
तस्यैवास्मन्मते द्रव्यत्वाच्च । न च भगवतो धर्मभूतज्ञानस्यैकस्य गुणस्य
परममहत्त्वेऽपि अन्यस्य तादृशस्याभावात् कथं गुणैरिति बहुवचननिर्देश इति
वाच्यम् । बृहत्त्वं हि परिमाणविशेष इत्युच्यमानमपि शोधने कृतेऽनेक-
वस्तुसम्बन्धरूपमेव पर्यवस्यतीति तादृशस्य बृहत्त्वस्य भगवत्सम्बन्ध इव सर्व-
जगद्धेतौ सर्वाभीष्टप्रदस्य सर्वनियमनस्य तस्य क्षमा दयादिष्वपि निरवध
सम्भवेन बृहत्त्वाश्रयगुणगणलाभेन बहुवचनस्यासाङ्गत्यात् । अत एव महा-
कारुणिक इत्यादि निर्देशः । तदिदं बहुग्रन्थपरिशीलनावसेयम् । न च
भवत इव निर्गुणत्वं ब्रह्मणोऽस्मन्मते । न च वचनमूलं किंचित् मृग्यम् ।
बृहति बृंहयति तस्मादुच्यते परं ब्रह्म । इत्यादि प्रमाणजातैः स्वरूपगतस्य
गुणगतस्य च बृहत्त्वस्य ब्रह्मशब्दार्थत्वेन निरुक्तत्वात् ।

'वेदे च परिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।
तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥

यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः ।
तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः ॥'

इति च श्रीमद्गारुडं पुराणम् । सूत्रकारैश्चात्रैव 'परं जैमिनिर्मुख्यत्वादि' त्यादौ ब्रह्मशब्दस्य भगवति मुख्यत्वं कण्ठरवेणोक्तम् । न च परतत्त्वविचारं प्रयतमानः अमुख्यं सर्वसाधारणं वा शब्दं ब्रह्मजिज्ञासेति आदौ प्रयुञ्जीत । न च शक्त्या वा लक्षणया वा ब्रह्मशब्दप्रयोगविषयेषु सर्वत्रानुगतानतिप्रसक्तं किञ्चिन्निमित्तमस्ति । न चानेकशक्तिकल्पना न्याय्या । न च भगवदतिरिक्ते कचित्पदार्थे परं ब्रह्मशब्दमुख्यत्वकथनस्य विनिगमकं किञ्चिदस्ति । अतो युक्त्या प्रमाणेन च बृहत्त्वविशेषणतया निवेशितमनवधिकातिशयत्वमेव ब्रह्मशब्दस्य भगवन्मात्रमुख्यत्वे नियामकं भवतीति तत्र मुख्यो ब्रह्मशब्दस्तस्मादन्यत्रौपचारिक इति सर्वमिदं श्रीमति भाष्ये श्रुतप्रकाशिकादौ च विस्पष्टमिति अदृष्ट्वा चाबुद्ध्वा चाक्षेपकरणमयुक्तमेव।

यदपि–(पृ. ५२) अशरीरत्वावस्था मुक्तिः । सैव चामृतत्वम् । शरीरसत्त्वे मरणस्य नियतत्वात् । इदमेव चाभयं भयात्यन्ताभावः । द्वितीयवस्तुप्रतिभासे च भयसम्भावनाऽस्तीति द्वितीयवस्तुप्रतीत्यभावोऽपि तदा। इयं च मुक्तिः द्विविधा विदेहमुक्तिः जीवन्मुक्तिश्चेति । तत्रोच्यते । मुक्तावपि शरीरपरिग्रहस्य 'द्वादशाहवदुभयविधम्' इति सूत्रेऽक्तत्वात् 'स एकधा भवति द्विधा भवती'त्यादिश्रुतिसिद्धत्वाच्च कर्मजन्यशरीरराहित्यरूपा मुक्तिरिति स्वीकुर्मः । सशरीरस्य दुःखसम्बन्धोऽवर्जनीय इति चेन्न भगवतोऽपि सशरीरत्वेन सर्वाभ्युपेतस्य दुःखित्वापत्तेः। शास्त्रबलात् तत्र तद्वारणं च जीवेऽप्येवमिति । कर्मजन्यशरीरवत्त्वे च दुःखित्वं भवेदेव । एवं हेयतयाऽध्यवसितं यन्मरणं तन्मुक्तावस्थायां नास्त्येवेति ध्येयम् । द्वितीयवस्तुप्रतिभासे भयमिति च न व्याप्तिः ; भीताना भयपरिहारायापि द्वितीयसहायापेक्षाऽनुभवेन तत्प्रतीतिमात्रेण भयोत्पत्त्यसम्भवात्। 'द्वितीयाद्वै भयं भवति'

इति श्रुतिरपि यत्र प्रळये द्वितीयमेव नास्ति तत्र प्रतिकूलद्वितीयस्य कः प्रसङ्ग इति, कथं भयमिति स्वकृतायां भयोक्तौ स्वयमनुशयं दर्शयति । प्रतिकूलद्वितीयवस्तुप्रतिभासे भयमिति तु युक्तं वक्तुम् । तत्र च द्वितीयेति व्यर्थम् । तथा च प्रतिकूलवस्तुप्रतीत्यभावो मोक्षेऽस्माभिरपीष्यते ; सर्वस्यानुकूलतयैव तदा भानात् । मुक्तिद्वैविध्यं चायुक्तम् ; जीवन्मुक्तौ अशरीरत्वावस्थारूपभवदुक्तमुक्तिशब्दार्थाभावात् । न च बन्धमुक्त्योरेकदा सद्भावः सम्भावनामप्यर्हति ।

यत्तत्र—विदेहमुक्तौ दर्पणस्थानीयबुद्ध्याद्युपाध्यभावेन तत्प्रतिबिम्बरूपजीवाभावात् स्वदृष्ट्या परदृष्ट्या च मुक्तात्मनि द्वितीयवस्तुसम्बन्धप्रतीतिरित्यस्याभावेऽपि जीवन्मुक्तस्य बुद्ध्युपाधिसत्त्वेन तत्सम्बन्धप्रतीतिरस्त्येव । परं तु तस्य जीवे न केवलं जीवत्वबुद्धिमात्रम्, किन्तु अयं प्रतिबिम्बभूत इत्यपि ज्ञानमस्तीति अहमाद्यादिधर्माणामस्वगतत्वेन अहङ्कारादिगतत्वेन च विवेचनमस्तीति— तद्भवन्मतरीत्या काममास्ताम् । यत्तु (पु ५३) तत्र चटकादिदृष्टान्तकथनम्, तत्र तु वैषम्यमस्ति, यथा चटक आदर्शे स्वप्रतिबिम्बं चटकान्तरत्वेन पश्यति, न प्रतिबिम्बत्वेन ; तथा जीवः प्रतिबिम्बभूतः प्रतिबिम्बभूतोऽहमिति न जानातीति कथनं हि विषममेव । न हि दृष्टान्ते चटकप्रतिबिम्बं चटकत्वेन स्वं पश्यति, न च प्रतिबिम्बस्य चेतनत्वं नाम । एवं यथा मनुष्यः ज्ञानाधिकः आदर्शे स्वप्रतिबिम्बं प्रतिबिम्बत्वेन पश्यति, न मनुष्यत्वेन, तथा जीवन्मुक्तः स्वात्मानं प्रतिबिम्बत्वेन पश्यति, न केवलजीवत्वेनेत्यन्येनदपि विषमम् । न ह्यत्र दृष्टान्तबिम्बस्थानीयो जीवन्मुक्त इति ।

यदपि (पु. ५३, ५४) यथा बालानां स्वादर्शगतप्रतिबिम्बस्य स्वप्रतिबिम्बे मातृस्य बिम्बे समारोपेण अन्यं पश्यन् विवेकी मनुष्यः आदर्शादनुवृत्तमेव मालिन्यमिति बालशिक्षायै स्वयमग्लानोऽपि स्वादर्शं मार्जयति,

तथा जनकादिर्जीवन्मुक्तो लोकसंग्रहाय कर्माकार्षीदिति—तन्न, 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति स्मार्थेन कर्मानुष्ठानस्य जनकादिषु प्रसिद्धतया जीवानां चित्तशुद्धिद्वारा स्वयमात्मतिरोकरणायानभिसंहितफले कर्मणि प्रवृत्तिसिद्ध्यर्थमेव तैः कर्मानुष्ठितमिति कल्पनस्याशयत्वात्, जीवन्मुक्तौ प्रमाणाभावाच्च।

यत्तु, 'तमेव विद्वानमृत इह भवती'ति श्रुतौ इहशब्दात् जीवन्मुक्तिः स्पष्टमुक्तेति। तदत्रैव श्रुतौ अमृतशब्देनाशरीरावस्थोच्यते [पृ ५२] इति भवद्वाक्यव्याहतम्। न हि जीवन्मुक्तयवस्थाऽशरीरावस्था। न चेहशब्देन जीवन्मुक्तिप्रतीतिः, भवन्मते विदेहमुक्तावपि देशान्तरगमनाभावेन 'न तस्य प्राणा उत्क्रामन्ती'ति श्रुत्यैकार्थ्येन च जीवन्मुक्त्यनङ्गीकारेऽपि तस्योपपन्नत्वात्। अस्मदभिमतार्थस्यानपेक्षितत्वादिह नोच्यते। अधिष्ठानसाक्षात्कारे सति अध्यस्तस्य सञ्चितकर्मण इव प्रारब्धकर्मणोऽप्यवश्यनिवृत्तत्वेऽभ्युपगन्तव्ये कथं जीवतो मुक्तिः? 'तस्य तावदेव चिर'मिति श्रुतिबलात् प्रारब्धस्य भोगेनैव क्षय इति चेत् तर्हि मिथ्यात्वे तन्निवृत्तरावश्यकत्वेन तत्तत्वन्मिश्रवोक्तश्रुत्यन्यथाऽनुपपत्त्या स्वीकर्तव्यत्वेनाविशेषात् सञ्चितकर्मादेरपि सत्यत्वमेवेति ज्ञाननिवर्त्यत्वान्यथाऽनुपपत्त्या प्रपञ्चमिथ्यात्वकस्वनं भवता गलहस्तितमेव। अतो मिथ्यात्वपक्षे मूलाज्ञानस्य साक्षात्कारेण निवृत्तत्वात् न प्रारब्धशेषसम्भवः। प्रारब्धफलोपयिकशक्तिविशेषमात्रसद्भावात् तदुपपत्तिरित्यपि न युक्तम्, तस्या अपि शक्तेरज्ञानगताया मिथ्यात्वेन साक्षात्कारनिवर्त्यत्वाविशेषात्।

एतेन जीवन्मुक्तस्य स्वार्थयागाद्यनुष्ठानासम्भवेऽपि शरीरयात्रार्थं स्वार्थभिक्षाटनादेः, परार्थस्य पारचर्यालाक्संग्रहाद्यर्थकर्मणश्चानुष्ठानं सम्भवति। एवमबुद्धिपूर्वं कर्मापि सम्भवतीत्येतदपि निरस्तम्। भेदवासनाभिवर्धकस्य स्वस्य कर्मकरणस्य बन्धापादकत्वात्। अत्राहं करोमीत्यभिमानाभावेन कर्म-

संसारबन्धाय न भवतीति। भवदुक्तं तु—'अहमर्थोऽपि भासत एवेति जीवन्मुक्तस्यापि क्वचिदहमर्थपूर्वको व्यवहारो दृश्यते (५४)इति भवदुक्तिविरुद्धम् । यदि जीवन्मुक्तः स्वस्मिन्नवर्तमानत्वेन अहङ्कारादिगतत्वेन च सर्वं विविनक्ति, तर्हि क्षुत्पिपासादिजनितं दुःखमपि तथैवेति कुतो भिक्षाटनादिप्रयासः । स्वदृष्ट्या च सर्वस्यापि मिथ्यात्वावसायेन कस्याप्यभावेन परपरिचर्येति वा लोकसंग्रह इति वा कथं कर्मप्रसक्तिः ? एकजीववादस्यैव भवता प्राङ्निष्कृष्टत्वेन सर्वस्य लोकस्यामर्यादं व्याप्तत्वेऽपि स्वस्य यथावस्थितसाक्षात्कारस्य निष्पन्नत्वेन देहपातसमनन्तरमेव सर्वप्रविलयेन शुद्धब्रह्मपरिशेषं भाविनं बुद्ध्यमानस्य जीवन्मुक्तस्य किमिति लोकसंग्रहार्थं किञ्चित् कर्तव्यं भविष्यति । अत एव स्वदृष्ट्या जगन्नास्ति, परदृष्ट्याऽस्ति । बद्धजीवाश्चानन्ताः । वामदेवादयः कतिचिदेव मुक्ताः इत्येवं जीवन्मुक्तिकतिपयविदेहमुक्तिसमर्थनाय भवद्वचनं एकजीववादरूपभवत्परमसिद्धान्तव्याकोपावहत्वादश्रद्धेयम् । अतो यदि प्रारब्धकर्मणा किञ्चित्कर्मकरणं संगन्तव्यम् अभिमन्यतां तर्हि आदेहपातं बन्धनिवर्तकः साक्षात्कार एव नोत्पन्न इति । अथ तत्र साक्षात्कारप्रतिपादकबहुश्रुतिविरोधो लक्ष्यते, त्यज्यतां तर्हि जगन्मिथ्यात्वपक्षः । न च सत्यत्वे भवतो वा कथं ज्ञानेन तन्निवृत्तिरिति शंक्यम् । अस्मन्मते जगन्निवृत्तेरेवाभावात् सञ्चितकर्मण एव निवृत्तेः । तन्निवृत्तिरेव कथमिति चेत् यथा सञ्चितकर्मस्वरूपे शास्त्रं प्रमाणम् तथा भगवद्भक्तिरूपज्ञानबलेन तन्निवृत्तावपि प्रायश्चित्तान्तरेण पापनिवृत्ताविव शास्त्रमेव प्रमाणमिति किमत्रानुपपन्नम् ।

यत्तु—(पृ. ५०)तत्त्वज्ञानादेव मोक्ष इति सिद्धान्ते तत्त्वज्ञानमित्यत्र तत्त्वस्य ज्ञानमिति तत्पुरुषो न भवति । निर्विशेषत्वात्तत्त्वस्य विषयविषयिभावस्वीकारे द्वैतापत्तेरित्याशयेन तत्त्वमेव ज्ञानमिति कर्मधारयसमर्थनम्—तदपि तावन्मात्रापातदर्शनमूलम् । तमेव विदित्वेत्यत्र द्वितीयादिनिर्देशप्रसंग

लोपम्भावस्यावश्यकत्वात् । ब्रह्मरूपज्ञानस्य च सर्वदा सत्वेन सर्वदैव मोक्षः सिद्ध इति सर्वप्रयत्नवैयर्थ्यापत्तेश्च । बाधकज्ञानसत्वेन विपरीतप्रतीतेरेव कदाऽप्यप्रसक्तेश्च । यदपि तत्त्वस्य ज्ञानमिति षष्ठीतत्पुरुषमेव स्वीकृत्य तत्त्वविषयकज्ञानस्य मोक्षं प्रति कारणत्वात् विपर्ययविपर्ययमावस्य मोक्षमात्राङ्गलिकत्वेन न पश्चात् द्वैतप्रसक्तिरिति समाधानान्तरम्--तदपि न युक्तम्। तत्त्वस्य निर्विशेषत्वे ज्ञानविषयत्वासम्भवात् । तदर्थं ज्ञानस्य सविशेषसम्बन्धित्वे तत्त्वज्ञानत्वासम्भवात् । स्वप्रकाशस्य च तत्त्वज्ञानस्य तत्त्वनिष्ठत्वविषयताविषयकत्वस्यावश्यकत्वेनापि न निर्विशेषविषयकत्वम् । किं च तत्त्वविषयकज्ञानान्तराभ्युपगमेऽपि तत्त्वस्यापि स्वप्रकाशत्वेन स्वत एवाज्ञाननिवर्तकत्वप्रसङ्गः । तस्य तत्रासामर्थ्ये तु तद्विषयकज्ञानान्तरस्यापि तदनधिकविषयकत्वे निवर्तकत्वासम्भव एव । तदधिकविषयकत्वे तु सविशेषविषयकत्वमवर्जनीयमिति कथं तत् तत्त्वज्ञानम् । अत एव ब्रह्मात्मकज्ञानापेक्षया ब्रह्मविषयकज्ञानस्य वैलक्षण्यसम्पादनाय तस्य तत्त्वज्ञानत्वरक्षणाय च ब्रह्मणो यथाकथञ्चित् यत्किञ्चिद्धर्मविशिष्टत्वमप्रकल्प्यमिति अनाभासभूतं द्वैतमवश्यमूरीकार्यम् ।

यच्च--(पु. ५६) तत्त्वज्ञानं कथं मोक्षकारणमित्येतदुपपादयितुं महूपन्यस्तमभिहितम्- कार्यस्य घटादेः उपादानकारणं मृदेव तत्त्वम् । तत्त्वं सत्यं परमार्थ इति पर्यायाः । परमात्मैव सर्वस्य कारणमिति स एव तत्त्वम् । अतः कार्यभूतसंसारबन्धात् मोक्षः कारणभूततत्त्वज्ञानाद्भवति । अथापि कथं कार्यविनाश इति चेत् यथा शुक्तिज्ञानात्प्रातिभासिकरजतविलय. तद्वत् मृद्घटस्थलेऽपि मृद्ज्ञानेन घटादिनाशोऽपि जातप्राय एव । पृथगस्तित्वमतीत्यभाव एव हि नाशः, न तत्र कारणसत्तातिरिक्तकार्यसत्ता प्रतीयत इति। तदसत्। मोक्षस्य नाशरूपत्वाभावेन नाशोपपादनस्यानपेक्षितत्वात् । प्रातिभासिकपदार्थस्यैव अप्रामाणिकतायाः प्रागुक्तत्वेन तद्दृष्टान्तासम्भवात् ।

नाशस्य पृथगस्तित्वप्रतीत्यभावरूपत्वे घटोऽपि मृदेवेति विवेकिनां घटसत्ता-दशायामपि घटो नष्ट इति व्यवहारापत्त्याऽवस्थान्तरापत्तेरेव नाशपदार्थतायाः आवश्यकत्वात् । अन्यथा घटसत्त्वेऽपि मृत्तो घटस्य पृथक् प्रतीत्यभाव-मात्रेण घटनाशं स्वीकृत्य प्रकृते परमात्मतत्त्वज्ञानात्तथा मोक्षवर्णने, वर्तमा-नेऽपि जगति पृथक्प्रतीत्यभावमात्रेण मुक्त्युपपत्तौ मुक्तौ जगत्प्रविलयस्य भवदभिमतस्यानापत्तेश्च । श्रुतौ कारणवाक्येषु मृदादिपरिणाम्युपादान-स्यैव दृष्टान्तत्ववर्णनेनाप्रामाणिकशुक्तिरूप्यदृष्टान्तस्य स्वकपोलतः कल्पनस्य विवर्तवादाश्रयणस्य चायुक्तत्वेन जगन्मिथ्यात्वासिद्ध्या च मुक्तेः कार्यनाश-रूपत्वतत्सापेक्षत्वयोरभावाच्च । न च मोक्षो नाश इति च पर्यायौ । न च कारागृहान्मोक्ष इत्यस्य कारागृहनाश इत्यर्थः । अतः स्वरसार्थ-त्यागः अप्रामाणिकार्थस्वीकारश्च सर्वत्र भवताम् ।

यदपि (पु. ५७)कार्याणां कारणसत्तानतिरिक्तसत्ताकत्वात् कारणी-भूतायामविद्यायां कार्यतत्त्वतया स्थितायां तत्रापि किं तत्त्वमिति विचारे ज्ञानरूपं ब्रह्म परिशिष्यत इति । तत्रोच्यते । शुक्त्यादौ रूप्यादिरिव ब्रह्मणि घटादेः प्रपञ्चस्य साक्षादध्याससम्भवेन अविद्यात्मकतत्त्वस्यैव व्यर्थता । अन्यथा अविद्याकल्पनार्थमविद्यान्तरप्रसङ्गः । न च रूप्याद्यध्यासस्थले तत्प-रिणाम्युपादानं किञ्चित् प्रत्यक्षसिद्धमस्ति । येन तद्वदिहापीत्युच्येत । अविद्याकार्यजगद्दृष्टान्तेन मूलाविद्यादिकार्यतया शुक्तिरूप्यादिकल्पनं अत्रैव विवादे सत्यसम्भवि । दोषाभावे भ्रमो न भवतीति दोषः कामं कल्प्यताम् । न तस्यान्यस्य वोपादानत्वे किञ्चित्प्रमाणमस्ति । एवं च श्रुतौ सृष्टिक्रमः सर्वोऽपि अद्ध्यासपक्षेऽनुपपन्न एव ; परिणाम्युपादानस्यानपेक्षणात् । एवं अविद्यायास्तत्त्वे विमृश्यमाने ज्ञानात्मकब्रह्मपरिशेष इत्यपि न युक्तम् ; अ-विद्याया अनादित्वेन ब्रह्मकार्यत्वाभावात् । न चाविद्यायाः ब्रह्मणि कल्पि-तत्वात् तत्सत्तानतिरिक्तसत्ताकत्वमिति वाच्यम् , कल्पितत्वेऽनादित्वासम्भ-

वात् । अथ परिशेषिताविद्याज्ञाने जाते ज्ञानस्य ज्ञातृज्ञेयस्वस्वरूपात्मकत्रिपुटीरूपतया तत्र ज्ञातृज्ञेययोर्निरासे ज्ञानपरिशेष इति चेत्—कथं तयोर्निरासः ? तन्निरासे हि विषयनिरूप्यत्वात् ज्ञानस्य, ताभ्यां सह ज्ञानमपि निरस्तं भवतीति शून्यमेव तत्त्वं स्यात् । अत एव हि विज्ञानमात्रवादी बाह्यालम्बनावश्यकत्वेन सर्वैर्निराक्रियते । तस्मादध्यासाद्यसम्भवान्न ब्रह्ममात्रस्य तत्त्वताद्व्यवसाय इति ।

> विचार्य कर्मकाण्डार्थं फलं बुध्वाऽल्पमस्थिरम् ।
> स कर्मभक्तिलभ्यं तद् ब्रह्म जिज्ञासते द्विजः ॥

साधनचतुष्टयमेव ब्रह्मजिज्ञासापूर्ववृत्तमित्येतत् (पृ.५८) प्रागेव निरस्तम् । अथातो ब्रह्मजिज्ञासेत्यस्याथशब्दस्यारभ्याधीतत्वात् किञ्चित्प्रकरणानन्तर्यवाचकस्याथशब्दस्य तत्प्रकरणार्थानन्तर्यपरत्वात् पूर्ववृत्तकर्मविचारानन्तर्यपर एव । न च सूत्रकारभेदात्, कर्मब्रह्मकाण्डप्रतिपाद्यार्थयोर्भेदात्, मिथोविरुद्धत्वात्, उत्तरमीमांसाविषयस्य जैमिन्यनभिमतत्वात्, एकशास्त्रताप्रयोजकैकार्थप्रतिपादकत्वाभावाच्च ऐकशास्त्र्याभावादयमथशब्दः अनारभ्याधीत एवेति वाच्यम्; कर्तृभेदेऽपि विभिन्नकालिकानेककर्तृकरघगोपुरप्रासादादिषु एकत्वदर्शनात्, अध्यायभेदेन प्रतिपाद्यभेदे सत्यपि द्वादशलक्षण्याः एकशास्त्रत्वात्, बादरायणशिष्यत्वेन पुराणप्रसिद्धस्य तेनैव ब्रह्मसूत्रेषु 'साक्षादप्यविरोधं जैमिनि'रित्यादौ श्लाघितस्य उत्तरमीमांसार्थासम्मत्ययोगात्, आराधनाराध्यभूतयोः सम्भूय भोगमोक्षोपयोगिनोः कर्मब्रह्मणोः अविरोधस्य वक्ष्यमाणत्वात्, भगवतोऽपि धर्मत्वेन धर्मविचारत्वरूपस्य वा वेदार्थविचारत्वरूपस्य वा अनुगतधर्मस्य सद्भावाच्च ऐकशास्त्र्यात्सते । न च 'कृष्णं धर्मं सनातनम्' इत्यादौ धर्मप्रयोजकत्वेन औपचारिको ब्रह्मणि धर्मव्यपदेश इति वाच्यम्; 'श्रेयः साधनता ह्येषां नित्यं वेदात्प्रतीयते' इति वार्तिकोक्तरीत्या 'चोदनालक्षणोऽर्थो धर्मः' इति जैमिनिसूत्रानुसारेण च वेदबोधितश्रेय साधन-

ताकत्वरूपधर्मत्वस्य श्रीकृष्णेऽप्यक्षतत्वेन मुख्ये सम्भवति औपचारिकत्वाश्रयणस्यायुक्तत्वात् । अतो विधौ यावत् श्रेयस्त्वेनान्वितं तावन्निरूपितसाधनत्वस्य कर्मणीव ब्रह्मण्यप्यक्षततया तस्य धर्मत्वं निराबाधम् । न च वेदार्थत्वेनैक्येऽपि वस्तुतो वेदार्थस्य भिन्नत्वात् शास्त्रभेद इति मन्तव्यम्; धर्मत्वेनैकत्वेऽपि वस्तुतो धर्माणां दर्शज्योतिष्टोमादीनां भिन्नत्वेन तद्विचाराणां एकशास्त्रान्तर्गतत्वासम्भवप्रसङ्गात् ।

किं च कर्मब्रह्मपरयोः कर्मकाण्डोपनिषद्भागयोः कथमर्थभेदेऽप्येकवेदत्वम् । न केवलमर्थभेदः, विरोधोऽपि ह्यर्थयोर्भवदिष्टः । तत्र या गतिः सा तद्विचारसूत्रमीमांसायामप्यक्षतैव ।

यत्तु शास्त्रकर्तुर्जैमिनेरेव एकशास्त्रत्वं नाभिमतमिति–तन्न; पूर्वमीमांसायामुत्तरस्यां वा ऐकशास्त्र्यखण्डनादर्शनात् । प्रत्युत उत्तरस्यां 'तदुक्तं' 'तदपी'त्येवं बहुषु स्थलेषु पूर्वमीमांसोक्तस्मारणेनैकशास्त्र्यज्ञापनात् । किं बहुना–शाङ्करभाष्य एव 'एक आत्मनः शरीरे भावात्' इत्यधिकरणे 'ननु शास्त्रप्रमुख एव प्रथमे पादे' इत्यादिना ऐकशास्त्र्यं स्पष्टमभाणि । भामतीकृता च 'पौनरुक्त्यं चोदयती'त्यवतार्य दृढीकृतम् । एवमन्यत्र । ततश्च विवरणप्रमेयसंग्रहादिवाक्यमाकरविरुद्धत्वादविश्वसनीयम् । अतः ऐकशास्त्र्यभञ्जनमर्वाचीनकुसृतिरेव । अतः 'शास्त्रैकत्वसिद्धि'रिति वृत्तिकारमतनिरासे शाङ्करभाष्यादिकमेव निरस्तं भवतीति कथं न बिभेति भवान् ।

'कपिलस्य कणादस्य गौतमस्य पतञ्जलेः ।
व्यासस्य जैमिनेश्चापि शास्त्राण्याहुः षडेव हि ॥'

इति षट्त्वेन शास्त्रसङ्कलनमपि, पूर्वोक्तयुक्त्या,

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।',
'मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥

इति प्रामाणिकव्याख्यानविरुद्धत्वाच्च शास्त्रभेदवादिवासनाबलाद्वा कर्तृव्याख्याया ग्रन्थे आरोपेण वा उपपन्नम् । अत एव च प्रमाणात्, एकग्रन्थ्येय-व्याख्यानरूपत्वात्, प्रागुक्तगमकबलाच्च ऐकशास्त्र्यमिति कथमिदमप्रामाणिकम्? अत आरभ्याधीतत्वात् ब्रह्मसूत्रोपक्रमेऽथशब्दः कर्मविचारानन्तर्यार्थक एव । अस्त्वयमारभ्याधीतत्वविचारः । ब्रह्मजिज्ञासया नियमेनापेक्ष्यमाणत्वादपि कर्मविचारानन्तर्यमेवाथशब्दार्थः । इदमधस्तादेवावोचाम । एवं साङ्गवेदाध्ययनजनितापातप्रतीतिकाल एव, केवलकर्मणैवानन्तस्थिरफललाभसम्भवे किमिति कर्मोपकारबलेन फलहेतुतया प्रतीयमानब्रह्मज्ञानसम्पादनमिति बुद्ध्याऽपि कर्मविचार एव प्रवृत्तिः प्राथमिकीति युक्तं तदानन्तर्यम् ॥

यत्तु (पृ ५९) कर्मज्ञानयोर्विरोध इति तन्न युक्तम् । ज्ञानस्यापि सविशेषविषयकत्वेन भेदगर्भत्वात् कर्मणोऽपि अधिकारीतिकर्तव्यताद्यपेक्षस्य तथात्वेन साजात्ये स्थिते को विरोधः? भवन्मतरीत्या ज्ञानस्य निर्विशेषविषयकत्वेऽपि न कर्मणो ज्ञानेन विरोधः शक्योपपादनः, नानाविधनियमपुरस्सरयथावस्थितश्रवणमनननिदिध्यासनानामनन्तभेदगर्भाणां ज्ञानाविरोधित्वे प्रत्युत तत्प्रयोजकत्वे कर्मणः परं कथं विरोधिता? प्रत्युत निदिध्यासनान्तोपयोगिचित्तशुद्धिरूपपरिकरसम्पादकत्वेनानुकूलतैव ।

यत्तु, 'विविदिषन्ति यज्ञेन दानेनेति' श्रुत्या कर्मणां विविदिषार्थत्वं न तु वेदनार्थत्वमिति तन्न–विविदिषा हि वेदनेच्छा । सा च कर्मणा फलमित्युच्यते । न च फलेच्छां विना उपायेच्छा भवति । न च तां विना उपायभूतकर्मानुष्ठानं भवतीति विविदिषारूपफलविषयिणी इच्छा काचित् कल्प्या । विविदिषाया अपि स्वयंफलत्वाभावात् तदिच्छाऽपि तत्फलेच्छाधीना । इच्छाया इष्यमाणप्रधानत्वात् विविदिषाया वेदनमेव फलम् । तथा च वेदनेच्छां विना विविदिषेच्छा न भवतीति तस्याः सर्वप्राग्भावित्वे, कर्मानुष्ठानं विनैव विविदिषा निष्पन्नेति कुतः कर्मानुष्ठानम्? अतो

वेदनार्थमेव कर्म । अभ्युपगतं चेदं भवदीयैरपि बहुषु ग्रन्थेषु । यदि तु विविदिषायां पूर्वं जातायामपि तदनुवृत्त्यर्थं कर्मानुष्ठानमिष्यत इति—तन्न । विविदिषन्तीत्यत्र अनुवृत्तिवाचकपदाभावात् । अस्तु वा कथञ्चित् । एवमपि निदिध्यासनान्तव्यापारान्तरभाविसाक्षादपरोक्षरूपवेदनेच्छायाः तादृशवेदनपर्यन्तमनुवर्तनीयत्वेन तदर्थमातदुत्पत्तिकर्मणा अपेक्षाऽस्त्येवेति श्रवणरूपब्रह्मविचारस्य कर्मणश्च विरोधासम्भवादपेक्षाया आवश्यकत्वाच्च न कर्मज्ञानानन्तर्यं शक्यं निरसितुम् । वस्तुतस्तु अश्वेन जिगमिषतीत्यादाविव इष्टत्वेनावगतस्य वेदनस्य उद्देश्यत्वे सम्भवति तथाऽनवगताया वेदनेच्छाया उद्देश्यत्वमयुक्तमयेति कर्मणा वेदनमेव फलम् । न वेदनेच्छा । न चेच्छाया उद्देश्यत्वासम्भवे बुभुक्षाक्षपक्षुत्क्षामस्य कथमौषधसेवनमिति मन्तव्यम्, भोक्ष्येयमिति कामनयाऽहमौषधं सेव इति तत्रानुभवेन भोजनेच्छाया प्रागेव सद्भावनिश्चयेन तत्रापि भोजनस्य वा भोजनप्रवृत्तिप्रतिबन्धकाग्निमान्द्यनिवृत्त्यादेरेव उद्देश्यत्वस्यावश्यकत्वात् । इह च श्रुतस्य वेदनस्योद्देश्यत्वसम्भवादित्यलं विस्तरेण । अथ वा किमनेनानत्यन्तोपयुक्तविचारेण । विविदिषाया साध्यत्वेऽपि अपरोक्षज्ञानोपयिकध्यानानुवर्तनपर्यन्तं कर्मणामावश्यकत्वान्न विरोधित्वमित्युक्तमेव ।

यत्तु— (पृ ६०) उद्गीथादिविचारो ब्रह्मजिज्ञासाया प्रासङ्गिक इति—तत्रोच्यते । अस्तु प्रासङ्गिक एव, अथापि प्राक्कर्मनिर्णयरहिताधिकारिविषये प्रसङ्गोऽपि न भवितुमर्हतीति कर्मज्ञानं पूर्ववृत्तम् । आचार्यस्य कर्मनिर्णयवत्त्वात् तद्बुद्ध्या प्रकृतविचारप्रसक्तिरिति चेन्न अज्ञातकर्मा अनपेक्षितकर्मोपयोगिविचारश्च शिष्यः किमितीदं श्रोष्यति । कथं च शिष्यतादशायामेवापेक्षितकर्मानुबन्धिविचारस्य सम्प्रत्याचार्यकसमये स्वस्वशिष्यानुरयोग्यर्थविचारप्रसङ्गावसरगन्धोऽपि । अतोऽसिद्धः प्रसङ्गः । किं चैवं प्रधानाप्रधानपर्वविचारापेक्षितकर्मविचारविवक्षा परित्यज्य एकमात्रापेक्षित

साधनचतुष्टयापेक्षा न युज्यते । कर्मविचारस्य प्रधानापेक्षितता च प्रागुक्ता । किं च भवन्मते ब्रह्मदृष्टिपुरस्सरा कदाऽनुष्ठानम्? न श्रवणात् पूर्वम्, ब्रह्मज्ञानाभावेन दृष्टिकरणासम्भवात् । न पश्चात्, पूर्वमेव कर्मत्यागस्य विवक्षितत्वात् । अविवक्षितत्वे कथं कर्मणो विरोधित्वोक्तिः?

वस्तुतस्तृतीयचतुर्थचरणकृतेनेतिकर्तव्यताभूतकर्मविचारस्यैव उद्गीथादिविचारस्यापि ब्रह्मज्ञानापेक्षितत्वान्मुख्यैव सङ्गतिरस्तीति न प्रासङ्गिकत्वकल्पना । अथ 'महद्दीर्घवद्वे'त्यादौ वैशेषिकशास्त्रप्रस्तावात् तज्ज्ञानस्यापि पूर्ववृत्तत्व कल्पनामिति चेत् — तर्किं वैशेषिकशास्त्रार्थज्ञानवत् कर्मज्ञानमनपेक्षितमेव? साङ्गोपाङ्गं वेदमधीतवतो विचारात् प्राक् वैशेषिकशास्त्रज्ञानमपि पूर्ववृत्तमेव । मा भूच्च पूर्ववृत्तत्वम्; तत्तच्छास्त्रार्थप्रस्तावसमय एव तदध्ययनमपि करिष्यते । तद्वदेव कर्मविचारोऽपि मध्ये करिष्यत इति चेत् कथं तर्हि कर्मणा विरुद्धत्वोक्तिः? अविरोधित्वे च औचित्यादिना प्रागुक्तप्रक्रियया मुमुक्षुत्वोपयोगितयाऽवश्यापेक्षितस्य कर्मविचारस्य पूर्ववृत्तत्वमवर्जनीयमिति तदानन्तर्यमशक्यपरिहारम् ।

यत्तु—विनाऽपि कर्मज्ञानं ब्रह्मजिज्ञासायाः कर्तुं शक्यत्वात् लोके तथा दृष्टत्वाच्च न कर्मविचारो ब्रह्मजिज्ञासानियतपूर्वभावीति न तथा तदानन्तर्यसम्भव इति । तत् विनाऽपि वेदाध्ययनं धर्मजिज्ञासायाः कर्तुं शक्यत्वात् लोके तथा दृष्टत्वाच्च न वेदाध्ययनं धर्मजिज्ञासानियतपूर्वभावीति पूर्वमीमांसायामथशब्दो न वेदाध्ययनानन्तर्यार्थक इति वचनेन तुल्यम् । न च पूर्वतन्त्रे द्वितीयमध्यायमपठित्वाऽपि तृतीयं पठितुं शक्यत इत्यतोऽतः 'अथातः शेषलक्षणम्' इति सूत्रे द्वितीयाध्यायार्थनिरूपणानन्तर्यं अथशब्दस्यार्थो न भविष्यति । अतो 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्युक्तरीत्या एकैकमपि चेतनं सृजन् भगवान् ग्रहणयोग्यतायामागतायां सृष्टिसार्थक्याय यथावस्थितार्थज्ञानमपि विपरीतप्रवृत्तिविघटना

भिमतपुरुषार्थसाधनोपयोगि विधित्सन्, यथाकालमुपनयनं, वेदाध्ययनं, यथाक्रमं कर्मविचारः, ब्रह्मविचार इत्येतत्संविधानसम्पत्तिं परिकल्प्य यथारुचि पुरुषमुपायेऽनुमन्यत इति न कर्मविचारानन्तर्यबाधः ।

यत्तु—(पृ. ६०) 'अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी'ति सूक्तिं गृहीत्वा तावता कर्मज्ञानानन्तरं ब्रह्मजिज्ञासानैयत्यलाभेऽपि कर्मज्ञानस्य ब्रह्मजिज्ञासानियतपूर्वभावित्वं नावगम्यत इति— दूषणम्—तदयुक्तम् । तथा सति सञ्जातमोक्षाभिलाषस्येत्युक्तमुमुक्षाया अपि भवदीयसाधनचतुष्टयान्तःपातिन्या नियतपूर्वभावित्वं न स्यात् । इतस्तदनवगमेऽपि वाक्यान्तराद्युक्त्या वाऽवगम्यत इति चेत्—तथैव कर्मविचारनियतपूर्वभावित्वस्य उपर्याक्षिप्य स्थापयिष्यमाणतया तदवश्यं सेत्स्यति । इद [illegible] भाष्ये पूर्ववर्तिष्यमाणप्रदर्शनेन वर्तिष्यमाणे वृत्तानन्तर्यसम्भवमात्रावगमनप्रवृत्तमध्यवसीयताम् ।

वस्तुत इहैव कर्मविचारस्य नियतपूर्वभावित्वमवगम्यते । कथम्? इत्थम् । प्रथमतः सौत्रयोरथातश्शब्दयोः प्रत्येकमर्थं भावयित्वा, 'अथशब्दोक्तानन्तर्यस्य ब्रह्मजिज्ञासोपयोगिनि प्रतियोगिनि लब्धे तस्यानन्तर्यार्थकत्वमप्यप्रतिहतं भवति । अत इत्यस्य एतच्छब्दस्यापि स्वरसत उपस्थितवाचिन आनन्तर्यप्रतियोगितयोपस्थितादर्थादन्यार्थपरत्वे प्रमाणाभावात् उपस्थितिकृतलाघवेन तस्यैव ग्रहणे तद्धेतुकत्वमपि जिज्ञासायाः ज्ञातं भवति । एवं तद्धेतुकत्वकथनाच्च, अनियतयत्किञ्चिदानन्तर्यस्यावर्जनीयत्वेन तत्कथनस्य वैयर्थ्यतया सौत्राथशब्दस्य केवलानन्तर्यवाचित्वेऽपि नियतपूर्वभाव्यानन्तर्यपरत्वस्यावश्यकतया कथमनियतपूर्वभावि यत्किञ्चिदानन्तर्यमुच्यत इति शङ्काऽपि निरस्ता भवतीति विमृश्यैव तद्धेतुकत्वोपपादनपूर्वकमानन्तर्यप्रतियोगीदमिति प्रदर्शनभाष्येणोच्यते । अधिगत कर्मज्ञानतयेति प्रतिबन्ध-

काभावो दर्शितः । तृतीयया च हेतुहेतुमद्भाव उक्तः । सञ्जातपदेनापि कार्यत्वं कण्ठोक्तम् । मोक्षाभिलाषेति ब्रह्मजिज्ञासारूपोपायेच्छाहेतुभूता फलेच्छोच्यते । मुमुक्षाजिज्ञासयोः कार्यकारणभावश्चोभयसंप्रतिपन्नत्वान्न विस्पष्टं वक्तव्यः । अतः कार्यकारणभावावगमात्, कारणस्य कार्यनियतत्वात्, कर्मविचारस्य कार्यभूतब्रह्मजिज्ञासानियतपूर्वभावित्वं लभ्यत एवेति नाभीष्टासिद्धिः । तथा च यथा सूत्रे अथात इत्यत्राथशब्दस्यानन्तर्यमात्रवाचित्वेऽपि आनन्तर्यप्रतियोगिनो नियतपूर्वभावित्वावगमः, तथेहापि । विशिष्य च नियतपूर्वभावित्वप्रकारविशदीकरणाद्विस्पष्टमिदमिहेति ।

यत्तु—कर्मज्ञानाभावेऽपि मोक्षाभिलाषभावात्तन्मात्रमलमिति—तन्न कर्मज्ञानं विनाऽधीतसाङ्गवेदस्य मोक्षाभिलाषो न भवतीति प्रागेव प्रपञ्चितम् । अनधीतवेदस्तु ब्रह्मजिज्ञासायामप्यनधिकारी । भवन्मते तु साधनचतुष्टयमात्राधिकारकथनात् तस्याप्यधिकारित्वापत्तिः । जिज्ञासा ह्यनेकविधा । यथा—सर्वथैवाज्ञस्य जिज्ञासा, को धर्मादिरिति सामान्यतः; गृहीतवेदमात्रस्य जिज्ञासा द्वितीया, किमनेन शब्देनोच्यत इति, गृहीतपदपदार्थसङ्गतिकस्य वाक्यार्थसन्देहाधीना जिज्ञासा चान्या । तत्र प्रथमया न शास्त्रारम्भः । तदुक्तं शाबरभाष्ये—'तादृशीं धर्मजिज्ञासामधिकृत्याथशब्दं प्रयुक्तवानाचार्यः । या वेदाध्ययनमन्तरेण न सम्भवती'ति । न्यायरत्नमालायां च—

'जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः ।
ज्ञातवेदाङ्गकस्यान्या या मीमांसापुरस्सरा ॥' इति ।

तद्वदिहाप्यनधीतवेदस्य नाधिकारित्वम् । अथोपनिषदध्यायित्वमपि पञ्चममधिकारिविशेषणं स्वीक्रियत इति चेत्— अनुपनीतस्यापि तद्भवतु । उपनयनसंस्कृतस्यैव 'स्वाध्यायोऽध्येतव्य' इत्यध्ययने विनियोगात् असंस्कृतस्य कथमुपनिषदध्ययनमिति चेत्, तर्हि तत्र कृत्स्नशाखाध्ययनस्यैव वि-

हितत्वेन उपनिषन्मात्राध्ययनं न शास्त्रार्थ इति कृत्स्नाध्ययने आवश्यके तस्य कर्मविचारं विना न मुमुक्षासम्भवः ; प्रथमप्रतीते सुकरे कर्मण्यनन्तस्थिरफलापातप्रतीतिस्तत्प्रतिबन्धकत्वादिति । अशक्तस्य ब्रह्मविचारमात्रेऽधिकारोऽस्ति न वेति चेत्–अत्यन्ताशक्तस्य 'अयमात्मा ब्रह्मे'ति वाक्यार्थमात्रश्रवणात् मुक्तिर्भवति न वा ; अध्ययनाशक्तस्य कर्मविचारेऽधिकारोऽस्ति न वेत्यादिविचारतुल्यमेतत् । किं च यदि मुमुक्षोपयोगित्वेन परम्परोपयोगी न साक्षादिति कर्मनिर्णयस्य साधनत्वत्यागः, तदा नित्यानित्यवस्तुविवेकादेरपि मुमुक्षोपयोगितया परम्परैव साधनत्वमिति साधनचतुष्टयपरिगणनमयुक्तमेव ।

यत्तु—वाक्यार्थसंशयविपर्ययनिवर्तनाय वेदान्तवाक्यविचारवत् धर्मविचारस्य कर्तव्यत्वेऽपि तस्य वेदान्तविचारात् प्रागवश्यकर्तव्यता नैव सिद्ध्यतीति–तदपि न ; आदित आरभ्य आन्तमापातप्रतीतौ वेदे समानायां आदिमविचारं परित्यज्यान्तिमविचारप्रवृत्तौ प्रमाणाभावादेव तत्प्राथम्यसिद्धेः । लिखितपाठस्य सहजतया, 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायेन च दुरारोहनिर्विशेषब्रह्मज्ञानपर्यवसानपरिश्रमवर्जनेन गुरुगन्धवासनानुकूलावश्यकर्तव्यकर्मानुष्ठानादेवानन्तस्थिरफललिप्सया तद्विचारस्यैव प्राथम्यसिद्धेश्च । चतुरध्यायीनिरूपितेष्वर्थेषु बहुषु कर्मविचारोपजीवित्वसत्त्वेनापि तत्पूर्ववृत्तत्वापेक्षायाः प्रागुक्तत्वाच्च ।

यत्तु–कर्मणोऽस्थिरफलत्वबुद्ध्या तद्विचारात् प्रागेव ब्रह्मविचारे कस्यचित् प्रवृत्तिसम्भवात् न तस्य पूर्ववृत्तत्वनियम इति–तन्न–कर्ममीमांसां विना कर्मण्यस्थिरफलत्वबुद्धेरेव प्रमात्मिकायाः निष्पत्त्यसम्भवात् । हितकारिवचनश्रवणेन विरक्तस्य तु तद्वचनबलादेव निष्कृष्ट'तत्त्वमसि'वाक्यार्थोऽपि सुज्ञान इति ब्रह्मविचारेऽपि न प्रवृत्तिः । एवं सगुणब्रह्मोपासनफलपर्यन्तविरक्तस्य हितकारिवचनविस्रम्भशालिनो व्यर्थ एवायमेतावान् वेदान्तविचारः । एवं शमदमादिसाधनचतुष्टयसम्पत्तिप्रसक्तमात्रेऽपि प्रवचनधराजेनप्रतिष्ठा·

सम्पादनसंरम्भेण सर्वत्रैव सर्वदाऽपि ब्रह्मविचारप्रवृत्तेः सम्भावितत्वेन ब्रह्मविचारस्य नियमेन शमदमादिसाधनचतुष्टयसम्पत्त्यपेक्षाया असम्भवेन तस्य पूर्ववृत्तत्वासिद्धेश्च । कतिपयप्रवृत्तेरेवमुक्तत्वेऽपि को मार्गिकः तदेवेति चेत्— महदुपपत्तिबलेन कर्मनिर्णयानन्तर्यमेवौत्सर्गिकमिति पश्यतु भवान् । अन्यत्र प्रागुक्तम् ।

यत्तु (पृ ६१) भवद्भिः स्वोपज्ञमभिसन्धायाभिहितम्—'महावाक्यजन्यमात्मप्रत्यक्षमविद्यानिवर्तकम् । श्रवणमनननिदिध्यासनानि च दर्शनसाधनम् । श्रीभाष्ये 'अविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं न वाक्यार्थज्ञानमात्रम्, तस्य विधानमन्तरेणापि सिद्धेः, तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च' इत्युक्तं न युक्तम्, अर्थज्ञानस्य विध्यनपेक्षायामपि श्रवणे प्रवृत्त्यर्थं विधेरावश्यकत्वात् । केवलशाब्दज्ञानस्याविद्यानिवर्तकत्वाभावात् । श्रवणादिपक्षाद्वा अपरोक्षवाक्यार्थज्ञानोत्पत्तिसमनन्तरं प्रारब्धकर्मरूपाल्पाश सद्भावेऽप्यविद्याया निवृत्तत्वाच्चेति–तदत्यन्तदुःस्थम् । तथा हि आत्मसाक्षात्कारस्तावद् वाक्यजन्य एव न भवति । न च दशमस्त्वमसीति वाक्यस्य दशमोऽहमिति प्रत्यक्षजनकत्वदर्शनात् वाक्यजन्यत्वं सम्भवतीति वाच्यम् । ज्ञानस्य साक्षात्कारत्वं नाम किमिन्द्रियजन्यत्वम्, अथ स्वप्रकाशविषयकत्वं उत वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्नचैतन्याभेदः ? नाद्यः, आत्मसाक्षात्कारस्येन्द्रियजन्यत्वाभावात् । बहिरिन्द्रियाणां तत्राप्रक्रमात् । मनस इन्द्रियत्वस्य भवदीयैर्निराकृतत्वात् । आत्मनः स्वप्रकाशत्वेन सुखादीनां साक्षिभास्यत्वस्य भवत्सम्मतत्वेन मनसः कस्यापि प्रत्यक्षजनकत्वाभावाच्च । अनिन्द्रियजन्यस्यापि साक्षात्कारस्य सिद्धान्तसिद्धत्वेन प्रत्यक्षत्वस्येन्द्रियजन्यत्वरूपत्वाभावाच्च । न द्वितीयः, घटादिप्रत्यक्षे स्वप्रकाशविषयकत्वाभावादव्याप्तेः । स्वप्रकाशविषयकानुमित्यादीनामपि प्रत्यक्षत्वापत्तेश्च । ज्ञानसामान्यस्य स्वांशे प्रत्यक्षत्वेऽपि विषयांशे तत्त्वाभावात् । अन्यथा श्रवणादे

सर्वस्यापि ब्रह्मापरोक्षत्वप्रसङ्गात् । नापि तृतीयः, ब्रह्मसाक्षात्कारे तदुपपादनासम्भवात् । तत्र को विषयः? किं चैतन्यम्? कथं तयोरवच्छेद्यावच्छेदकभाव इति विवेचनं दुष्करमिति प्रागेवोपपादितत्वात् । अस्तु वा सुकरत्वम्, अथापि यथा दशमस्त्वमसीति वाक्यं मनननिदिध्यासनानपेक्ष श्रवणमात्रमेव प्रत्यक्ष जनयति, तथा तत्त्वमसिवाक्यमपीतरानपेक्ष ब्रह्मज्ञान साक्षात्कारात्मक जनयेदेव; ब्रह्मण सर्वदा सन्निहितत्वात् योग्यत्वाच्च अन्तःकरणवृत्त्यवच्छिन्न विषयावच्छिन्नचैतन्ययोरभेदस्य वृत्तिदशायां सर्वदैवावश्यकत्वात् । एवं ब्रह्मविषयकानुमानादिजन्यज्ञानमपि पूर्वोक्तचैतन्याभेदसद्भावेन प्रत्यक्षरूपमित्येव युक्तम् । अङ्गीक्रियते हि भवद्भिः पर्वतो वह्निमानित्यनुमिते पर्वतांशे प्रत्यक्षत्वम् । तथा च सर्वविधोपायजन्यमपि ब्रह्मज्ञान साक्षात्काररूपमेवेति प्रथमोत्पन्नज्ञानादेवाविद्यानिवृत्तिरवश्यमाविनीति चित्तशुद्ध्यापादककर्मानुष्ठान निदिध्यासनादिक च शास्त्रोक्त मवन्मते व्यर्थमेव । ततश्च तावदनन्तरमेव वाक्यमपरोक्षज्ञान जनयतीति सिद्धान्तोऽप्यनुपपन्न । यदि पश्चादेवापरोक्षज्ञानमित्युच्यते, तर्हि चैतन्याभेद प्रत्यक्षत्वमिति लक्षण परित्यज्यताम् । एवं निदिध्यासनसस्कृतमनसोऽपरोक्षज्ञानकारणत्वस्यावश्यकत्वात् वाक्यस्य प्रथमतः शाब्दबोधोत्पादनेन चरितार्थस्यान्यथासिद्धस्य प्रत्यक्षज्ञानजनकत्वकल्पन सर्वथा न युक्तम् । मनस एव च ब्रह्मसाक्षात्कारकरणत्व श्रुतिषु श्रूयते । वाक्यश्रवणस्य प्रत्यक्षज्ञान जनकत्वे च मननस्यापि प्रत्यक्षजनकत्व कुतो न भवति । अतो भवदीय प्रत्यक्षलक्षणनिर्वचनानुसारेण ब्रह्मज्ञाने परोक्षापरोक्षविभागस्यैवासम्भवात्, प्रमाणान्तरस्येव वाक्यस्यापि तत्प्रत्यक्षजनकत्वायोगात्, अन्यथा सिद्धत्वाच्च 'वाक्यजन्य प्रत्यक्षज्ञान' मितीदमयुक्तमेव ।

यच्च—वाक्यार्थज्ञानाय विध्यनपेक्षायामपि श्रवणे प्रवृत्त्यर्थं विध्यपेक्षेति—तन्न—न खलु श्रवण एव विधिर्दृश्यते, 'उपासीत', 'विद्यात्' 'प्रज्ञां

कुर्वीत' इति ज्ञानेऽपि विधिदर्शनात् । उपासनातिरिक्तमविषयं विलक्षणं वाक्यार्थज्ञानमेव मोक्षसाधनमिति चेत्— तन्निराकरिष्यते । वस्तुत इह श्रवणं न विधेयम् । आपातप्रतीतिमतः, स्वयमक्षमतया विध्यन्तरविहितेना-ध्ययनविधानेन गुर्वभिगमनेन च तस्य प्राप्तत्वात् । मननं च यदि 'एव-मेव किं वेदवाक्यार्थः उत तादृश इति चिन्तनरूपम् । यदि वा वेदस्य गुरूपदिष्ट एवार्थो न त्वन्य । अत एव तत्त्वसिद्धिरप्येवमेव । असिद्धेऽर्थे लौकिकयो युक्त्योः कियद्दूरं प्रवर्तितुमर्हन्तीत्यभिसन्धिजनितचिन्तनरूपम् । सर्वथा श्रवणप्रतिष्ठार्थत्वात्प्राप्तमेव । अतो ध्यानमेव विधेयम् । अन्तिम-कार्यविधौ च पूर्वयोः प्राप्तिः सुवचा । न त्वन्यदा । अतोऽपि तदेव विधे-यमिति ।

यच्च—वाक्यार्थज्ञाने सति अविद्यानिवृत्तिः प्रारब्धकर्मावसानेऽपि भव-त्येवेति—तत्परोक्षज्ञानादविद्यानिवृत्तावपसिद्धान्तात्, अपरोक्षस्य न वाक्य-जन्यत्वाभावात्, तादृशसाक्षात्कारेऽप्यविद्यानिवृत्त्यदर्शनाच्चायुक्तम् । अवि-द्यैव हि भिक्षाटनादिबहुविधप्रारब्धकर्मपरीतेषु लक्ष्यते । अविद्यायां तु निवृत्तायां तदधीनात्मलाभानां भिक्षाटनादीनां, नित्यनैमित्तिककर्मणां सञ्चितकर्मणां चैव, निवृत्तिर्भवेदेव, न त्वेकांशपरिशेषणमुपपत्तिसहमिति प्रागेवा-भिहितम् । यदि तन्निवृत्तावपि काचिद्भेदवासना न निवर्तते—तर्हि नि-वर्तकाभावात् सा सर्वदैव स्यादिति न मोक्षप्रसक्तिः । स्वयमेव वासना कालान्तरे निवर्तन्त इति तु न युक्तम्—वासनानां मिथ्याभूतानां ज्ञानैकबा-ध्यत्वात् ज्ञानाभावे निवृत्त्यसम्भवात् ।

यत्तु(पु ६२)तत्त्वज्ञाने सति भेदवासनानां निवृत्त्यारम्भमात्रम्, न तु तदैव निरशेषनिवृत्तिरिति—तदपि न, तथा सत्यनादिसञ्चितानां भेदवासनानां क्रमिकनिवृत्तावनन्त एव कालोऽपेक्षित इति विदेहमुक्तिरेव न स्यात् । किं च रज्जुज्ञाने सति सर्पभयकम्पादिगतागतानां क्षणिको

विलम्बितश्च विनाश इत्येतदपि नानुभविकम् ।

यदपि, छिन्नमूलो वृक्षश्छेदसमकालमेव न म्लानो भवति ; अपि तु क्रमेणैव । तद्वदिति — तदपि सत्यमिथ्यावस्तुवैषम्यापरिज्ञानविलसितम् । यदपि ब्रह्मात्माभेदज्ञानस्योत्पन्नमात्रस्यानादिभेदवासनानिरासासामर्थ्यविरहेणाभेदवासनासम्पादनाय निदिध्यासनानुष्ठानाङ्गीकारेऽपि अनाद्यपरिमितभेदवासनाधिकभेदवासनार्जनस्याशक्यत्वेनानिर्मोक्षप्रसङ्ग इत्याशङ्कायामुक्तम् , व्यापकं बहुकालभवमपि तिमिरं सद्य एव प्रविष्टो दीपो यथा विनाशयति तद्वदुपपद्यत' इति—तदसत् । तथा सति तेनैव प्रदीपन्यायेन प्राथमिकवाक्यार्थज्ञानस्याप्यविद्यानिवर्तकत्वापत्तेः । प्राथमिकादनन्तरमेव विपयवैलक्षण्यादर्शनेनाविशेषात् ।

का चेयमविद्या, या प्राथमिकज्ञानेन निवर्तयितुं न शक्यते ? किं वा ज्ञानप्रागभावः ? अथ वा विपरीतभ्रमः ? आद्ये भावरूपाज्ञानम् ? नाद्यः ; प्रागभावस्य स्वप्रतियोगिनिवर्त्यत्वेन प्राथमिकज्ञानेन तन्निवृत्तेरावश्यकत्वात् । न द्वितीयः तस्याप्युत्तरोत्पन्नज्ञाननिवर्त्यत्वात् प्राथमिकयथार्थास्थितरज्जुज्ञानेनापि सर्पभ्रमनिवृत्तिदर्शनेन प्राथमिकज्ञानानिवर्त्यत्वासिद्धेश्च । 'प्रत्यक्षरूपभ्रमस्य प्रत्यक्षप्रमयैव निवृत्तिः न तु परोक्षप्रमया । अतो न प्राथमिकज्ञाननिवर्त्यत्व'मिति चेत्—न एवम् । एकश्चन्द्र इति परोक्षप्रमाया सत्यामपि द्विचन्द्रप्रत्यक्षस्य जायमानत्वादिति चेत्—तर्हि तन्निवृत्तौ क उपाय ? एकचन्द्रप्रत्यक्षमिति चेत्—तदेव कथम् ? सत्यपि सन्निकर्षेऽनुत्पत्ते । दोषः प्रतिबन्धकोऽस्ति । उपायान्तरेण तस्मिन् निरस्ते भविष्यत्येकचन्द्रप्रत्यक्षमिति चेत् —तर्हि द्विचन्द्रभ्रमे दोषः कारणम् । दोषनिवृत्तौ च कारणाभावात् भ्रमानुत्पाद इति कथमेकचन्द्रप्रत्यक्षस्य तन्निवर्तकत्वम् । तथा चैकचन्द्रपरोक्षनिश्चयस्य द्विचन्द्रप्रत्यक्षेऽप्रामाण्यनिश्चयापादकत्वेऽपि तद्धेतुदोषनिवर्तनसामर्थ्यविरहात् भ्रमानुवृत्तिरित्युक्तं भवतीति, तत्र दोषस्य

सत्यतया ज्ञाननिवर्त्यत्वाभावेऽपि प्रकृते मिथ्याभूतस्य दोषस्य प्राथमिकतत्त्वज्ञानेनैव निवृत्तिसम्भवात् कथमपरोक्षभ्रमानुवृत्त्यवकाशः । भ्रमानुवृत्तावपि च साक्षात्कारानन्तरमिव प्राथमिकज्ञानानन्तरमपि तत्राप्रामाण्यनिश्चयस्यावश्यकत्वेन तत आरभ्यैव कुतो न जीवन्मुक्तत्वव्यवहारः । न च परोक्षज्ञानेन तत्राप्रामाण्यनिश्चयो नोत्पाद्यते इति वक्तुं शक्यम्—दोषवशाच्छङ्खः पीत इति सहस्रशो दर्शनेऽपि श्वेतः शङ्ख इति तत्त्वविदुषः श्वेतमानयेत्युक्तौ शङ्खानयनदर्शनात् । तदानीमयुक्तं वानुभवविरोध इति चेत्—अथ साक्षात्कारानन्तरमप्यविशिष्टः । वस्तुतः कारणस्य मिथ्यात्वेन निवृत्त्यावश्यकतया भ्रम एव न भवितुमर्हतीत्युक्तम् ।

अथ प्रत्यक्षस्यानिर्वचनीयस्य रजतस्य नेदं रजतमित्याप्तोपदेशजन्यपरोक्षज्ञानमात्रेण न निवृत्तिरिष्यते । दोषवशात् पुनः पुनः रजतोत्पत्त्यपेक्षया पूर्वोत्पन्नानिवृत्तिपक्षस्यैवोचितत्वात् । यदा तु तस्यैव शुक्तितत्त्वप्रत्यक्षम्, तदा तन्निवर्तत एव । ततो रजतदर्शनविरहात् । तद्वदत्र भावरूपमज्ञानमपि प्रत्यक्षभूतं परोक्षप्रथमज्ञाननिवर्त्यं न भवतीति चेत्—तर्हि तृतीयः पक्ष एव परिगृहीतः । तत्रोच्यते । ज्ञानाभावस्य भ्रमस्य च ज्ञाननिवर्त्यत्वमेव लोकानुभवसिद्धमिति, वस्तुनो ज्ञाननिवर्त्यत्वस्यैवाप्रामाणिकतया 'प्रत्यक्षं वस्तु प्रत्यक्षज्ञानेनैव निवर्त्यते, न तु परोक्षेण' इत्यादिकल्पनायामेव प्रमाणाभावेन तथात्वासम्भवात् । शुक्तिरूप्यद्विचन्द्रादाविदं दृष्टमित्युक्तमिति चेन्न—अनिर्वचनीयवस्तूत्पत्तेरप्रामाणिकत्वस्य प्रागेव प्रतिपादितत्वेन दृष्टान्तस्यैवाभावात् । तर्ह्यनिर्वचनीयं भावरूपाज्ञानमपि न सेत्स्यतीति चेत् एवमेव न सिद्धान्तः । एवं भावरूपाज्ञानस्य प्रत्यक्षविषयत्वं नेत्यपि निरूपयिष्यत इति अप्रत्यक्षस्य तस्य परोक्षज्ञानादपि निवृत्तिर्भवेदेव । भवन्मतसिद्धं प्रत्यक्षलक्षणं प्राथमिकतत्त्वज्ञानेऽप्यविशिष्टमिति च प्रागेवोक्तम् । अतः प्रथममविद्यानिवृत्तिर्न भवतीति दुर्वचम् । एवं सत्यपि यदि भेदानुभववशात्

नेष्यते—तर्हि साक्षात्कारानन्तरमपि तस्मादेव सा नैषितुं शक्येति प्रार-
कर्मावसान एव साक्षात्कारो भवतीत्यङ्गीकारो वरम् । तर्हि पूर्वमेव
सात्कारप्रतिपादकसर्वप्रमाणविरोध इति चेत्—एवं सति जगन्मिथ्यात्वपक्ष-
प्रामाणिकं परित्यज्य साक्षात्कारस्यान्यादृशत्वं वाक्याजन्यत्वं च यथावद्
गृह्य प्रारब्धकर्मावसान एव ततो मुक्तिरुपपाद्यताम् ।

यत्तु—(पृ ६३) 'वेदनमुपासनमित्यवगम्यते ; विद्युपास्योर्व्यतिक-
रापक्रमोपसंहारदर्शना'दिति सूक्तिं 'विद्युपास्त्योरव्यतिरेकेणे'ति उपास्ति-
शब्दाव्यतिरेकशब्दप्रयोगेणायथावदनूद्य दूषणं कृतम्, 'एतावता वेदनोपा-
सनयोरैक्यलाभेऽपि वेदनमुपासनमिति कुतो वक्तव्यम् ? उपासनं वेदनमि-
त्यवगम्यत इति कुतो न भवतीति तद्विविच्यते—उपासनं नामासकृदावृत्त-
वेदनमिति भवतैवोच्यते । सामान्यस्य हि विशेषरूपत्वं विशेषान्तरव्या-
वृत्त्ये वक्तव्यम्, न तु विशेषस्य सामान्यरूपत्वम् । उपास्तिशब्दश्रवणेनैव
तस्य वेदनत्वमवगम्यत इति उपक्रमोपसंहारदर्शनपर्यन्तानुधावनं तत्
किमर्थम् ? अत एतद्दर्शनात् वेदनमुपासनरूपविशेषरूपमवगम्यते, पशु-
रेव छागरूप इत्युक्तमेव रमणीयमिति ।

यदपि—स्मृतिसन्ततिरूपध्यानजन्यसाक्षात्कारस्य मुक्तिसाधनत्वं
'द्रष्टव्यः श्रोतव्य' 'तस्मिन् दृष्टे परावरे' इति श्रुतिसिद्धं परित्यज्य स्मृतिर्द-
र्शनसमानाकारा प्रकृते दृशिपदार्थ इति लाक्षणिकार्थकथनमन्याय्यम् । 'स्मृति-
लम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति वचनं तु स्मृतेः स्वजन्यसाक्षात्कारद्वारा
ग्रन्थिमोक्षहेतुत्वाभिप्रायमिति—तदपि न— स्मृतिरूपस्य ध्यानस्य दर्शनजन-
कताया लोके कुत्राप्यदर्शनात् । दर्शनस्येन्द्रियसन्निकर्षजन्यत्वात् । न
चासन्निहितकामिनीध्यानं लोके तद्दर्शनं जनयति । सन्निहितकामिनी-
दर्शनं तु सन्निकर्षाधीनमिति न तस्य ध्यानजन्यत्वम् । अत एव, 'अवि-
द्यावैदेहीशबलितविकर्षिणा मम धियाममी दम्भारम्भ विपिनविनिवेशा विदधते'

इत्यविद्यावैदेहीति कविराट्—'वृक्षे वृक्षे च पश्यामि चीनकृष्णाजिनाम्बरम्' इति चादिकाव्ये । न च प्रतिवृक्षं वस्तुतो रामः सन्निहितः । न चासन्निहिते साक्षाद्दर्शनम् । अतो दर्शनसमानाकारस्मृतिसन्ततिमेवेह'पश्यामी'-त्यनेन महर्षिरभिप्रैति । यदि च योगप्रभावायत्तं विलक्षणं वस्तुदर्शनमसाविवक्षिष्यत—यत्र तद्वस्त्वस्ति तत्रस्थत्वेनैव तद्ध्यक्षमवर्णयिष्यत ; न तु सर्वत्र तद्दर्शनम् । भावना च प्रकृष्यमाणा दर्शनसमानाकारतां प्रतिपद्यत इत्यानुभविकम्, अशेषशास्त्रसम्मतं च । अतो लोकदृष्टप्रक्रियावलम्बनेन 'द्रष्टव्यो निदिध्यासितव्य'इत्यनयोः सम्भवदैकरस्यं परित्यज्य अपरिदृष्टान्यादृशकार्यकारणभावकल्पनेन श्रुत्यर्थवर्णनमनुपपन्नमेव । एवं च 'स्मृतिलम्भे विप्रमोक्ष' इति श्रुतिरप्याञ्जस्येनोपपद्यते । दर्शनवद्ध्यानेऽपि वस्तुनो दर्शनत्वाभावेन स्मृतित्वस्याक्षतत्वात् । अतो दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् श्रुत्यन्तरस्वारस्याच्च विशदं ध्यानमेवेह साक्षात्कार इति युक्तम् । भगवद्ध्यानादौ ध्यानपातेनानुग्रहबुद्ध्या स्वेच्छया विग्रहपरिग्रहेणाऽऽविर्भूय साक्षात्कारप्रदानं तावन्न निरस्तम् । तावता तत्र ध्यानस्यादृष्टविषयोपयोगेऽपि न दृष्टविधया साक्षात्कारजनकता । भवदभिमतं तु निर्गुणं ब्रह्म ईदृशानुग्रहबुद्ध्या सन्निधाय स्वात्मानं दर्शयतीतीदं स्वप्नेऽपि न भविष्यति । अस्मादृशरीत्या ध्यानस्य साक्षात्कारजनकत्वं त्वप्रामाणिकमेव । अतो लोकदृष्टप्रक्रिययाऽपि पूर्वोक्तमेव श्रेयः ।

यत्तूक्तम्—अनुभवभिन्नायाः स्मृतेः कथं प्रत्यक्षानुभवत्वम् । इदमलं स्वीकुर्वता च त्वया शाब्दज्ञानस्य वाक्यजन्यस्य प्रत्यक्षानुभवत्वं न स्वीक्रियत इति महदाश्चर्यमिति—तत् 'दर्शनसमानाकार'ेति पूर्वभाष्यानुसारेण 'दर्शनरूपतेति रूपशब्दघटनमुक्त्यर्थमधिगन्तुमसमर्थस्य चाद्यम् । इतोऽपि किं नु महत्तरमाश्चर्यं भविष्यति, यत् तत्रभवान् व्यक्तमुक्तमर्थं वाक्यानुपूर्वीमपि च सर्वथाऽनवबुद्ध्य अनुक्तमर्थं एवारोप्य अत्यन्तामस्मद्दोषमेव लिप्

श्रीदृशमदृष्टमग्रन्थखण्डने प्रवृत्त इति । अतः साक्षात्कारस्य प्रकृतस्य वाक्यजन्यत्वकथनमिव ध्यानजन्यत्वकथनमप्यनुपपन्नमेव ॥

यदपि 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति श्रुतौ स्मृतेरुल्लेखाभावेन स्मृतिं विशिनष्टीति स्मृतिगतविशेषान्तरपरतया श्रुतियोजनमयुक्तमित्युक्तम्—तदपि न—मेधाशब्दस्य 'धीर्धारणावती मेधा' इति कोशानुसारेण स्मृत्यर्थकतया तदुल्लेखस्यैव सत्त्वात् । भवन्मते चास्य कोवा वाक्यार्थः? निर्गुणं ब्रह्म कथं वृणुते? के वृणुते? का तस्य तनूः? कथं तां विवृणुते? कथं च तत् केनेतो लभ्यमिति । अतः स्मृतेर्मेधाशब्दोक्तायाः निरुक्तरूपायाः मोक्षसाधनत्वस्यान्यत्र श्रवणादियं श्रुतिस्तदविरोधेन नेया । अतश्च 'न मेधये'ति स्मृतिनिषेधः इह विवक्षितविशेषणरहितस्मृतिविषयः । विवक्षितविशेषणविशिष्टा तु स्मृतिर्न निषिद्ध्यते, 'न पृथिव्यामग्निश्चेतव्यः' इतिवदिति नानुपपत्तिगन्धोऽपि । तच्च विशेषणं भक्तिरूपत्वं प्रीतिरूपापन्नत्वम् । तच्च वरणवचनसिद्धमित्याद्याकर एव व्यक्तम् ।

यदपि—भक्तेर्दर्शनरूपत्वे—'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'ति सोपानवचनविरोधः । तत्र ज्ञानदर्शनप्राप्तीनां भक्तिसाध्यत्वकथनेन भक्तिदर्शनयोर्भेदावगमादिति—तदपि न—तत्र हि, 'सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम'(गी. ११. ५२) इति प्रकरणानुरोधात् अर्जुनकृतविश्वरूपदर्शनतुल्यं वास्तवसाक्षात्कारात्मकं दर्शनमुच्यते; भक्तिशब्देन तु स्मृतिसन्ततिरेव वैशद्यातिशयात् दर्शनसमानाकारतामापन्ना वास्तवदर्शनभिन्ना चोद्यत इति उभयोर्भेदस्यासाद्विवक्षितार्थाबाधकत्वात् । दर्शनसमानाकारज्ञानस्य च वास्तवदर्शनसाधनत्वं न दृष्टप्रक्रियया, किं तु तत्प्रीतभगवदनुग्रहवशादित्युक्तम् । तदेवोक्तम्—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति । अतो

भवदभिमतनिर्गुणब्रह्मदर्शनं न ध्यानजन्यं भवितुमर्हति । अत्र च 'तत्त्वेन ज्ञातुं द्रष्टुं प्रवेष्टुं चेति त्रिष्वपि भक्तिसाध्यत्वं स्फुटमवगम्यते। तत्रेमे ज्ञान-दर्शनप्रवेशाः किंरूपाः, विभिन्नकालिकतत्तत्साधनत्वेनोक्तायां च भक्तौ कोऽवान्तरभेद इतीदं यदि भवता विदितम्, तर्हि भक्तिदर्शनयोर्भिन्नयोः कथमैक्यमितीयं शङ्का नैवोन्मिषेत् । ततश्च सिंहास्त्यवद्विलासायाज्ञातरसमस्मत्सिद्धान्तरहस्यामृतमिति प्रसिद्धिरियमेव संप्रति भवताऽपि सत्याप्यते ।

यदपि–"अत एव श्रुतिस्मृत्योरेवमभिधीयते 'तमेवं विदित्वाऽतिमृत्युमेति । नान्यः पन्था अयनाय विद्यते,' 'नाहं वेदैर्न तपसा न दानेन न चेज्यया । .... भक्त्या त्वनन्यया शक्यः' .... इति सूक्तिरयुक्ता; अत एवेत्यस्य ध्रुवानुस्मृतेर्भक्तिशब्देनाभिधानादेव इति वा, भक्तिशब्दस्योपासनपर्यायत्वादेव इति वाऽर्थस्य वाच्यतया स्मृतौ भक्तिशब्दोपादानेऽपि श्रुतौ तदनुपादानेन तद्ग्रहणस्य प्रकृतानुपयोगादिति दूषणम्–तदपि अत एवेति सूक्त्यर्थाज्ञानविलसितम् । अनेन च प्रागुक्तमस्मत्सिद्धान्तरहस्यविषयं सिंहास्त्यसौहार्दमस्मदाचार्यवर्यश्रीसूक्तावप्यवतार्यत इति निश्चिनुम । अत्युक्तं वेदनमुत्तरोत्तरप्रमाणयुक्तिप्रदर्शनेन भक्तिरूपोपासने पर्यवसाय्य हीद भाष्यते । तथा चात्र अत एवेत्यस्य वेदनस्योक्तरीत्या भक्तिरूपोपासनात्मकत्वादेवेत्यर्थः । एवञ्च भक्तिवेदनयोर्भेदे श्रुतौ वेदनोपायत्वविधानपूर्वं तदतिरिक्तोपायनिषेधः, स्मृतौ भक्त्युपायत्वविधानेन भक्त्यातिरिक्तोपायनिषेधश्च मिथो विरुद्धः स्यात् । अतोऽपि हेतोर्वेदनं भक्तिरूपोपासनं प्रतिपत्तव्यमिति ।

यत्तु, ध्यानस्याप्रयाणादनुवर्तमानत्वं न सार्वत्रिकम्; लब्धाद्वैतात्मसाक्षात्कारपुरुषदृष्ट्या वस्तुभेदाभावेन तेषां तदनुवर्तनासम्भवादिति–तन्न–तर्हि तद्दृष्ट्या वस्तुभेदाभावेन भिक्षाटनादेरप्यनुपपत्तेः । इतरजीवदृष्ट्या ज्ञानिनि भिक्षाटनादिरस्ति; न वस्तुत इति चेत्—तथा सति तथैव ध्या-

नमपि कुतो न भविष्यति । 'भिक्षाटनस्य क्षुन्निवृत्तिसाधनत्वात्तदस्ति' । साक्षात्कारबलेन ब्रह्मणः प्राप्तत्वात्ततः परं क्रियमाणस्य ब्रह्मप्राप्तिसाधनत्वं कथमिति चेत्—एवं ब्रह्मप्राप्तस्य क्षुधोऽप्यभावात् तन्निवृत्तिसाधनत्वं भिक्षायाः कथं? अन्यबुद्ध्या तदुपलम्भ इति चेत्—अन्यबुद्ध्या ब्रह्मप्राप्तिसाधनत्वमपि गृह्यताम् । किंच तव मते लोकसंग्रहार्थमेव ध्यानमवश्यमाप्रयाणमनुष्ठेयम् । न चेत् लोकसंग्रहार्थं प्रवृत्तो जीवन्मुक्तो भिक्षामटन् ब्रह्म चानिध्यायन् सम्यगेव लोकं संसारितामापादयतीति अयमेव विलक्षणो लोकसंग्रहः स्यात् ।

यच्च 'आप्रयाणात्तत्रापि हि दृष्टम्' इति सूत्रस्यानुत्पन्नात्मसाक्षात्कारविषयत्वेन नयनं—तच्चायुक्तम्—सङ्कोचे प्रमाणाभावात् । (अन्यथाऽऽवृत्तिसूत्रस्यापि तथा नयनप्रसङ्गात् ।) आवृत्तिविधानबलादेव साक्षात्कारपर्यन्तध्यानसिद्धौ मध्ये स्वयमलब्धसाक्षात्कारस्याप्रयाणं ध्यानानुवृत्तेः स्वयमेव संभवेन तत्र सूत्रद्वयादेः वैयर्थ्यप्रसङ्गेन लब्धसाक्षात्कारस्यापि तावत्पर्यन्तानुवर्तनीयत्वपरत्वेनैव तत्सार्थक्यस्य वर्णनीयत्वात् ।

यत्तु—आप्रयाणसूत्रस्यानात्मविद्विषयतया योजनान्तरधावनम्—तत् स्वाभिमततत्त्वपरतया फलाध्यायार्थवर्णनेऽत्यन्तस्पष्टमनेकविधमनौचित्यमाकलयतामापतितेष्वनेकाधिकरणार्थवर्णनहठत्करणेष्वन्यतममित्यलं बहुनात्र संक्षेपग्रन्थे ।

यत्तु—साक्षात्कारोत्तरं भेदस्य सत्यत्वेन प्रतिभासाभावात् कर्म न सम्भवति । अथापि ज्ञानिना लोकसंग्रहार्थं लोकदृष्ट्या क्रियत इति—तत्र अयं लोकसंग्रहार्थमनुतिष्ठतीति न लोकानां दृष्टिः । किं तु अनेन क्रियते तदस्माभिरपि कर्तव्यमेव । स्वयं लोकसंग्रहार्थं करोतीत्यपि न; स्वदृष्ट्या सत्यवस्तुभेदाभावेन, को लोकः? कः संग्रहः? कथं च तस्योद्देशः? कथ च कर्मकरणमिति सर्वमसम्भावि । किञ्च अस्माननुसृत्य लोकोऽप्येवं करोत्विति मन्वानस्य जातः साक्षात्कारः कथं अद्वैतसाक्षात्कारः स्यात्? अपि च अचेष्टमान-

मेव ज्ञानिनमयं लोक एवं व्यापृतं गृह्णातीति हि अन्यदृष्ट्या, लोकदृष्ट्या इत्याद्युक्तेर्भावो वाच्यः । एवं सति स वस्तुतो विनष्टसर्वोपाधिरिति न जीवन्मुक्तः स्यात्—कथं चाद्यतनाः शुकवामदेवादीनपि जीवन्मुक्ततया संप्रति न पश्यन्तीति विचिन्त्यम् ।

एवमत्र—'साक्षात्कारोत्तर कर्मणोऽसम्भव एव, भेदस्य सत्यत्वेन प्रतिभासाभावात्', 'लोकसंग्रहार्थं क्रियमाणं कर्म'; लोकदृष्ट्या क्रियमाणं कर्म'; (५४ पु) 'जीवन्मुक्त न कर्म करोति । किं तु कर्म जायते; परपरिचर्यादिकं लोकसंग्रहार्थं च बुद्धया क्रियमाणं कर्मास्ति' इत्येवमादि बहुव्याहृतवादिना त्वया स्वरूपव्याक्रियैव पराक्रियेति न्यायेन स्वयमेव जीवन्मुक्तिः खण्ड्यत इति कृतमधिकेन ।

यत्तु—विवेकविमोकक्रियाकल्याणानवसादानुद्धर्षाणां साधनचतुष्टयेऽन्तर्भावकथनम्—तत् ध्रुवानुस्मृतिसाधनतया वाक्यकारोक्तानां तथैव भाष्ये उपपादितानां तेषां सतां, श्रवणसाधनत्वेन त्वदभिमतचतुष्टयेऽन्तर्भावस्य स्वदिष्टासाधकतयाऽनपेक्षितमसङ्गतं च । यदि श्रवणपूर्वभावित्वं एषामुपपाद्य ततो विविदिषायां जातायां श्रवणे च निष्पन्ने तेषामनपेक्षेति विवक्ष्यते; तर्हि न केवलं प्रमाणविरोधः; किं तु, साक्षात्कारोत्तरं न कर्मणः कश्चिदुपयोग' इति तत पूर्वमात्मसाक्षात्कारेच्छाधायकचित्तशुद्ध्यापादकत्वस्य सत्कान्तर्गते कर्मणि भवतैवाभ्यनुज्ञानाद्याहतिश्च ।

यच्च—आत्मैक्यविद्यानिष्पत्तौ द्वैतप्रतिभासमूलककर्मानुष्ठानस्य केनापि प्रकारेणोपयोगासम्भवात् विहितकर्मानुष्ठानेनैव विद्यानिष्पत्त्युक्तिरयुक्तेति—तत्र विमृश्यते । ईदृशभेदप्रतिभासवर्धकस्य कर्मणः अभेदज्ञानेच्छोपयोगिचित्तशुद्धिकरत्वमपि कथम् ? यदा चित्तशुद्धिरिच्छोपयोगिनी, तदा इष्यमाणाद्वैतात्मविद्योपयोगिन्यपि । न खल्विच्छामात्रेण सति प्रतिबन्धके कार्यं सम्पद्यते । अतस्तदर्थचित्तशुद्धिकरत्वमपि कर्मणस्त्वदाश्रितेनैव पथा भवेदेव ।

यद्यत्र विरोधिता, तर्हि इच्छाविरोधित्वमपि दुष्परिहरम् । ईश्वरज्ञानगर्भत्वात् कर्मणामीश्वर. प्रीतश्चित्तशुद्धिमापादयतीत्यानुकूल्यमेवेति चेत्–तत्र विद्योपयोगिचित्तशुद्धिविषयेऽपि तुल्यम् । कर्मणा साक्षाज्ज्ञानजनकत्वं नास्तीति चेत्—साक्षाद्वेदनेच्छाजनकत्वमपि नास्ति ; चित्तशुद्धेर्मध्येऽपेक्षणात् । फलाभिसन्धिरहितकर्मानवरतानुष्ठानबलेन मूलाभिसन्ध्यभ्यासो विच्छिद्यते । ततश्च ब्रह्म जिज्ञासत इति चेत्–अनवरतेदृशकर्मानुष्ठानव्यग्रस्य तादृशकर्मफलापानुतिष्ठान्तैव कथं ब्रह्मजिज्ञासा न प्रतिबध्नीयात् ? प्रथमतः कर्मकलापे सावधानं प्रवृत्तोऽपि क्रमेण ब्रह्मणि निक्षिप्तमना अव्यग्र एव फलाभिसन्धिरहितं कर्म अभ्यासवशेनाऽऽवर्तयतीति न कर्मानुष्ठानेऽपि तस्य तीव्रेच्छेति चेत्– तर्हि तादृशस्य जिज्ञासाब्रह्मज्ञानगर्भमेव कर्मानुष्ठानमिति कथं ज्ञानपूर्वभाविजिज्ञासाप्राक्तनं कर्मानुष्ठानमिति नियन्तुं शक्यम् ?

अपि चाननुष्ठितशुद्धकर्मणा अव्यग्रफलव्यग्रमाणा अजिज्ञासायामपि 'अयमात्मा ब्रह्मे'ति वाक्यश्रवणे ज्ञानमुत्पत्तव्यत्वाज्जायत एवेति कथं जिज्ञासामन्तरा ज्ञानानुत्पत्तिः ; उत्पन्नमपि न प्रतिष्ठितं भवतीति चेत्—तर्हि आत्मप्रतिष्ठ कर्मानुष्ठानस्वीकारे कथं श्रवणानन्तरं कर्माभावः ? किञ्च चित्तशुद्धिजननं नाम चित्तगतरजस्तमोनिबर्हणम् ; सत्त्वमयत्वापादनमिति यावत् ? ततश्च 'सत्त्वात् सञ्जायते ज्ञान' मिति ज्ञानोत्पत्तिरेव सत्त्वफलतया प्रमाणसिद्धा, नेच्छेति सिद्धं कर्मणश्चित्तशुद्धिद्वारा विद्यार्थत्वम् । अल्पास्थिरफले विरक्ताना अनल्पस्थिरफलेप्सूना तदुचितोपायवेदनेच्छा निष्कामकर्मकलापाननुष्ठानेऽपि भवत्येवेति च न तत्र कर्मणा करणत्वम् । न च जन्मान्तरानुष्ठितकर्ममृदितकषायत्वात् विविदिषेति वाच्यम् , अस्मिन् जन्मन्यजन्ममरणफलकर्मप्रसक्तिः , क्रमेण तु वैराग्येण विविदिषेत्यनुभूयमानतया तथोक्त्यसम्भवात् । तथा हि सति जन्मतः प्रभृति विरक्ता विविदिषु स्यात् । एवं खलु प्रत्यधिकारि जन्मान्तरकर्मवर्णनेन विविदिषोपपादनेनेह

जन्मनि कर्मनिषेधे फलाभिसन्धिरहितकर्मानुष्ठानाधिकारिदौर्लभ्यात् तद्विधयो व्यर्था एव भविष्यन्ति । अङ्गीकृतं च भवता भवदीयैश्च, 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इत्यत्र तत्कार्यायेत्यस्य ज्ञानरूपकार्यायेत्यर्थं वर्णयद्भिः । प्रमाणानि च कर्मणा ज्ञानार्थत्वे पर शतानि । सत्यम्; अथापि जिज्ञासाद्वारा ज्ञानार्थत्वमिति चेत्—सत्यं जिज्ञासाऽस्ति । पर तु सा कर्मानुष्ठानात् पश्चादिव प्रागपि वर्तत इति न तस्याः द्वारत्वमिति विशेष इत्यलमधिकेन । अयं च विविदिषासाधनत्वपक्षः प्रागपि निरस्तः ।

यदपि—(पु. ६६) आत्मोपासनारूपकर्मण आत्मविज्ञानसाधनत्वेऽप्यग्निहोत्रादिविहितकर्मणश्चित्तशुद्धिद्वारैवात्मविज्ञानसाधनत्वमित्यस्मन्मतशिक्षणपुरःसरं, ततश्चाश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्त्युक्तिश्चिन्त्यैव' इति कथन--तदपि हेयम्; अस्मन्मते उपासनाया एव विद्याविज्ञानादिपदार्थतया उपासनारूपकर्मणो विज्ञानसाधनत्वसिद्धवत्काराऽयोगात् । कर्मणश्चित्तशुद्धिद्वारा साधनत्वे 'कर्मानुष्ठानेनैव विद्यानिष्पत्ति'रिति सूक्ते कुतश्चिन्त्यता ? साक्षात्साधनत्वस्यानुक्तेः । कर्मणा विद्यानिष्पादकत्वं विद्योत्पत्तिहेतुशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिकरप्राचीनपापापोहनेनेति हि श्रीभाष्य एव स्पष्टमभाणि । जिज्ञासोत्पत्तौ स्थिताया कर्मानुष्ठानविरहेऽपि विद्यानिष्पत्तिरिति भवदभिमतखण्डनाय प्रयुक्तोऽयमयोगव्यावृत्त्यर्थ एवकारः । यदपि—साक्षात्साधनत्वाभावेन कर्मणा विद्याङ्गत्वं न भवतीति—तन्न—न हि साक्षात्साधनत्वं एवाङ्गाङ्गिभावः । व्रीह्यादीनामतथाभूतानामपि दर्शाद्यङ्गत्वदर्शनात् । अन्यथा विविदिषा प्रत्यपि कर्म नाङ्गं भवितुमर्हति । तदुद्देशेन विहितत्वरूपं तदङ्गत्वं तु विद्यां प्रति कर्मणः सुस्थमेव ।

यत्तु—'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' इत्यत्र सहशब्देन साहित्यं विद्याकर्मणोरुच्यत इत्ययं भ्रमः । स इति यच्छब्दप्रतिसम्बन्धी तच्छब्दो ह्ययम् । हेति पृथ

गीति—तन्न यच्छन्दबलादेव तच्छब्दस्य तत्र तत्त्वेनापि सुलभत्वेन साहित्यपरतया अयुक्तत्वाभावात् । पूर्वार्धस्थपदार्थस्य उत्तरार्धार्थान्वयक्लेशं विनैव पादव्यवस्थानुरोधस्य च यावत्सम्भवं स्वीकार्यतया साहित्योक्त्या अत्रैव वेदेत्यत्रान्वयौचित्यात् , अपूर्वतया ज्ञापनीयमृत्युतरणादिवाक्यार्थे इत्युक्तप्रसिद्धेरनन्वयाच्च पृथक्पदत्ववादिन एव भ्रम इत्यपि सुवचम् । परं त्विह चकारद्वयेन उभयमिति पदेन च साहित्यं प्रतीयत एवेति सहृदयैस्तत् यथायुक्तमस्तु ।

यच्च—'इयाजसोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रय । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥' (विष्णु. ६. ६. १२) इति ज्ञानिना केशिध्वजेन कर्मानुष्ठानकथनं ज्ञानानन्तरमपि कर्मत्यागस्यायुक्तत्वं दर्शयतीत्याक्षिप्तं परिहर्तुमुच्यते , लोकसंग्रहार्थं तत्र प्रवृत्तिरिति—तन्न—श्लोक एव 'तर्तुं मृत्यु'मिति मनोमलतरणार्थत्वोक्त्या तदयोगात् । निर्वापिताङ्गारतुल्यावशिष्टमनोमलनिरासाय चित्तशुद्धिस्थिरतायै च कर्मानुष्ठानमिति चेत्—हन्त ! स एव महात्मा चित्तशुद्धिमवर्जनीयां तदर्थं कर्मणां सर्वदा अपेक्ष्यमाणतां च स्वानुष्ठानेन स्पष्टयतीति कथं कर्मत्यागः । अतः कर्मणां सर्वदाऽपेक्षितत्वात् कर्मविचारानन्तर्यमेवाथशब्दार्थः ।

यत्तु—(पृ. ६७.) नित्यत्वानित्यत्वादिकं गुर्वादिमुखाच्छ्रुतवतां विश्वासवतां मीमांसाश्रवणमन्तरेणापि नित्यानित्यवस्तुविवेकादयः सम्पत्स्यन्त इति—तन्न—तथा सति तस्य तथैवोत्तरमीमांसाश्रवणमन्तरेणैव ब्रह्मज्ञानस्यापि सुखेन सम्भवादिहापि न प्रवृत्तिः स्यात् । अधीतवेदस्य विलक्षणा जिज्ञासास्त्वादिमभागेऽप्यविशिष्टा । अन्तरेण मीमांसाश्रवणमलभ्यो विवेक इति च प्रागुक्तम् । यत्तु—विनियोगविध्यधीनोऽङ्गत्वबोधश्च मीमांसोक्तश्रुत्यादित एव भवतीति कृत्वा जैमिनिमीमांसायाः पूर्ववृत्तत्वकथनमयुक्तम् । न हि जैमिनिना श्रुत्यादीनां विनियोजकत्वमलोकसिद्धमपूर्वं प्रतिपाद्यते ।

अधमानयेत्यादौ लोक एव द्वितीयाश्रुत्याऽश्वस्यानयनाङ्गत्वस्याश्रुतमीमांसेनापि ज्ञातत्वादिति—तदिदं त्वद्वाक्यं लोकमात्रोपजीवने मीमांसाया अश्रवणे अङ्गाङ्गिभावो नावगम्येत, कथञ्चित् प्रयासे विपरीत एव वा गृह्येतेतीममेवार्थं द्रढयति । अश्रुतमीमांसस्यैव हि भवेदयं भ्रम. । न हि द्वितीयाश्रुतिरश्वस्याङ्गत्वं बोधयति । स्वप्रकृत्यर्थस्याङ्गित्वमेव हि सा श्रुतिर्बोधयेत् । यथा 'व्रीहीनवहन्ती'त्यत्र व्रीहीणाम् । अत एव 'सक्तून् जुहोती'त्यादावपि सक्तूनामङ्गत्वबोधाय तृतीयाविपरिणामादिक्लेशावलम्बनम् । किञ्च केनापि कदाऽप्यनवगतमपूर्वं किञ्चिद्वस्तुमपौरुषेयाद्वेदादन्य कोऽपि न पारयत्येव । न च तावता सर्वमनपेक्षित भविष्यति । अन्यथा य कश्चिद्दधितुल्यस्तदधिको वा सर्वं स्वयमेव ज्ञास्यतीति सर्वस्यापि स्मृतिकलापकर्मब्रह्ममीमांसादेर्वैयर्थ्यापत्ते । अत्र च—'एषा साधनत्व च विनियोगावसेय'मिति सूक्तेर्यथावदर्थमगृहीत्वा, एषा चतुर्णां साधनानामिति मत्वा, 'साधनचतुष्टयस्य जिज्ञासासाधनत्वं मीमांसाश्रवणमन्तरेण न सम्पत्स्यत' इति विलेखनम्, तदुपपादकतया "श्रुतमीमांसो हि 'शान्तो दान्त' इति वाक्येन शमादीनामात्मदर्शने विनियोग कर्तुं शक्नोती"ति वाक्यरचन च विवेकिनामतीव हृदयङ्गमम् । न तु —उत्तरमीमांसाश्रवणमन्तरेणात्मावगत्यङ्गीकारेऽपि आत्मजिज्ञासापेक्षया जैमिनिमीमांसाया नियतपूर्ववृत्तित्वासिद्धिरेव —इति—तादृश आक्षेप, अध्ययनमन्तरेणापि वेदार्थकर्मावगते सम्भवस्य भवतैवोक्तत्वात् 'अथातो धर्मजिज्ञासे'त्यत्र वेदाध्ययनानन्तर्यविषयेऽपि तुल्य । चतुरध्यय्या जैमिनीयसापेक्षत्वं च प्रागेव दर्शितम् ।

यत्तु—"तस्मादेवंविच्छान्तोदान्त. .'इति वाक्ये पश्येदिति साक्षात्कारसाधनत्वस्यैव शमादौ कथनान्न तस्य जिज्ञासासाधनत्वावगतिरित्युक्त न सम्यक्, एवमपि जिज्ञासासाधनत्वस्यानिषेधा"दिति—तद्विचलम्—इय हि श्रुति श्रवणसाधन व शमादावस्तीत्यत्र भवता भवदीयैश्च प्रमाणीक्रियते ।

तत्र न तदवगतिरिति च वय ब्रूम । अनिषेधमात्रेण तस्यास्तत्र प्रमाणत्वे च, 'गामानय' 'अरुणया पिङ्गाक्ष्या क्रीणाति' इत्यादीनामपि शमादे श्रवणसाधनत्वे प्रमाणत्व स्यात्; तैरपि तत्साधनत्वस्यानिषिद्धत्वात् । विशिष्य चात्र श्रुतौ एवंविदित्यनेनात्मज्ञानस्य शमादिप्राग्भावित्वमपि स्पष्टम् । न चेद् वेदन आत्मन कर्मतत्फलसम्बन्धशून्यत्वविषयकमापातज्ञानमिति वाच्यम् । प्रमाणाभावात्; पश्येदिति निर्दिष्टदर्शनसाधन-तत्समानविषयकज्ञानस्यैवात्र वक्तव्यत्वाच्च । श्रवणादिकाले तदुत्तर च शमादय आवश्यका इतीद तु वयमपि स्वीकुर्म । परं तु ते कीदृग्रूपा कदाऽपेक्षिता इति तु शोधनीयम् । उद्गीथादिविचारबलादपि जैमिनीयमीमासाया पूर्ववृत्तत्वमावश्यकमिति च प्रागुक्त न विस्मर्तव्यम् ।

---

*न निर्विशेषा प्रथते न चेत्थ*
*निरूप्यते धीर्न च शब्दजैवम् ।*
*न निर्विकल्प सविकल्पक वा*
*सन्मात्रधीर्भाति हि बह्वनाध्यम् ॥*

यत्तु [६८. पु]—'निर्विशेषवस्तुनीद प्रमाणमिति न शक्यते वक्तु'मिति सूक्तिं गृहीत्वा, प्रमाणानां प्रमाणान्तरविषयत्वेऽनवस्थापातात् प्रदीपस्य स्वप्रकाशत्वमिव स्वयप्रमाणत्वमेषितव्यमिति स्वप्रकाश परमात्मा स्वयप्रमाणमिति लेखनम्—तत्र न्यायदर्शने प्रमाणपरीक्षणसूत्राणा (२. १. ८ १९) सभाष्याणा यथावत् परामर्शे सति निरस्तमेवेति किमत्र विस्तरेण । नून तत्रैव 'न प्रदीपप्रकाशवत् तत्सिद्धे'रिति सूत्रे महर्षिणा वात्स्यायनेन भाष्यकृता खण्डितमर्थं परिगृह्य तदभिमतमर्थमपरिशीलितवानसि । प्रमाणाना प्रमाणान्तरविषयत्वेऽनवस्थेति स्वयप्रमाणत्व स्वात्मकप्रमाणविषयत्वरूप प्रमाणसिद्धत्वमेव हि त्वयोच्यते । न खलु प्रमाणानामिन्द्रियादीना स्वप्रका-

शत्व कश्चिन्मन्तुमर्हति । न खलु च प्रदीपप्रकाश इन्द्रियसंनिकर्षग्राह्य स्वप्रकाश । प्रदीपान्तरनिरपेक्षता तु तत्र काम स्यात् । नात प्रमाणाना प्रमाणान्तरानपेक्षता । क्लृप्तप्रमाणेष्वेकैकेनान्यस्य सिद्धया च नाधिकप्रमाणस्वीकारकृतोऽनवस्थापात ।

अस्ति पुनरस्मदभ्यन्तमतानुसारेणात्मना पर स्वप्रकाशत्वम् । अथापि स स आत्मा तस्य तस्यैव स्वय प्रकाशते, न परस्य। प्रवृत्त्याद्यनुमेयो हि पर परस्य। तथा च पर ब्रह्मापि स्वात्मने स्वय प्रकाशमानमपि नास्माभि प्रमाणानपेक्ष गृह्यत इति अस्त्येव प्रमाणान्तरापेक्षा । जीवब्रह्मणोरैक्यात् स्वप्रकाशत्वमस्त्येवेति चेत्—किं जीवस्य ब्रह्माभिन्नत्वेन रूपेण स्वप्रकाशत्वम्। उत स्वरूपत ? नाद्य, अननुभवात्। तथा सति भेदग्राहिप्रत्यक्षादीनामेवोत्पत्त्यनवकाशप्रसङ्गात्, शास्त्रवैयर्थ्याच्च । ना न्त्य, स्वरूपत प्रकाशेऽपि ब्रह्माभिन्नत्वाप्रकाशात् प्रत्यक्षादिना भेदस्यानुभूयमानत्वाच्च यावत्तदनुपमर्द 'ब्रह्मास्म्यह स्वयप्रकाश' इत्यस्य दुर्वचत्वात्।

किं च 'निर्विशेषवस्तुनि इद प्रमाणमिति न शक्यते वक्तु' मिति सुवत्या हि निर्विशेषत्वेन रूपेण वस्तुसद्भावे प्रमाण नास्तीत्युच्यते । तत प्रमाणान्तरमनपेक्ष्य तत्सिद्धिवादिना भवता निर्विशेषत्वेन रूपेणैव स्वप्रकाशत्वमुपपाद्यम्। तच्च 'स्वात्मसाक्षिकविशेषानुभवादेव निरस्त' इति सुवत्यैव निरस्तम् । धर्मिमात्रस्वयप्रकाशतया च न विवादगोचराशविनिर्णय । निर्विशेषत्वस्य स्वरूपातिरिक्तत्वे द्वैतप्रसङ्ग । तत्रापि मिथ्यात्वे च न तस्य स्वप्रकाशत्वम् । आत्मनो वस्तुत सविशेषत्वापत्तिश्च । एव निर्विशेषत्वस्यातिरिक्तत्वे स्वरूपात्मकत्वे वा स्वप्रकाशत्वाङ्गीकारे निर्विवादा वादिनो नैव प्रत्यवतिष्ठेरन् । विविधविकल्पप्रपञ्चात्मकविशेषवत्ताप्रतीतिश्च नोदयमासादयेत् । तत सोऽश अस्वप्रकाश एवेति अवश्यमेव प्रमाणमेक निर्देष्टव्यम्। तस्य तु दुर्भिक्षमेव । ततश्च प्रामाणिक सविशेषत्वमेव सर्वस्य

वस्तुन इति ।

'यस्मिन् ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनाम् ।
निष्ठायै प्रभवन्ति [वि. ६. ८. ५५]

इति वचनमपि प्रमाणानि परिच्छेदाय न प्रभवन्तीति भवदुक्तार्थपरमेव सत् यथावस्थितपरिपूर्णब्रह्मगमकत्वासम्भवं मानिषु वर्णयत् ब्रह्मणः अपरिच्छिन्नत्वमनन्तविशेषवत्त्वमेव दर्शयतीति, तावता तस्य प्रमाणाधीनं परिपूर्णवेदनमशक्यमित्येव लभ्यते ; न [redacted] निर्विशेषत्वम् । 'सर्वशक्तिनिलये' इति तत्रैव निमित्तत्वोपादानत्वादिलोकपरिदृष्टानेकशक्तिमत्त्वस्यानेकविभूतिमत्त्वस्य चोक्तत्वाच्चायमेवार्थः ।

यच्च—प्रमाणानि सर्वमूलभूतं तद्वस्तु दूरत एव स्थित्वा मूलकारणत्वेन सूचयन्ति । यथा दीपो दूरतः स्थित्वाऽन्धकारं सूचयति तद्वदिति—तत्र प्रमाणानां दूरतः स्थितत्वेऽपि मूलकारणत्वेन सूचितत्वात् तद्वैशिष्ट्यात् सविशेषत्वप्रसङ्गः । मूलकारणत्वं दूरतः स्थापयित्वा सूचयन्तीति चेत्—तथा भवता नोक्तम् । न च प्रमाणानि 'तत्र मूलकारणमिति दर्शयन्ति । दूरतः स्थापनं हि नाम तदसम्बन्धित्वेन बोधनम् ; तत्सम्बन्धित्वेनाबोधनं वा । न च मूलकारणत्वेन सूचयतां तेषां तद्घटते । एवं यतः प्रमाणान्यस्तित्वं प्राप्तानि, अतः प्रमाणप्रमेयादिसर्वव्यवहारोपजीव्यं किञ्चित् स्यादित्येवं ....सूचयन्ती'ति वदता त्वया पुनरनुमानप्रमाणविषयत्वं ब्रह्मणि दर्शित इति कथमुक्तम्—'प्रमाणानि न स्वविषयत्वेन परं ब्रह्म बोधयन्ती'ति । दीपदृष्टान्तश्चायुक्तः । न हि दीपस्तमः प्रकाशयति । अदीप एव हि सन् अन्धतमसमध्यक्षयति । को हि नाम तमो द्रष्टव्यमिति प्रदीपं प्रज्वलयिष्यति । सर्वथा मूलकारणत्वेन रूपेण तत्सूचकत्वस्य भवदुक्ततया प्रमाणानां सविशेषविषयत्वं भवतैवोक्तमिति किमधिकेन ।

यत्तु-(पु. ६९)—परं ब्रह्म स्वाभिन्नशक्तिमत् । शक्तेरनुस्यूतत्वात्

निर्गुणं निर्विशेषमेकं सद्रूपम्—इति—तत्र शक्तिरूपगुणविशेषवत्त्वे कथं निर्गुणत्वं निर्विशेषत्वं च। अनुद्भूतत्वात् तस्याः निर्गुणत्वादिव्यपदेशोपपत्तिरिति चेत्—काममस्तु। तावता वस्तुनः सविशेषत्वमवाक्षतं भवति। किं च किमिदं शक्तेः स्वाभिन्नत्वम्? किं गुणगुणिनोर्भेदाभेदाङ्गीकारेणेत्थमुच्यते, किं वा शुक्तौ रूप्यस्येव तत्र शक्तेरध्यस्तत्वं न तत्सत्ताऽभिन्नसत्ताकत्वमिति कृत्वा? नाद्यः, ईदृशनिर्विशेषत्वस्य सर्वप्रपञ्चसाधारण्यात्, सर्वत्र धर्मधर्मिणोस्तत्सम्भवात्। नान्त्यः, तदानीं कल्पकदोषपुरुषाद्यभावेन तदयोगात्। इदानीं प्रपञ्चसिद्ध्यनन्तरमस्माभिः कल्पितत्वं च कल्पनात् पूर्वमनिर्वचनीयसत्त्वे प्रमाणाभावेन प्रपञ्चात्पत्तेरेवासम्भवात्। अकल्पितमेव शक्तिरूपं किञ्चिदासीत्। तत्र प्रपञ्च उत्पन्नः। इदानीं च तस्य शुक्तिरूप्यसाम्यं वर्णयाम इति चेत्—वर्ण्यतां कामम्। सोऽयमपि वर्णयितुमशक्योंऽश प्रामाणिको न भवतीत्यतावदुच्यते। अकल्पितगुणभूतशक्तिसत्त्वे च ज्ञानवाद्वयत्वाभावेन द्वैतप्रसङ्गः जगत्सत्यत्वप्रसङ्ग इत्येवं बहूनि प्रमापयेत। यदि चात्यन्ताभिन्नत्वमेव शक्तिब्रह्मणो, तर्हि किमर्थं शक्तिप्रस्तावः। जगच्च ब्रह्मपरिणाम एव तदित्यादि वक्ष्यते।

यच्च—सृष्टिकाले सा शक्तिरुद्भूता भवति। उद्भूतशक्तिमद्ब्रह्मैवेश्वर इति—तत्र कोऽयं सृष्टिकालः। किं शास्त्रवर्णितासु सृष्टिप्रलयपरम्परास्वेकः, किं वाऽयमादिमः। नाद्यः, तथा सति प्रलये शक्त्युद्भवाभावेनेश्वराभावप्रसङ्गात्। अचेतनायाः शक्तेः पुनश्चेतननिरपेक्षमुद्भवकथने निरीश्वरसांख्यमतप्रवेशापत्तेः तदैक्षत बहु स्यामित्यादिशास्त्रविरोधापाताच्च। न च निर्विशेषं ब्रह्म सङ्कल्पयिष्यति। अतः सर्वदैवेश्वरस्य सद्भावावश्यकतया न पश्चादुद्भूतशक्त्यवच्छिन्नमीश्वरपदवाच्यम्। नान्त्यः, संसारस्यानादितया तादृशकालस्यैवाप्रामाणिकत्वात्। कालस्यापि कल्पितत्वेन 'सृष्टिकाले' इति व्यवहारस्यापि शक्त्युद्भवाभावे दुर्वचत्वाच्च।

यच्च—जगज्जन्मस्थितिलयानां सविशेषेश्वराधीनतया सविशेष
वश्यकत्वमिति निर्विशेषं एकं किमिति स्वीकार्यमित्याशङ्क्य श्रुत्येकसम
ध्यं परमात्मस्वरूपं यथाश्रुत्यङ्गीकार्यमिति—तच्च न युक्तम् ; निर्विशेषव
स्वप्रकाशत्वसिद्धत्वे ईदृशविवादस्यैवावसराभावात् । विवादप्रदर्शनात्
यंप्रकाशत्वं भवदुक्तं मयैव निरस्तमिति निश्चीयते । यथाश्रुत्यङ्गीक
निर्विशेषासिद्धेरेवेति निरूपयिष्यामः ।

यत्तु—निर्गुणमिति श्रुतेः संकुचितार्थत्वे मानाभावात् हेयगुणर
त्यपरत्वासम्भवात् गुणसामान्याभावपरत्वात् तादृशवस्तुसिद्धिरिति—त
विविधसगुणश्रुतिविहितसद्गुणनिषेधे मानाभावात् गुणसामान्यनिषेधासिद्
अस्माकं संकुचितार्थकत्वे सगुणश्रुतिर्मानम् । यथा 'न हिंस्यात् सर्वा
तानी'त्यत्र सङ्कोचे 'अग्नीषोमीय'मित्यादिश्रुतिः । 'ज्ञानशक्तिबलैश्वर्यव
तेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥' इति
सद्गुणत्वं ब्रह्मणो हेयगुणराहित्यं च स्पष्टमेवाह । गुणविशेषविधिनिषेधप
'अपहतपाप्मा....सत्यसङ्कल्पः' इति श्रुतिरप्यत्र मान्या । तथा च साम
न्यतो गुणवत्त्वबोधकानामितरविलक्षणज्ञानशक्त्यादिगुणविशेषपरत्वं, गु
निषेधकानां च वचनान्तरविहितगुणव्यतिरिक्तगुणाभावपरत्वं च विरुप
युद्ध्यमाने कथमसौ गुणसामान्यनिषेधवादः न्यायविदग्रे शिरः प्रदर्शयेत्

एतेन—निषेधस्य प्राप्तिपूर्वकत्वात् सर्वज्ञत्वादिगुणानामेव ब्रह्म
जगत्कारणत्वान्यथानुपपत्त्या प्रसक्तत्वात् हेयगुणानां प्रसक्त्यभावात् प्रसक्त
सद्गुणनिषेधपरत्वमेव निर्गुणवाक्यस्येत्यपि निरस्तम्—एवं हि सति 'विन
हेयैर्गुणादिभि' रित्यत्र ब्रह्मणि हेयगुणनिषेधः कथम् ; प्रसक्त्यभावस्य भव
दुक्तत्वात् । तत्र प्रसक्त्युपपादने च तथैव निर्गुणश्रुतिः उक्तातिरिक्त-प्रसक्त

भ्य हेयगुणप्रसक्तिं भवान् चोदुमर्हति । यो यो विशेषः स स सामान्यप्रकृतिकः । यथा घटशरावादिर्मृद्रूपसामान्यप्रकृतिक इति नियमेन निर्विशेषसिद्धिकथनं च न सङ्गतम् । तावता सर्वप्रकृतित्वरूपविशेषस्यैव सिद्धेः । वस्तुना सलक्षणप्रकृतिकत्वस्यैव दर्शनेन सालक्षण्योपपादने सविशेषत्वमेव सेत्स्यति । विलक्षणस्यापि प्रकृतित्वस्वीकारेऽपि विरुद्धलक्षणवत्त्वस्यैव विलक्षणपदार्थतया सविशेषत्वसिद्धिरेव । सर्वत्र सविशेषः सविशेषप्रकृतिक एव दृष्ट इति, सिद्ध्यदपि सामान्यं सविशेषमेव स्यात् । 'सामान्यमात्रोपसंहारे च कृतक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थम् (यो सू १ २५) इति योगसूत्रभाष्यमपि न वस्तुनिर्विशेषमस्तीति ब्रवीति । किं तु स्थितस्यापि विशेषस्य प्रतिपत्तिरनुमानान्न भवतीत्येव स्पष्टमाह । हेतोर्यादृशसाध्यव्यापकत्वम्, तादृशसाध्यमात्रानुमापकतया न तद्गतविशेषविषयकविशेषप्रतिपत्तिकरत्वम् । न खलु धूमः वह्निमात्रादधिकं वह्निगतं प्रत्यक्षदृश्यवर्णपरिमाणादिविशेषं यथावत् ज्ञापयितुं प्रभवति । अतोऽनुमानान्न स्थितस्यापि विशेषस्यासाधारणधर्मस्य प्रतिपत्तिः, किं तु दृष्टान्तगतसाध्यसामान्यविशिष्टवस्तुसिद्धिरेवेति । अतो न तद्भाष्यमत्यन्तनिर्विशेषत्वसद्भावसाधकम् ।

'यतो वाचो निवर्तन्ते' इति वचनमपि न निर्गुणसाधकम्, यच्छब्देन पूर्वोक्तनिखिलगुणविशिष्टब्रह्मण एव परामर्शेन तमलब्ध्वा वाङ्मनसयोर्निवृत्तिकथनेन तावद्ब्रह्मग्रहणसामर्थ्याभावस्यैव वाङ्मनसयोः सिद्धेः । अप्राप्येत्यत्र 'गुणानामन्तमप्राप्य' इति कर्माध्याहारोऽपि नास्माकमापादनीयः । आवश्यकत्वाभावात् । यत्तु—परमात्मनः कृत्स्नगुणविशिष्टस्याप्रकृतत्वादिति—तत्पूर्वोत्तरश्रुतिवाक्यसमुदायापर्यालोचनमूलकम् ।

यदपि—यच्छब्दस्य ब्रह्मानन्दपरत्वं न युक्तम् 'स एको ब्रह्मण आनन्द' इति वाग्विषयत्वात्तस्य, शतगुणितोत्तरक्रमेण मनसा कल्पयितुं

शक्यत्वाच्च ततो वाङ्मनसनिवृत्तिकथनासम्भवादिति—तत् स्वपक्षेऽपि तुल्यम् । यच्छब्देन ब्रह्मपरिग्रहोऽपि हि दुष्कर । तस्य तत्रैव ब्रह्मण इति वाग्विषयत्वात् , यो यो विशेष स स सामान्यप्रकारिक इति पूर्वोक्तयुक्त्या मनसा कल्पयितु शक्यत्वाच्च । किञ्चानन्दो ब्रह्मैव वा , अन्यो वा, आद्ये आनन्दस्य वाग्विषयत्वे ब्रह्मणोऽपि वाग्विषयत्वम् । अन्त्ये च तस्य सविशेषत्वापत्ति । वस्तुतस्तु आनन्दनिरूपणप्रकरणत्वादस्य यच्छब्देन आनन्दग्रहणमेव युक्तम् । एव च 'ते ये शत प्रजापतेरानन्दा । स एको ब्रह्मण आनन्द' इत्यत्र शतशब्दो न शतत्वसंख्यावचन , अपि त्वानन्त्यवचन । तथा च ब्रह्मानन्दस्यापरिच्छिन्नत्वेमेवेत्युक्तार्थविशदीकरणाय 'यतो वाच' इति वाक्यप्रवृत्तिरिति न किञ्चिदनुपपन्नम् ।

यत्तु—वाचो निवर्तन्त इत्यस्य वाचो विधिमुखेन न प्रवर्तन्त इत्यर्थ । अन्यथा , 'नेति नेति', 'यतो वाचो निवर्तन्ते' इत्येव निषेधमुखेन ब्रह्मणोऽपि वाग्विषयत्वसद्भावेनानुपपत्तेरिति—तेन किं सिद्ध्यति ? लक्षणेति । एव च वाक्पदस्य विधिमुखप्रवृत्तवाङ्मात्रपरत्वे निर्गुणेत्यस्य गुणविशेषरहितपरत्वे दोषोद्भावनमयुक्तम् । एव च परिच्छिन्नत्वप्रतिपादकवाक्परत्वेनापि वाक्पदसङ्कोचसम्भवात् किमिति प्रमाणविरुद्धनिर्विशेषत्वस्वीकारः । न च न वाक्पदस्य लाक्षणिकत्वम् । सामान्यतो वाचा ग्रहणेन तासा ब्रह्मणि विधिमुखप्रवृत्त्यभावस्यैव कथनादिति वाच्यम् , एवमपि 'यतो निवर्तन्ते' इत्यस्य 'यत्र प्रतिपादयन्ती' त्यर्थस्यैव स्वरससिद्धत्वेन निवर्तन्त इत्यस्य विधिमुखप्रवृत्त्यभावे लक्षणापत्ते । निषेधमुखप्रवृत्तवाक्याविरोधाय तथा लक्षणाया च 'सत्य ज्ञान' 'य सर्वज्ञ' 'यस्त्रयोनिम्' इत्यादि विधिमुखप्रवृत्तपरश्शतवचनाविरोधाय एतावदिति परिच्छिन्नत्वेन न प्रतिपादयन्तीत्यर्थवर्णनस्यैव सर्वश्रुतिहृद्यत्वात् । एव मनसेत्यस्याप्यशुद्धमन परत्वस्य तुल्ययुक्तिसिद्धत्वेन अन्त करणाधीननिर्विशेषसाक्षात्कारस्य भवदिष्टत्वेन च तन्निवृत्तिकथनेन

विशुद्धमनोग्राह्यत्वसिद्ध्याऽपि सविशेषत्वं दुरपह्नवम्। सिद्ध्यन्तु सर्वे विशेषाः। किन्तु सर्वेऽपि मिथ्याभूता एवेति चेत्-तर्हीदमेकं सर्वदा घुष्यताम्। किमिति श्रुतीनामन्यार्थकल्पनम्। अत्रान्यार्थासम्भवो शास्त्रार्थविस्तरश्च अस्मदाचार्यानुगृहीतपरपक्षनिराकृतौ द्रष्टव्यः॥

यत्तु—इद, अहम् इति सविशेषानुभवस्य सर्वात्मसाक्षिकत्वेऽपि विशेषस्य सर्वस्य सामान्यप्रकृतिकत्वात् लौकिकसविशेषानुभवमूलप्रकृतिभूतनिर्विशेषानुभवो नापह्नोतुं शक्य इति—तन्न—एवं सति स्वप्रकाशत्वस्यासिद्धेः। अनुमानेनञ्चात्रिर्विशेषस्य। यो यो विशेषः स सामान्यप्रकृतिक इति न्यायोऽपि (७१. पु) न भवति। तथा सत्याश्रयविषयरूपविशेषसहितानुभवप्रकृतितया निर्विशेषानुभववत् सविशेषगमनपचनादितत्तत्क्रियाप्रकृतितया निर्विशेषगमनपचनादिसिद्धिप्रसङ्गात्। रूपरसादीनां रक्तमधुरादिविशेषरूपाणां आश्रयादिविशेषरहितरूपादिसामान्यप्रकृतिकत्वकल्पनापत्तेश्च। अतो व्यभिचारान्नेयं रीतिरादरमर्हति।

यत्तु—साश्रयसविषयसविकल्पज्ञानापेक्षया साश्रयमविषयनिर्विकल्पसामान्यम्। तदपेक्षया निर्विषयं साश्रयं ज्ञानम्। तदपेक्षया निराश्रयधीमात्रम्। ततोऽपि सद्रूपम्। तत्र धात्वमपि न वर्तते। एतन्मूलक एवानुभूतिरपि सतीति सिद्धान्त इति—सोऽपसिद्धान्तः। सच्चिदानन्दरूपतया सिद्धान्तसिद्धे वस्तुनि चीत्वं नास्तीत्युक्तययोगात्। अन्यथा ब्रह्मणो जडत्वापत्तेरनुभूतेरेव सतीत्युक्तयसम्भवात्। तस्मादनुपपन्नेयं प्रकृतिविकृतिपरम्परा कल्पना।

यत्तु—निर्विशेषत्वसाधकानुमानोपन्यासे साध्यहेतुपक्षतावच्छेदकधर्माणां तत्र सत्त्वेन सविशेषत्वमेवेत्याक्षेपपरिहाराय कथ्यते, 'भावरूप एव स इति न राजाऽऽज्ञास्तीति'—किं तेन। अभावरूपविशेषमादायैव सविशेषत्वापत्तेः। साध्यहेत्वादिभेदस्यावश्यकत्वेनानेकविशेषापत्तेश्च। निर्वि-

शेषमित्यस्याभावातिरिक्तविशेषरहितमित्यर्थाङ्गीकारेऽपि सङ्कोचस्यावर्जनीयत्वेन प्रामाणिकसर्वविशेषापलापं विनैव हेयरूपविशेषपरतया सङ्कोचस्यैव युक्तत्वाच्च । भावातिरिक्ताभावानङ्गीकारे तेषामभावानां भावविशेषरूपतया आवश्यकत्वाच्च । न च सर्वेषामभावानामपि ब्रह्माभिन्नत्वम् ; तदसम्भवस्य वक्ष्यमाणत्वात् ।

यदप्युच्यते—निष्कर्षहेतुभूतविशेषाभाववत्त्वे विशेषवत्त्वप्रसञ्जनं न युज्यते । न हि वायौ रूपाभावेनैव रूपवत्त्वमापाद्यतेति—तदपि न ; अत्यन्तवैषम्यात् । रूपाभावस्य नीलपीतादिकिञ्चिद्रूपत्वरूपता न भवति । विशेषाभावस्तु ब्रह्मणि सविशेषपदार्थात् व्यावर्तकतया कल्प्यमानः अन्यो विशेष एव । विशेषत्वं हि व्यावर्तकत्वम्, असाधारणधर्मत्वं वा । न चैवंरूपत्वमभावसाधारणम् । कथं विशेषसामान्याभावोऽपि विशेष इति चेत् श्रूयताम् । विशेषाभावः प्रसिद्धो वाऽप्रसिद्धो वा । अप्रसिद्धश्चेत् इयमाशङ्कैव न भवति । प्रसिद्धश्चेत्—अभावः स्वयमेव स्वप्रतियोगिकत्वं लब्धुमप्रभवन् स्वातिरिक्तमेव स्वप्रतियोगितया विशेषपदार्थत्वेन गृह्णातीति, योऽन्यत्र प्रपञ्चे प्रसिद्धो विशेषस्तदात्मकप्रतियोगिनोऽभावरूपोऽयमन्यो विशेष आत्मन्युच्यत इति सिद्धमस्य विशेषाभावस्य विशेषत्वं च । तथा चाभावस्य प्रतियोगिरूपत्वासम्भवात् रूपसामान्याभावस्य रूपात्मकत्वासम्भवेऽपि प्रकृते विशेषाभावस्य विशेषत्वमवर्जनीयम् । अस्य विशेषाभावस्य प्रसिद्धस्य यद्यद्विशेषप्रतियोगिकत्वं तत्तद्विशेषरूपत्वाभावेऽपि तदतिरिक्तविशेषात्मकत्वस्याशक्यनिषेधत्वादिति नूनं विशेषपदवाच्यार्थाग्रहणमूलोऽयमाक्षेपाभासः । अतो ब्रह्म कतिपयविशेषरहितमपि सविशेषमेव ।

यच्च—ब्रह्मणः सविशेषत्वस्य विशेषरूपत्वे तत्साहित्यमपि कश्चिद्विशेषः, पुनस्तत्साहित्यमपि तथेत्यनवस्थेति भवन्मते यथा सविशेषत्वं न विशेष इत्यङ्गीकार्यम्—तथेति—तत्र सविशेषस्य हि विशेषवत्त्वं मतुप्प्रत्यय

धर्मविशेष एव । नातिरिक्त । तथा च सविशेषत्वं न विशेष इति कुतो नह्याम , इत्यानवस्येति यत्किञ्चिदेतत् ।

यच्च–ब्रह्मणो विशेषप्रकृतितत्स्वरूपविशेषापत्तिपरिहाराय कल्प्यते–विशेषप्रकृति च भासमानविशेषानधिष्ठानत्वाभावमात्रमिति—तन्न— अनधिष्ठान त्वाभावस्याधिष्ठान त्वरूपतया भावरूपत्वेन विशेषापरित्यागात् । अनधिष्ठानत्वप्रतियोगिभूतस्याधिष्ठानत्वस्य भासमानमकलविशेषनिरूपितस्यान्यत्राप्रसिद्धया ब्रह्मण्येव वक्तव्यतया , तत्र तदनुक्तौ तदप्रसिद्ध्याऽनधिष्ठानत्वाभावस्य दुर्वचत्वापत्त्या च तदादाय सविशेषत्वस्यावश्यकत्वाच्च । एव धीत्व स्वयप्रकाशत्व नित्य त्वानि न भावरूपाणि ; किं तु जडत्वाभावपरप्रकाश्यत्वाभावविनाशाभावात्मकतयाऽभावरूपाणीति निर्विशेषसमर्थनप्रयासोऽपि व्यर्थ एव । प्रत्युत भावात्मकत्वे धर्म्यपेक्षयाऽधिक स्वीकार्यमेकमात्रमित्यपि भवेत् । अभावात्मकत्वे च म । तत्प्रतियोगी चत्यनेकवस्तुस्वीकारापातादधिक एवोपप्लव ।

एतेन शब्दरूपप्रमाणस्य प्रकृतिप्रत्ययात्मकनानापदसङ्घातरूपस्यानेकपदार्थसंसर्गावगाहिबोधजनकतया सुतरामेव सविशेषपरत्वमिति वेदस्य निर्विशेषपरत्वनिरासप्रतिविधित्सयोक्तम्——

(पु ७२) यत्–शब्दस्य बोधनमते विधि , निषेध , शक्ति , लक्षणा, स्वरूपलक्षणकथनम्, तटस्थलक्षणकथनमिति विविधप्रकारदर्शनात्, 'निर्गुण निरञ्जन'मित्यादिना निषेधमुखेन लक्षणया निर्विशेषबोधनात्, यतो वा इत्यादिकारणवाक्यादिना च विधिमुखेन तटस्थलक्षणेन उपलक्ष्यविषया निर्विशेषबोधनाच्च दोष इति तदपि व्युदस्तमेव, सर्वथाऽपि बोद्धव्यत्वे तेनैव, लक्षणा-लक्ष्यतावच्छेदकधर्मादिना च सविशेषत्वसिद्धे , अभावस्यापि धर्मत्वाच्चेति । किं च निर्गुणमित्यादौ कुतो लक्षणेत्युच्यते ? तत्र किं शक्यम् । किं च लक्ष्यम् ? यदि ब्रह्म तल्लक्ष्यमेव, तर्हि शक्यातिरिक्ते तत्र मानाभा

वात् तदसिद्धिरेव । शक्यार्थ इह कश्चिन्नास्तीति चेत् तर्हि शक्यमावे तद्वारकलक्षणाभावात् पुनस्तदसिद्धिरेव । एवं कारणवाक्यादिष्वपि विधिमुखेन विशेषणविशिष्टतया निर्दिष्टादतिरिक्तस्य उपलक्ष्यस्य स्वीकारे प्रमाणाभावादेव तदसिद्धिः । शक्त्यङ्गीकारे ब्रह्मणो वाच्यत्वापत्तिरिति निर्गुणवाक्ये लक्षणास्वीकारे लक्ष्यत्वापत्तिः कथं वार्यताम् । आगमस्यापि लौकिकत्वात् शास्त्रप्रतिपाद्यत्वादिकमपि लोकदृष्ट्यैवेति, न तावता परमार्थतः सविशेषत्वमिति चेत्—तर्हि ईदृशानेकलौकिकविशेषणविशिष्टं लौकिकमेव लौकिकेनोक्तमिति, किमनेन लक्षणादिपरिश्रमेणाप्यभिमतमलभमानेनालौकिकवादेन ।

यत्तु—(पृ. ७३)धर्मिमात्रग्राहिनिर्विकल्पकनिरासो न युक्तः; सामान्यविशेषसर्वधर्मग्रहणप्रागभाविनः इदं किंचिदिति प्रत्यक्षस्यापलापायोगादिति—तन्न—अत्रापीदमिति देशकालसम्बन्धतद्धस्त्वाकारोल्लेखेन धर्मिमात्राभानात् ।

धर्मिग्राहकसामग्र्यतिरिक्तस्य सन्नवसंस्थानादिग्राहकतया सम्पादनीयस्य कस्यचिदभावेन सन्मात्राभाने मानाभावाच्च । प्रतिवस्तुदर्शनप्राग्भाविसद्वस्तुकसन्मात्रमाहि निर्विकल्पकसाक्षात्कारेण निध्यासनानन्तरभाविनेवाविद्यानिवृत्तेरावश्यकत्वेन तदा तदा जीवस्य मुक्त्यापत्तेश्च ।

यदपि—सुप्तोत्थितस्य 'अहम्, इदम्' इत्यर्थं विशेषग्रहणात् प्राक् क्षणे योऽनुभवः स निर्विकल्पक इति—तन्न—तत्रैव प्रमाणाभावात् । समनन्तरमेव भवता 'सन्मात्रग्राहीति उक्तिरौपचारिकी, तथा निर्विशेष ब्रह्म निर्विकल्पकप्रत्यक्षेण गृह्यत इत्युक्तिरप्यौपचारिकी' इति वक्ष्यमाणत्वेन 'सन्मात्रग्राहि संसर्गं प्रत्यक्षं निर्विकल्पकम्' इति प्रतिज्ञानस्य पराहतत्वाच्च । ध्रुवैकमनधिगम्यत्वं यदुतैव प्रत्यक्षमप्रत्यक्षमप्युच्यत इतीदमपि विचित्रम् । एवं (७३) 'प्राथमिकज्ञाने कोऽपि धर्मो न भासते । यत्र ज्ञातृज्ञेययोरपि

ज्ञानात्पार्थक्येन न भवति तद्रूपं हि तत् इति वचनम्, (७४) ज्ञातृज्ञेयसहितम् . .. इद किञ्चिदित्यादिकं लौकिकं निर्विकल्पकादिक प्रत्यक्षमित्युत्तरवाक्येन व्याहतम्। न चेदृश लौकिक त्वन्मते निर्विकल्पकशब्दवाच्य भवितुमर्हति।

तर्हि निर्विकल्पकं सविकल्पमिति लोकव्यवहार किन्निबन्धन इति चेत्—विविध कल्पो विकल्प, अनेक प्रकार । तथा चानुवृत्तिव्यावृत्तिद्विविधप्रकारमाहि सविकल्पकम्; अतथाविध किञ्चित्प्रकारावगाहनेऽप्यनुवृत्त्यग्राहि निर्विकल्पकम्। गवादिषु प्रथमपिण्डग्रहणे सस्थानस्यानुवृत्ताकारता न प्रतीयते, द्वितीयादिग्रहणेषु तु तदेवेद सस्थानमिति अनुवृत्तिधर्मविशिष्ट व प्रतीयत इति द्वैविध्यम्। किं चानुवृत्तिर्हि पूर्वोत्तर देशकालसम्बन्ध तत्र विभिन्नदेशादिरूपविविधकल्पग्रहणे सविकल्पता, अन्यथा निर्विकल्पता। तथा च धर्मिणि वा तद्गतसस्थानादौ वा पूर्वगृहीतदेशकालतद्भिन्नदेशकालसम्बन्धग्रहणे सविकल्पत्वमेव। ननु यस्य प्रथमप्रतीतिजन्य सस्कारो नष्ट तस्य द्वितीयप्रतीतावपि अनुवृत्त्यग्रहणात् निर्विकल्पकत्वापत्तिरिति चेत्—इष्टापत्ति प्राच्यैराचार्यैरेव ह्येव निष्कर्ष कृत—'सप्रत्यवमर्शं प्रत्यक्ष सविकल्पकम्, तद्रहित प्रत्यक्ष निर्विकल्पकम्' (न्या प) इति। एतदुक्त भवति—सस्कारोद्बोधासहकृतेन्द्रियजन्य ज्ञान निर्विकल्पकम्, तत्सहकृततज्जन्य ज्ञान सविकल्पकमिति। एतेन—प्राथमिकग्रहणमेव सामान्यलक्षणाप्रत्यासत्त्या सर्वविषयक सविकल्पक स्यादिति—निरस्तम्; तस्य सस्कारोद्बोधजन्यत्वाभावात्। सामान्यलक्षणाप्रत्यासत्तेरेवानङ्गीकाराच्च। न च विकल्पशब्दस्यानुवृत्तिरूपविशेषे सङ्कोचे प्रमाणाभाव इति शङ्क्यम्, निर्विकल्पशब्दात् सामान्यत सर्वविषयाऽपि विकल्पराहित्यस्य प्रतीयमानत्वेन तद्विहाय विषयविधया राहित्यपरतया सङ्कोचो भवत कुत ? सम्भावप्रमाहित्वान्व करणवृत्तित्वसविकल्पकमित्र वाक्येनैकधर्मसद्भावात्

विषयविधयेति सङ्कोच इति चेत् इन्द्रियसन्निकर्षजन्यप्राथमिकज्ञानस्यैव
निर्विकल्पत्वात् अनुभवानुरोधेन नानाधर्मग्राहित्वस्यापि तत्र सत्त्वेनानुवृत्ति-
रूपविषयसङ्कोचोऽपि नायुक्त इति विमृश्यताम् । अपि च विषयविधया
विकल्पराहित्यमपि दुर्भणम्, ज्ञानस्य स्वयंप्रकाशतया ज्ञेयज्ञानोभयभासक-
त्वस्यावश्यकत्वात् । ज्ञानस्य त्रिपुटीघटकतया ज्ञातृभानमपि तदाऽऽवश्यकम् ।
न च ब्रह्मैव निर्विकल्पकशब्देनोच्यते, न वृत्तिज्ञानमिति सुवचम्;
भवदुक्तिविरोधात् । लौकिकनिर्विकल्पकस्यापि कस्यचिदुक्तत्वात् । वृत्ति-
ज्ञानविशेष एव निर्विकल्पकशब्दप्रयोगस्य सर्वसम्मतत्वाच्च । अन्यथा
अस्माभिरुपवर्णितविधाशयोगिज्ञानविशेष एव नैयायिकोक्तविलक्षणनिर्विकल्प-
कत्वनिषेधस्य अन्यादृशनिर्विकल्पकस्थापनस्य च क्रियमाणतया भवतां तन्नि-
षेधविधानस्य वैयर्थ्याच्च । ननु न वैयर्थ्यम् । अन्यादृशप्रत्यक्षे भवद्भिर्निर्वि-
कल्पकत्वं स्वकपोलकल्पितम् । तद्विलक्षणं तु निर्विकल्पकपदवाच्यमस्तीति
चेत्—तदेव किमिन्द्रियजन्यज्ञानं ब्रह्म वेति पृच्छामः । नाद्यः, तस्यास्मदुक्ताति-
रिक्तस्य निर्विकल्पकस्य दुर्वचत्वस्योक्तत्वात् । नान्त्यः, वृत्तिज्ञान एव निर्विक-
ल्पकत्वस्य शास्त्रसम्मतत्वात् । ब्रह्मणि निर्विकल्पकत्वं कीदृशमिति चान्यत्र
विवेचयिष्यते ।

यत्तु—(पृ ७४) अनुमानमपि सविशेषविषयमवेत्येतन्निरासायोक्तं
यो यो विशेषः स सामान्यप्रकृतिक इत्यनुमानं निर्विशेषविषयमिति—तन्न—
अयं सामान्यप्रकृतिक इत्यनुमितेर्निर्विशेषविषयकत्वासिद्धेः । सामान्यत्वे
निर्विशेषत्वमिति निर्बन्धाभावात् । मृदादौ सामान्ये निर्विशेषत्वादर्शनाच्च ।
अनुमितेस्तदौपयिकस्य सामान्यमुखव्याप्तिज्ञानस्य च पक्षसाध्यसम्बन्धाद्यवगा-
हिनः कथमपि निर्विशेषविषयकत्वायोगाच्च । अत्र विधेयं निर्विशेषवस्त्वि-
त्यपि न भवति, तस्यान्यत्र दृष्टान्ते प्रागसिद्धत्वेन व्याप्तिग्रहणेन विधेय-
त्वायोगात् । तस्य विधेयत्वेऽपि पक्षसम्बन्धादेरवर्जनीयत्वेन निर्विशेषविष-

यकत्वस्यानुमाने दुर्वचत्वाच्च । न च सर्वोऽयं विशेषः न स्वभावविशेषः, अपि तु अभाव एवेति वाच्यम्, अभावत्वेऽपि स्वो भावः धर्मः स्वभाव इति स्वधर्मत्वानपायात् । अभावस्य धर्मत्वं च वक्ष्यते ।

यत्तु—भेदो दुर्निरूप इत्यत्र भाष्यगता पूर्वपक्षयुक्तीस्तथैव स्ववाक्यवदनूद्य अस्त्विति भवदङ्गीकारः—स उपरितनसिद्धान्तयुक्तिबलेन भेदस्य सुनिरूपत्वसिद्ध्या न प्रमाणानुरोधीति किं तेन । यत्तु—[पु ७५] 'न हि प्रतिभासे परमार्थसद्वस्तुनोऽपेक्षा, शुक्तिरजतादिप्रभासानुपपत्ते'रिति—तन्न-रूप्यस्यापि क्वचित्प्रसिद्धस्यैव प्रतिभासनात् भेदस्य क्वचिदवश्यस्वीकार्यत्वापत्तेः । अनिर्वचनीयस्य चाप्रामाणिकत्वात् । एवं अपरमार्थस्यापि प्रतिभाससम्भवात् ब्रह्मापि मिथ्येति स्यात् । अबाध्यत्वात्पारमार्थ्यमिति चेत्-तद्भेदेऽपि तुल्यम् ।

यत्तु—यः स्वसम्बन्धादर्थान्तरे यादृशव्यवहारहेतुः स स्वस्मिन्नपि तादृशव्यवहारहेतुः । यथा रूपादिः स्वाश्रये स्वस्मिंश्च चाक्षुष इति व्यवहारहेतुः, तथा ज्ञानमपि स्वविषये स्वस्मिंश्च प्रकाशत इति व्यवहारहेतुरिति मायावाद्युक्तरीत्या गोत्वरूपस्य भेदस्य गवि महिषादिभ्यो भिन्न इति व्यवहारहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वं भवितुमर्हतीत्यर्थदूषणायाक्तम्—यथा रूपादिः स्वाश्रये रूपवानिति व्यवहारं जनयन्नपि स्वस्मिन् तद्व्यवहारं न जनयति, यथा च ज्ञानं स्वाश्रये ज्ञातृत्वव्यवहारं जनयदपि न स्वस्मिन् तद्व्यवहारं जनयति, तथा भेदोऽपि स्वाश्रये भिन्नव्यवहारहेतुरपि न स्वस्मिन्नित्येति—तावता किं कृतं भवति ? भवदीयानुमानमेव हि भवता दूषितं भवति, रूपाद्याश्रये रूपादिमद्व्यवहारहेतुत्वरूपहेत्वाक्रान्ते रूपादावुक्तसाध्याभावेन व्यभिचारस्यैव वर्णितत्वात् । अथोच्येत-'यः स्वसम्बन्धादर्थान्तरे यद्यद्व्यवहारहेतु'रिति वीप्सा न विवक्षिता । किं तु यस्स्वसम्बन्धादर्थान्तरे किञ्चिद्व्यवहारहेतुः, स स्वस्मिन्नपि तादृशव्यवहारहेतुरिति व्याप्तिरव

रूपम् । तथा च चाक्षुषत्वादिव्यवहाराजनकत्वान्न व्यभिचारः । यद्धेतुत्वं प्रसिद्धम्, तदादायाव्यभिचारोपपादनादिति— तर्हि भेदात्मके हेतावपि भिन्नमिति व्यवहारस्य प्रसिद्धत्वात्, रूपादिस्थले रूपवत्त्वव्यवहारस्यादर्शनात्परित्यागेऽपि अत्र भिन्नव्यवहारग्रहणे बाधकाभावात्, अवश्यमेव स्वसम्बन्धाद्वा किञ्चिद्व्यवहारहेतुत्वरूपहेत्वाकान्ते गोत्वे भेदं साध्यस्य वक्तव्यत्वात्, अन्यथा व्यभिचारात्, स्वस्मिन्नपि भिन्नव्यवहारहेतुत्वं भाषितमप्रत्याख्येयम् । तथा च यथा ज्ञानं स्वसम्बन्धाद्घटादौ तत्तदसाधारणधर्मविशिष्टतया व्यवहारहेतुर्भवत्स्वस्मिन्नपि स्वासाधारणधर्मविशिष्टतया व्यवहारं स्वयमेव जनयति, तथा गवि यावद्वस्तुभेदः लोकप्रसिद्धः, तावत्प्रतियोगिकभेदव्यवहारहेतुः गोत्वं, स्वस्मिन् यावद्वस्तुभेदः प्रसिद्धः तावत्प्रतियोगिकभेदव्यवहारेऽपि स्वयमेव हेतुरित्युक्तं भवति । काममिदं भवदीयानामनुमानं भवत्वेव दूष्यताम् । तथाऽपि न नः क्षतिः । वयं पुनः यत्र विशिष्य प्रत्यक्षादिना बाधो नावधार्यते, तत्र परत्र स्वसम्बन्धबलात् किञ्चिद्व्यवहारहेतोर्वस्तुनः स्वस्मिन् तादृशव्यवहारविषये इतरानपेक्षत्वं लाघववशादाद्रियामहे । तत्र च सम्भावितत्वमदर्शनाय परं संवेदनं रूपादि च निदर्शयाम इति सिद्धं नस्समीहितमिति ।

न च भिन्नो नाम भेदवान्, तत्र घटत्वस्य पटभेदरूपतया तद्वत्त्वासम्भवात् घटत्वं पटभिन्नमिति कथं व्यवहार इति शङ्क्यम् ; अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वेऽपि यथा घटाभावः पटाभाववानिति व्यवहारः तद्वदुपपत्तेः । ब्रह्मणस्सधर्मत्वभीरुणा च भवता अनृतजडपरिच्छिन्नव्यावृत्तेर्ब्रह्मात्मकत्वाङ्गीकारात् अनृतजडपरिच्छिन्नव्यावृत्तं ब्रह्मेति कथं व्यवहारः ? व्यावृत्तं हि नाम व्यावृत्तिमत् । न च तदेव तद्वदिति । किं च भेदश्चेन्नाङ्गीक्रियते, अनृतजडपरिच्छिन्नात्मकमेव ब्रह्म स्यात् ; न तद्व्यावृत्तम् । व्यावृत्तिर्हि भेद एव ; स च दुर्निरूपः । अतः पदार्थान्तराणामिव भेद-

स्यापि व्यावहारिकसत्यत्वावश्यंभावात् अन्येषामिवास्यापि व्यावहारिकप्रमाणनिरूप्यत्वमक्षतमिति किमित्यस्य विशिष्य दुर्निरूपत्वसमर्थनप्रयासः ? अथ सर्वस्यैव पदार्थस्य भेदशब्दवाच्यतां स्वीकृत्य भेददुर्निरूपत्वकथनेन सर्वस्यानिर्वचनीयतया दुर्निरूपत्वमेव कथ्यत इति चेत्—न भेदत्वेन दुर्निरूपत्वेऽपि घटत्वादिना सुनिरूपत्वात् । अन्यथा वर्णाश्रमधर्माधर्मादिसर्वदुर्निरूपत्वकल्पनया जगदेवान्धतमसे निमज्जितं भवतीति अनर्थो निरन्तः ।

यत्तु—संस्थानमेव जातिरिति युक्तिखण्डनं संस्थानं प्रतिव्यक्तिभिन्नं, जातिश्च सर्वत्र स्थितैकेति—तत् मापितानामनुभवोपपत्तीनामपरामर्शमूलमिति न किञ्चिदिह वक्तव्यमस्ति । कथं च भवान् भेदस्य दुर्निरूपत्वमातिष्ठमानः जातिसंस्थानयोर्भेदं समर्थयते । किंच भवन्मते 'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्य', 'असम्भवस्तु सतोऽनुपपत्ते' इति सूत्रतः ब्रह्मातिरिक्तस्य सर्वस्य ब्रह्मकार्यतया, ब्रह्ममात्रनित्यतायाश्च सिद्धत्वेन नैयायिकवन्नित्यजात्यङ्गीकारासम्भवात् कथं जातेरैक्यमिति । सूक्ष्मशोधने च भवन्मतेऽपि संस्थानमेव जातिरिति किमनेन संरम्भेण ।

घटत्वजाते पटभेदस्य चैक्ये घटोऽयं न पट इति प्रयोगानुपपत्तिः । पौनरुक्त्यादिति—यद्दूषणम्—तन्न पृच्छामः—घट इत्यस्मात् घटत्व स्वरूपतो भासते । 'न पट' इत्यत्रश्च तदेव प्रतियोग्युपरागेण भासत इति प्रतीत्यंशवैलक्षण्यं तावत् दुरपह्नवम् ।

एवमपि पौनरुक्त्यमिति शङ्का चेत्—तत्र किं घट इति भाग्विल्याशयः, आहो 'न पट' इति । नाद्यः ; कुड्यादौ पटभेददर्शनेन पटभेदस्य कुड्यत्वादिसंस्थानात्मकताया अपि सत्त्वेन तद्व्यावर्तनार्थत्वाद्घटशब्दस्य । नान्त्यः ; घट इत्यत्र घटत्वस्य पटकुड्यादिबहुपदार्थभेदात्मकतया प्रकृतापेक्षितविशेषनिर्धारणार्थं तत्र पट इति व्यवहारस्य । यस्मादयं पटकुड्यादिसर्वभेदात्मकसंस्थानवान्, अत पटभेदवानिति न पटबुद्धिप्रसक्तिरिति बो-

धनाय सेवं व्यवहार : तथा च सर्वरक्षक ईश्वरो मद्रक्षक इति व्यवहार इव न पौनरुक्त्यप्रसक्ति ।

यच्च (पु. ७६) 'भेदग्रहणेनैव अभेदनिवृत्ति' इति सूक्त्यर्थं यथावदनवबुद्धय विजृम्भितम् । गोत्वं भेदश्चेत्येकं तत्त्वम् । अभेदनिवृत्तिस्तु तत पृथगिति विशिष्टाद्वैतमतम् । यस्मादभेदनिवृत्ति भेदग्रहजन्या निर्दिष्टा, न तु भेदरूपा । तथा च भेदाभावाभावात्मिकाया अभेदनिवृत्ते भेदरूपत्व प्रसिद्धमुपेक्ष्य गोत्वस्य भेदस्य चाप्रसिद्धमैक्य समर्थ्यत इति कोऽय पन्था इति—तत्, तस्या सूक्ते वास्तवार्थे विज्ञाते न स्यास्यति । न ह्यत्र कश्चित् ब्रूयात्, गवि महिषाभेद कश्चिदस्ति ; तस्य च भेदग्रहणानन्तरं निवृत्तिर्भवति' इति । अत्र अभेदनिवृत्तेरसङ्गतत्वात् अभेदधीनिवृत्तिरेव इहाभेदनिवृत्तिशब्दार्थ । इदमपि तत्रैव भाषितम् । 'गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्ते' इति । अतश्चाभेदबुद्धिनिवृत्तिरेव भेदग्रहणजन्याभेदनिवृत्ति । भेदाभावाभावरूपा तु भेद एव, तस्यानभवाते न तस्या पार्थक्यमसदिष्टम् । गोत्वस्य महिषभेदस्य चैक्यमपि महिषाभेदधीव्यवहारनिवर्तकत्वस्य गोत्व एव दर्शनात्, अत्रैवोपपाद्यत इति न किञ्चिदप्रसिद्धमुच्यते अतो व्याख्यानपूर्वापरम् ग्रन्थपरामर्शमूल मीदृश साहसवचनमिति ।

यदपि—जाते प्रतियोग्यनपेक्षत्वात् भेदस्य च प्रतियोगिसापेक्षत्वान्मिथो भेद एव । न च देवदत्तस्य स्वरूपतः प्रतियोग्यनपेक्षत्वेऽपि पितृयुक्तौ पुत्रात्मकप्रतिसम्बन्ध्यपेक्षत्ववदुपपत्तिरिति वाच्यम् , वैषम्यात् । तत्र हि देवदत्तत्व, पितृत्वमित्युपाध्योर्भेद । तत्र पितृत्वरूपोपाधि तत्सापेक्ष । न चेह घटत्वस्य भेदस्य च तथा भेद इष्ट इति—तत्रोच्यते—भेदोऽपि प्रतियोगिनिरपेक्षोऽस्मत्पक्षे अस्मन्मते घटत्वभेदयोरैक्यत्वेन घटत्वग्रहणस्य घट इति व्यवहारस्य च भेदग्रहणव्यवहाररूपतया तत्र प्रतियोगिनिरपेक्षत्वदर्शनात् ।

भेदशब्देन व्यवहारे प्रतियोगिसापेक्षत्वमस्तीति चेत्—अत किम् ? यथा हि स्त्रिया एकत्वेऽपि स्त्रीत्वेऽपि च तद्वाचकदारशब्दकलत्रशब्दादेर्भेदात् बहुवचननपुंसकादिसापेक्षता , न त्वन्यथा , तथा घटत्वभेदयोरैक्येऽपि भेदशब्दस्य घटत्वशब्दापेक्षया भिन्नत्वात् तस्य प्रतियोगिनिर्देशसापेक्षतेति । अत सापेक्षत्वनिरपेक्षत्वयो शब्दभेदनिबन्धनतयाऽर्थभेदक वायोगात् न वस्तुभेद इति । सर्वमिद श्रीमाष्यव्याख्यादौ स्पष्टम् ।

यदपि—घटत्वजातिरूपभेद प्रति घटत्वानवच्छिन्नपटादिमात्रस्य प्रतियोगित्वे एकस्मिन् घटे घटान्तराद्भेदप्रतीति न स्यादिति—तदपि न—जातिभेदयोर्भेदपक्षेऽपि प्रतियोग्यवृत्तिधर्मस्यैव नञर्थनिरूपितानुयोगितावच्छेदकतया घटत्वस्य पटादिभेदानुयोगितावच्छेदकत्वमेव भवितुमर्हति , न घटान्तरभेदानुयोगितावच्छेदकत्वम् , प्रतियोगिन्यपि घटत्वस्य वृत्ते । अत कथ एकत्र घटे घटान्तरभेदप्रतीतिरिति प्रश्नस्य तुल्यत्वात् । यदि तु एतद्घट तद्घटो न इत्येव घटे घटान्तरभेदप्रतीत्याकार इति तत्र एतद्घटत्वमेवानुयोगितावच्छेदकम् , न तु सामान्यतो घटत्वमित्युच्यते—तर्हि-सन्मतेऽपि तद्धर्मरूपभेदस्य तदनवच्छिन्न सर्वं प्रतियोगीत्यङ्गीकारात् तद्धर्मपदेन घटत्वसामान्यग्रहणे पटादेरेव प्रतियोगित्वम् , तद्धर्मपदेन तद्घटत्वरूपसंस्थानविशेषग्रहणे च घटान्तरस्यापि प्रतियोगित्वमिति न कश्चिद्दोष इति ।

---

सुप्रहानेकसद्रूपघटादिग्राहिका धिय ।
घटोऽस्तीत्यादयो नैव सन्मात्रब्रह्मगोचरा ॥

यदपि—सर्वप्रत्यक्षाणा सन्मात्रावगाहित्वस्वीकारे बहुविधभेदप्रत्यक्षतद्व्यवहार अगृहीतग्रहण अन्धबधिरादिव्यवस्था प्रत्यक्षकरणेन्द्रियभेद य वस्त्रादिमर्दं पद्रवमपङ्क इति स्वमनापार भ षित दूषण परिान्ट नान्यने—

अलौकिकप्रत्यक्षस्यैव सन्मात्रग्राहित्वं अस्मदभिमतम्, लौकिकं तु विशिष्टविषयकमेवेति—वदतिस्त्वदीयः। एवं सति लौकिकप्रत्यक्षनिर्विकल्पकत्वनिरासस्यास्मत्कृतस्य व्यर्थमेव हि भवता खण्डनार्थं प्रयस्यते। अथ सन्मात्रग्राहित्वस्य लौकिकप्रत्यक्षेऽभावेऽपि लौकिकनिर्विकल्पकमङ्गीक्रियत एवेति चेत्–तन्न–लौकिकं हि भ्रमात्मकं अध्यासविषयकम्। न च भ्रमे क्वाप्यधिष्ठानग्रहणं विनाऽध्यस्तग्रहणमात्रं आनुभविकम्। अत आरोप्यतदधिष्ठानयोरुभयोर्ग्रहणस्यावर्जनीयतया एकमात्रग्राहित्वाभावेन कथं लौकिकस्य निर्विकल्पकत्वमिति। न चालौकिके प्रत्यक्षे किञ्चित्प्रमाणमस्ति। यदलौकिकमेव सन्मात्रग्राहि, किमिति घटोऽस्ति पटोऽस्तीत्यादिप्रतीतिं लौकिकीं गृहीत्वा भवदीयैः सन्मात्रग्राहित्वं समर्थितमिति स्वमतमेव प्राक् सम्यग्विमृशतु भवान्। यदि पुनः अविद्याकल्पितत्वब्रह्मज्ञानबाध्यत्वाचिन्त्यतया सदसदनिर्वचनीयताऽस्वीकारेऽपि सर्वत्र व्यावहारिकसत्यत्ववादिनां सर्वात्मना भेददुर्निरूपत्वप्रत्यक्षसन्मात्रग्राहित्वादिस्थापनप्रयासो जगदपलापिधीोद्भवासनाविजृम्भित इति विभाव्य लौकिकप्रत्यक्षसामान्यस्य सन्मात्रग्राहित्वाभावं स्वीकृत्य भवदीयोक्तमुपेक्षितुमिच्छसि–तर्हि यथाकाममभ्यर्थये; किं मतेन।

यत्तु—(पृ. ७७)निर्विशेषसन्मात्रस्य प्रत्यक्षग्राह्यत्वेऽपि न शास्त्रस्य प्राप्तानुवादकत्वम्; यतस्तादृशप्रत्यक्षात् प्राक् अज्ञातमेव शास्त्रेण बोध्यत इति–तन्न;(७२)भवदुक्तरीत्या सुप्तोत्थितस्य प्राथमिकक्षणिकानुभवस्य तथाविधस्य तदा तदा जायमानत्वेन ततः प्राक् शास्त्रस्याप्रवृत्तत्वात्। किञ्च तादृशप्रत्यक्षादित्यस्य कोऽर्थः? किं लौकिकादिति, आहो अलौकिकादिति? नाद्य;लौकिकस्य सन्मात्रग्राहित्वं नास्तीति प्रागुक्तत्वात्। नान्त्यः; अलौकिकनिर्विकल्पकप्रत्यक्षमिति किं ब्रह्मैवोच्यते, उत तद्ज्ञानम्? नाद्य; तस्य नित्यत्वेन तादृशज्ञानात् प्रागिति प्रागभावकथनासङ्गतेः। नान्त्य, तादृशज्ञानजनकसामग्र्यभावात्। शास्त्रज-ब्रह्मात्मनाधीनध्यानसहितं तत्त्वमस्यादि-

वाक्यमेवेति चेत्—तस्य प्रत्यक्षज्ञानजनकत्वं न भवतीति प्रागेवाभ्यधायि। अङ्गीकारेऽपि ब्रह्मणः प्रमेयभावः दुष्परिहरः । स्वप्रकाशत्व ब्रह्मणः ज्ञानान्तरप्रकाशत्वमेव नेति चेत्—तर्हि सन्मात्रग्राहि अलौकिक निर्विकल्पकमिति न युक्तम्। तस्य सन्मात्रग्राहित्वमौपचारिकमिति चेत्—तर्हि किं तदेकं ज्ञानं जातं सदपि सन्मात्रं न विषयीकरोति, किं वा ज्ञानमेव न जातम् । किन्तु ब्रह्मैव ज्ञानमिति । नाद्यः; निर्विषयज्ञानानभ्युपगमात् । अतत्त्वज्ञानादेव मोक्षप्रसङ्गाच। नान्त्यः; तादृशज्ञानात् प्रागिति निर्देशासम्भवस्वीकारात् । अत एव श्रुत्येकसमधिगम्यं ब्रह्मेत्यप्यसङ्गतम्; जीवब्रह्मणोरैक्यत्वाद्ब्रह्मणश्च स्वप्रकाशत्वात् शास्त्रस्यानुवादकत्वमेवेति च कथं प्रमाणता ? ब्रह्मणः स्वप्रकाशत्वेऽपि अगृहीताकारप्रमितये शास्त्रमिति चेत् सिद्धम् तर्हि ब्रह्मणः सविशेषत्वम् ॥

यत्तु—'जगदपरमार्थं ब्याव्रर्तमानत्वात्' इत्यनुमानविचारेऽभिहितम्—'न बौद्धवत् सर्वापारमार्थ्यं युक्तम्; पारमार्थ्यरूपप्रतियोग्यप्रसिद्धया अभावाप्रसिद्ध्यापत्तेः । न च विशिष्टाद्वैतिमत सर्वपारमार्थ्यं युक्तम्; पारमार्थ्यस्वरूपशोधने सति तदसम्भवादिति—तन्न भ्रमः । बौद्धमते पारमार्थ्यरूपप्रतियोग्यप्रसिद्धिवत् त्वन्मतेऽपि द्वैतरूपप्रतियोग्यप्रसिद्ध्याऽद्वैतानुपपत्तिः । आरोपित द्वैतं प्रसिद्धमिति चेत्—आरोपितं पारमार्थ्यं बौद्धस्यापि प्रसिद्धम् । सर्वं हि परमार्थत्वारोपेणैव दृश्यते; न पुन प्रथमत एवापरमार्थत्वेन । कुत्र वस्तुन स्थितं पारमार्थ्यमत्रारोप्यत इति चेत् कुत्र वस्तुनः स्थितं द्वैतं अत्रारोप्यत इति त्वन्मतेऽपि तुल्यम् । उत्तरोत्तरारोपे पूर्वपूर्वारोपस्यैव प्रयोजकतया अनादिर्द्वैतप्रसिद्धिरिति चेदिदमपि तुल्यम् । तस्मात्पारमार्थ्यस्येव द्वैतस्यापि सत्यत्वमवर्जनीयम् ।

न चास्मन्मते पारमार्थ्यं दुर्वचम् । त्वन्मते ब्रह्मणि निरूप्यमाणस्यैव तस्यास्माभि सर्वत्र स्वीकारात् । अविनाशित्व पारमार्थ्यं ब्रह्मणि स्वी-

शाकयत इति चेत्-तर्हि जगत्यपारमार्थ्यसाधनेन विनाशित्वमेवोक्तं भवति, न मिथ्यात्वम् ॥ अप्रतीयमानत्वं पारमार्थ्यमिति चेत् तन्निषेधाज्जगति प्रतीयमानत्वमेव साधितं स्यात् । ब्रह्मणोऽपारमार्थ्यप्रसङ्गश्च; तस्यापि प्रतीयमानत्वात् । अत एव हि प्रतीतिबाधाभ्यां मिथ्यात्वसिद्धिः; न प्रतीतिमात्रेण; ब्रह्मणोऽपि मिथ्यात्वापत्तेरिति भवन्त ॥ अबाधितत्वं पारमार्थ्यमिति चेत्—क इह बाधशब्दार्थः । निवृत्तिर्बाध इति चेत् तर्हि अबाधितत्वं शुक्तिरूप्यादावप्यस्त्येव । न हि तत्र रूप्यं निवर्तते । अनिर्वचनीयोत्पत्तेरस्माभिर्निरस्यमानत्वात् स्मर्यमाणस्य च रूप्यस्य शुक्तिज्ञानेन स्वस्थलान्निवृत्त्यभावात् । तथा च जगदपि परमार्थभूतमेवाति ॥ ननु बाधो ज्ञानस्यैव, न वस्तुनः । बाधो नामाऽऽप्रामाण्यज्ञानाऽऽस्कन्दनम् । उत्तरेण हि समीचीनज्ञानेन पूर्वज्ञाने अप्रामाण्यज्ञानमुत्पाद्यते । अतश्च बाध्यज्ञानविषयत्वं मिथ्यात्वम्; तदभावः पारमार्थ्यमिति चेत्—इदमसदिष्टमेव । इदं मिथ्यात्वं रज्जुसर्पज्ञाने नास्ति । किं तु सर्प एवेति सिद्धं सर्पज्ञानस्य सत्यत्वं सर्पस्य मिथ्यात्वं चेति, कथं भवान् अस्मन्मते सर्पज्ञानस्य मिथ्यात्वमापादयति । एवं च यथार्थख्यातिवादिनामस्माकं मते रज्जुसर्पस्यापि सत्त्वेन, 'मिथ्यात्वस्यैवाप्रसिद्ध्या मिथ्यात्वाभावरूपपारमार्थ्यं दुर्वच'मिति शङ्काऽपि नोत्तिष्ठति; सर्पे बाध्यज्ञानविषयत्वरूपस्य मिथ्यात्वस्याक्षतत्वात् । न खलु केवलसत्त्वस्य मिथ्यात्वस्य च कश्चिद्विरोधः, प्रतिपन्नोपाधौ बाध्यज्ञानविषयत्वस्य देशान्तरे कालान्तरे वा सत्त्वस्य चाविरुद्धत्वात् । न च वयं रज्जुसर्पं रज्जुदेशे स्वीकुर्मः । किन्तु रज्जुदर्शनं विलक्षणसर्पस्मृतिसवलितमित्येव ब्रूमः । एवं च तद्देशकालसम्बन्धितया व्यावर्तमानत्वस्य देशाद्यन्तरे सत्त्वस्य चाविरोधात्, 'कथं व्यावर्तमानत्वे सत्ख्यातिसिद्धि'रिति आक्षेपोऽपास्तो वेदितव्यः । वस्तुतस्तु रज्जुसर्पादौ बाधितत्वव्यवहारनिर्वाहानुसारेण निषेधबुद्धिर्यद्देशकालयोर्यदुपलब्ध तस्य

तद्देशकालसम्बन्धितया नेत्युपलब्धिर्बाध, तद्विषयत्वं बाधितत्वमित्यत्र भाष्यादौ स्पष्टमिति कथमिदं बाधितत्वं सर्पज्ञानस्य ? 'रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीते'रिति सूक्तौ ज्ञानस्य बाधितत्वमुक्तमिति त्वद्वचनं च विपरीतग्रहणमूलम् । अत्र सर्पज्ञानसत्यत्वोक्तिर्मादृत्य न कथमपि विरुद्ध्यते । अतो यत्र यत्र प्रतीयते तत्र तत्र नेति बुद्धिविषयत्वरूपं मिथ्यात्वं न कस्यापीति कश्चित्सद्भावमात्रेण पारमार्थ्यं जगतोऽक्षतमेव ॥

यत्तु–(पु ७९) कथं रज्जुज्ञानसर्पज्ञानयोर्विरोध ; बुद्धीनां सालम्बनत्वमात्रनियमेन विषयास्तित्वमनावश्यकमिति विशिष्टाद्वैतिमतादिति–तन्न–ज्ञानानां स्वतः प्रामाण्येन विषयास्तित्वस्य उत्सर्गसिद्धस्य त्यागायोगात् । कचित्तु बाधकज्ञानोन्मेषे बुद्धेरसदालम्बनत्वमपि सम्भाव्यत इति भ्रमः । इदमप्यसत्वं न सर्वात्मना । असत्ख्यातेरस्वीकारात् । किं तु देशकालविशेष एवेति । किञ्च त्वन्मतेऽपि बुद्धेः सालम्बनत्वमात्रनियम एव ; न तु विषयास्तित्वनिर्बन्धः, शशशृङ्गादिशब्दानां असद्विषयकबुद्धिजनकत्वस्यान्यत्र उक्तत्वात् । अपि च त्वन्मते कथं रज्जुज्ञानसर्पज्ञानयोर्विरोधः, रज्जौ सर्पज्ञानस्यानिर्वचनीयसर्पविषयकत्वात्, नायं सर्पः रज्जुरेवेति रज्जुज्ञानस्य वास्तवसर्पाभावविषयकत्वाच्च विरोधाभावात् । न चानिर्वचनीयसर्पाभाव एवात्र विषय इति युक्तम्, तस्यानिर्वचनीयसर्पसत्तादेशकालयोर्बाधासम्भवादिति ।

अथ को वास्तवघटरज्जुसर्पयोर्विशेषः पूर्वोत्तरकालयोरभावस्य मध्ये प्रतीतेः । उत्तरकाले बाधस्य चोभयत्र तुल्यत्वात् इति चेत्–किं रज्जुसर्प इति कश्चिदस्ति पदार्थः ? यस्येदानीं विशेषोऽनुयुज्यत इति । अस्ति च विशेषः–रज्जुसर्पः 'प्रतीतिकालेऽपि नासीदि'ति बाध्यते ; घटस्तु न तथा बाध्यत इति । तावता प्रतीतिकाले बाधाभावमात्रेण कथं घटादेः पारमार्थिकत्वमिति चेत्–इदमेव लोकप्रसिद्धं पारमार्थिकत्वम्–यत् यत्र यदा प्रती

त्वं तस्य तत्र तदा नाभूदिति न प्रतीतिरिति । अतः पारमार्थिकत्वमक्षतमेव । कतिपयक्षणमात्रवर्तिबुद्बुदादीनामपि पारमार्थिकत्वमानुभविकं प्रामाणिकं चेति घटादिषु कः सन्देहः ? यदि तु सार्वकालिकसत्ताश्रयत्वरूपं अत्यन्ताभावाप्रतियोगित्वरूपं वा पारमार्थिकत्वं पारिभाषिकं किञ्चित्स्वयमुपवर्ण्य तद्घटादौ नास्तीत्युच्यते ? काममुच्यताम् । तथाऽपि घटादेर्बाध्यत्वाप्रसक्त्या मिथ्यात्वं दुर्वचमेव ।

यत्तु—घटादेः प्रतीतिकालेऽपि तत्त्वज्ञानिदृष्ट्या बाध्यत्वमस्त्येवेति—तन्न—तत्त्वज्ञानिनः ब्रह्ममात्रविषयकज्ञाने सत्यपि तावता घटादेर्बाध्यत्वासम्भवात् । न हि पटैकमनस्कस्य पटज्ञानं घटाविषयकमित्येतावता घटस्य बाधोऽपि भवति । किन्तु स्थितस्यापि तस्याग्रहणमात्रम् । न च ब्रह्मण एव घटादिसर्वजगद्भेदरूपतया ब्रह्मज्ञानेन तद्बाध इति वाच्यम्—ब्रह्मणः तद्भेदरूपत्वेऽपि हि तद्भेदज्ञानमात्रं स्यात् । तावताऽपि न तद्बाधः । न हि अत्र पटभेद इति ग्रहणमात्रेण सर्वथा पटो बाध्यते । अथ ब्रह्मणः घटादिसर्वात्यन्ताभावरूपतया तज्ज्ञाने घटादेर्बाध इति चेत्—ब्रह्मणो घटाद्यत्यन्ताभावरूपत्वं कीदृशप्रतीतिसिद्धम् । अद्वितीयत्वादिश्रुत्या ब्रह्मणि सर्वात्यन्ताभावेऽवगते तस्य चात्यन्ताभावस्याधिकरणरूपत्वाङ्गीकारात् तत्सिद्धमिति चेत्—तर्हि तद्बलात् ब्रह्मणि घटाद्यभावग्रहणेऽपि प्रतीतस्य घटादेरन्यत्र सद्भावस्य स्वतन्त्रत्वस्य वा कल्पनसम्भवेन बाधो न युज्यते । यदि च ब्रह्मणि घटाद्यभावो धर्मः ; तर्हि तत्त्वज्ञानं न निर्विशेषविषयकम् , धर्मिधर्मतत्प्रतियोग्यादिग्राहकत्वात् । यदि ब्रह्मैव सः ; तदा स्वयंप्रकाशेन ब्रह्मणैव घटादिबुद्धयो निरसनीया इति न कदाप्यात्मानं कथमपि लभेरन्निति ।

यत्तु—रज्जुसर्पस्य सर्पस्वरूपेणासत्त्वात् रज्जुसत्तातिरिक्तसत्ताकत्वाभावात् बाध्यत्वमिति—तन्न—रज्जुसर्पस्याप्यनिर्वचनीयस्य त्वन्मतेऽनिर्वचनीयसर्पस्वरूपेण सत्त्वात् । वास्तवसर्पस्वरूपेणासत्त्वमिति चेत्—अस्तु ;

एवमपि रज्जुगतव्यावहारिकसत्तातिरिक्तप्रातिभासिकसत्ताकत्वात् तस्य कथमतिरिक्तसत्ताकत्वाभाव ? अत 'सर्पस्य सत्ता हि रज्जुसत्तैव नान्ये'ति त्वदुक्तमसङ्गतम् । रज्जुसत्तातिरिक्तरज्जुसत्तासजातीयसत्ताकत्वाभावो विवक्षित । एव च प्रातिभासिकसत्ताकत्वेऽपि एतत्तुल्यव्यावहारिकसत्ताकत्वाभावात् समन्वय इति चेत्—तर्हि व्यावहारिकसत्ताकाऽपि तत्र नास्त्येवेति तत्र रज्जुसत्तातिरिक्तेति विशेषण व्यर्थम् । किञ्च कथमिद ज्ञायते अतिरिक्ता तादृशी सत्ता नास्तीति ? सर्पप्रतीतिकाले सत्ताद्वयस्याप्रतीयमानत्वादिति चेत्—तावता रज्जुसत्तातिरिक्तसत्ता नास्तीति न ज्ञायते, रज्ज्वा तदा विविच्य ज्ञानाभावात् । रज्ज्वा सर्पस्य बाध्यमानत्वात् अयमतिरिक्तसत्ताकत्वाभावोऽवसीयत इति चेत् बाध्यत्वस्य ईदृशाभावस्य च व्याप्तिरेव कुत्र दृष्टेति । तस्मादव व्याप्त्यदर्शनात् एतावदेव शक्य वक्तुम् । 'यस्य वस्तुनो यत्र नास्तीति प्रतीतिविषयत्वरूप बाध्यमानत्व तत्र तद्वस्त्वभाव' इति । तथा च बाध्यत्व वस्त्वभाव एव कारणम् , न तु किञ्चित्सत्तातिरिक्तसत्ताकत्वाभाव । वस्त्वभावश्च तत्र तदुत्पादकसामग्रीविरहप्रयुक्त । अतो मृद्दृष्टसत्ताकाले घटाद्यभावस्याननुभवात् कथ घटादेर्बाध्यत्वोक्ति ? किञ्च मृत्सत्तातिरिक्ता घटसत्ता नास्ति चेत्, सर्वदा मृद्दशाया अय घट इति व्यवहारापत्ति । एव विवेचकस्य मृत्सत्तातिरिक्तसत्ताकत्वाभावस्य घटे तत्सत्तादशायामपि बुद्ध्यमानतया 'नास्ति घट' इति बाधावतारापत्ति घट निवृत्त्यापत्तिश्च । तस्मादतिरिक्तसत्ताकत्वाभावो न कारणम् । अपि तूक्तपूर्वमेवाति ।

यदपि—यत्र केवल विषयो बाध्येत, न प्रतीति—यथा रज्जुसर्पस्थले तत्र तस्यैवापरमार्थत्व चेत्—यत्र प्रतीत्या सह विषयो बाध्यते , यथा घटादौ, तत्र प्रपञ्चनेन सर्वनिवर्तकेन घटादे घटादिप्रतीतिरूपान्त करणपरिणामस्य च बाध त, तत्र तस्य परमार्थत्व सुतरा न सम्भवतीति—तदपि न—

अस्माभिर्विषयस्य तत्प्रतीतेश्च प्रमाणोपपत्तिविधुरमविविधिकत्वं नाङ्गीक्रियत इति घटादेर्बाध्यत्वप्रसक्तेरेवाभावात् ।

यत्तु—(८०. पु)अपरमार्थमेव किञ्चिद्वस्तु नास्ति चेत्—'अनाशी परमार्थश्च (वि. २. १४. २४.) इत्यत्र परमार्थशब्दोक्त्या किं कृतं स्यादिति—तत्र 'देशकालकर्मविशेषापेक्षया अस्तित्वनास्तित्वयोगिनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इत्युक्तम् । आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम्, इति श्रीभाष्यसूक्तिरेवोत्तरम् । एतदुक्तं भवति—वेदतदुपबृंहणपुराणादिषु क्वचित् क्वचित् प्रपञ्चनास्तित्वापारमार्थ्यप्रतिपादकान् नास्तिशब्दपरमार्थशब्दादीनापाततः पश्यन्तः केचित्, 'अबाध्यत्वं परमार्थत्वम्; मिथ्यात्वमपरमार्थत्वम्, नास्तित्व'मिति कृत्वा जगतो मिथ्यात्वं मन्येरन् । न तद् वक्तव्यम् । किं तु सर्वत्र प्रमाणग्रन्थेषु अस्तिपरमार्थादिशब्दा अविनाशिपराः अपरमार्थनास्त्यादिशब्दा विनाशिसत्यभूतवस्तुपरा इति जगत् सत्यमेवेत्यर्थं तत्त्वबोधनमेव 'अनाशी परमार्थश्चे'ति परमार्थशब्दोक्त्या कृतं भवति । अत्रान्यथा सन्देहो न कार्य, इति च तत्रैवाम्नायते—'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नास्ति न सन्देहो नाशिद्रव्योपपादित'मिति । तथा च सततैकरूपे वस्तुत्वं परमार्थत्वम् केवलास्तीत्याकारकप्रमितिविषयत्वम्; अन्यत्र तु सततपरिणामशालिनि लोकयात्रानिर्वाहिका, नित्यत्वबुद्धिर्भ्रान्तिरेव । अत्र केवलास्तित्वप्रमितिविषयत्वरूपस्य पारमार्थ्यस्याभावादिति केवलास्तित्वाकारेणापरमार्थ एवायं प्रपञ्च इति ।

एतेन—'निषिद्ध्यमानस्यापरमार्थत्वं वदता परमार्थशब्दप्रवृत्तिनिमित्तमेव न ज्ञायते' इत्यपास्तम् । अर्थत्वं वस्तुत्वम् । तत्र परमत्वं निरवधिकातिशयवत्त्वमिति भगवच्छास्त्रानुसारेण सार्वकालिकप्रत्ययविषयत्वरूपकेवलास्तित्वं परमार्थत्वमिति सिद्ध्यति । तदस्माभिरप्यात्मन्येव स्वीक्रियते ।

प्रपञ्चे त्वनित्ये तदभाव कादाचित्कास्तित्वरूपमपारमार्थ्यमेव । पर तु त्वया त्वत्पूर्वैश्च त्रैकालिकनिषेधप्रतियोगित्वरूप निषिद्धयमानत्वमपारमार्थ्यमिति स्वीकारात् तज्जगति नास्तीति बोधयितु तत्प्रतिकोटि पारमार्थ्यशब्देन विवक्षित्वा पारमार्थ्य ब्रूम । अतश्चापरमार्थशब्दप्रवृत्तिनिमित्तस्य युष्माभिर्यथावदज्ञातत्वात् एव बाधप्रसक्तिरिति ।

एव वस्तुतत्त्वविमर्शे च जगदपरमार्थो व्यावर्तमानत्वात् इत्यनुमान मामासित भवति । तथा हि–किमिद व्यावर्तमानत्वम् ? किं चेदमपारमार्थ्यम् ? यदि व्यावर्तमानत्वमभावप्रतियोगित्व अपारमार्थ्य च केवलास्तित्वाभाव, कादाचित्कास्तित्वम्, तर्हि घटादौ सिद्धसाधनम् । यदि तु हेतुरभावप्रतियोगित्व, साध्य च बाध्यत्वम्, तत्र किमिद बाध्यत्वम् ? नास्तीति बुद्धिविषयत्वमिति चेत्–तदाऽपि सिद्धसाधनमेव । जगति यदा यन्नास्ति, तदा तस्य नास्तीति प्रतीयमानत्वात् । अभावप्रतियोगित्वाच्च । त्रैकालिकनिषेधविषयत्व बाध्यत्वमिति चेत् तर्हि हेतुरभावप्रतियोगित्व किं त्रैकालिकाभावप्रतियोगित्वरूपमभिसहितम्, किं वा कादाचित्क भावप्रतियोगित्वरूपम्, आद्येऽसिद्धि । अन्त्ये जगत्त्रैकालिकनिषेधावत् कदाचित्सत्तावत्त्वात् ब्रह्मवदित्यनुमानेन त्वदुक्तसाध्यविपरीतमेव किं न सिद्ध्येत् । न च शुक्तिरजतादौ व्यभिचार, प्रातिभासिकसत्ताभिन्नसत्ताया एव हेतुत्वात्, तस्यापि पक्ष बाह्या । वस्तुत प्रातिभासिकमसिद्धमेवेति न व्यभिचारप्रसक्ति । एतेन त्रैकालिकाभावप्रतियोगित्व साध्यम्, सामान्यत अभावप्रतियोगित्व हेतुरित्यपि निरस्तम् । सत्प्रतिपक्षव्याप्तत्वात् । यदि त्रैकालिक सत्त्वरूप साध्य जगति बाधितमित्युच्यते । तर्हि त्रैकालिकनिषेधविषयत्वमपि बाधितमेव, कदाचित् सत्त्वेन प्रमितत्वात् । तथा च व्यावर्तमानत्व कालात्ययापदिष्टमिति । किञ्च व्यावर्तमानत्व अत्यन्ताभावप्रतियोगित्व ब्रह्मण्यप्यस्तीति सत्त मिथ्यात्वस्वीकारात् तेन मिथ्यात्वसाधने

व्यभिचारः ; ब्रह्मणि ब्रह्म नास्तीति प्रतीत्या ब्रह्मणोऽप्यत्यन्ताभावप्रतियोगित्वात् । भेदप्रतियोगित्वं व्यावर्तमानत्वमित्युक्तावपि परमार्थभिन्नत्वस्यैवापरमार्थपदार्थतया ब्रह्मणश्च परमार्थत्वेन भेदप्रतियोगित्वं दुर्वारमिति अनेकान्त एवेत्यलमधिकेन ।

एवं सत्परमार्थ· अनुवर्तमानत्वादित्यनुमानमपि सिद्धसाधनदोषदुष्टम् । आभासरूपं च ; सदिति गृहीतस्य धर्मिणोऽनुवर्तमानत्वाभावात् । यदि सत् ब्रह्म ; न तस्यानुवर्तमानत्वम् । घट:सन् पट सन्नित्यादौ घटादिगतसत्ताविषयकत्वस्यैवाङ्गीकारात् । शास्त्रैकसमधिगम्यस्य ब्रह्मणः तद्विषयत्वायोगात् । यदि सदिति घटादिकमेवोच्यते ; तस्याननुवर्तमानत्वं स्पष्टम् । एवं मृदादेर्दृष्टान्तत्वे साध्यसाधनवैकल्यमपि ; मवन्मते तत्र मिथ्यात्वव्यावर्तमानत्वयोरेव सत्त्वादित्यलम् ।

---

अविषयमविकारं चैकमाधारहीनं
चिदपि मदनुवृत्तं नानुभूत्याऽऽत्मनाऽपि ।
यदिह बहुलतया प्रागभावादिरेवं
स्वपरमतिविभातास्त्वत्यनेका श्रिताम्ता ॥

यत्तु—अनुभूतिसद्विशेषयोः विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वात् अनुभूतिरेव सतीत्यपि निरस्तमिति सूक्तौ विशेषपदं व्यर्थम् ; सत्तामान्यस्यापि अनुभूतिविषयत्वादिति—तदाशया परिज्ञानात् । अत्र हि विशेषपदेन 'सतां भिन्नाभिन्नत्वादनुवर्तमानत्वं नास्ति, व्यावर्तमानत्वमेवे'ति सूच्यते । किं चास्मन्मते अनुभूतेरपि सत्त्वात् तद्व्यावृत्तये विशेषपदमिति न वैयर्थ्यम् ।

यदपि—अनुभूत सत्त्वाङ्गीकारेऽनुभूतिरेव सतीतीदं पुनः खण्ड्यत इति—तदपि हेयम् ; एवकारार्थस्यैव खण्डनात् । तथा च घटोऽस्ती·

त्यादिप्रतीतिविषयाणां सता घटोऽनुभूयत इत्यादिप्रतीतिगोचराणामनुभूतीनां च नैरयमिति ॥

यत्तु—लौकिकानुभूतीनां परप्रकाश्यत्वेऽपि सर्वानुभूत्यधिष्ठानभूताया ब्रह्मशब्दवाच्याया निर्विषयानुभूतेरेव तदभावो मायिमत इति—तत्रेदं बोध्यम् । भवदुक्तप्रकृतवाक्यप्रकाशितत्वेन तस्य कथं न परप्रकाश्यत्वमिति । किञ्च भवन्मते ब्रह्मात्मकानुभूतिव्यतिरिक्ता लौकिक्योऽनुभूतय नैव सन्ति, तदतिरिक्तस्य सर्वस्य जडत्वात् । अन्तःकरणवृत्तीनामपि तत्परिणामरूपतया जडत्वाविशेषात् अनुभूतित्वासम्भवात् । अत एव जडत्वाद्वृत्तीनां विषयग्राहित्वासम्भवात् ब्रह्मरूपचैतन्यसम्बन्ध एव विशेषवत्। यच्च विषयग्राहित्वं भवदाचार्यैर्वर्णितम् । परं त्वित्थमनुभूतिं स्वयं निर्विषयां विषयग्रहणासमर्थां जडतया विषयग्रहणासमर्थायां वृत्तौ स्वसम्बन्धाद्विषयग्राहित्वं कल्पयतीति विलक्षणं वर्णनमित्यन्यदेतत् । एवं च परप्रकाशकत्वं वृत्तीनां स्वप्रकाशत्वं ब्रह्मणोऽनुभूतिरूपस्येति स्वप्रकाशत्वसाधनार्थस्य परप्रकाशकत्वानुमानस्यासिद्धिरपि भवन्मते । तत्परिहाराय चानुभूतौ परप्रकाशकत्वरूपहेत्वङ्गीकारे निर्विषयत्वमनुभूतेर्निरस्तमेव भवतीति क्वासावलौकिकी निर्विषयानुभूतिः । तस्माल्लौकिक्य एवानुभूतयो विषयवृत्त्यादिपरिहारेण ब्रह्मरूपानुभूतिरूपतया भवदायै स्वं कृता इति कथं तत्र परप्रकाश्यत्वाभाव इति । यदि तु स्वकीयपरकीयसर्वानुभूतीनामपि एकब्रह्मरूपत्वात् सर्ववद्यत्वेऽपि स्वप्रकाशत्वमेव न परप्रकाश्यत्वमितीत्थं परप्रकाश्यत्वाभाववाचोयुक्तिः, साऽपि जीवधर्मभूतज्ञानानां जीवाद्याधारस्य ब्रह्मणश्चैकत्वं सिद्धं सति सम्भाव्यते । तदेव त्वसिद्धमिति ।

यदपि—अनुभूतेरननुभाव्यत्वेऽज्ञानाविरोधित्वं स्यात् गगनकुसुमवदित्यत्र दूषणमुच्यते, इहानुकूलतर्को नास्तीति तत्रोच्यते । अनुभूतेरनुभाव्यत्वेऽज्ञानाविरोधित्वं स्यात् घटादिवदिति भवदभिमतविषये कोऽनुकू

लतर्कः ? दृष्टान्तसद्भावश्चोभयत्र तुल्यः । यत्तु गगनकुसुममप्रसिद्धं कथं दृष्टान्त इति—तन्न–जगन्नासत् प्रतीयमानत्वात् इति भवन्मते सदसदनिर्वचनीयत्वसाधने कथं गगनकुसुमं व्यतिरेकदृष्टान्तः ? कथं च तत्र व्याप्यव्यापकधर्मवत्त्वमित्याक्षेपस्य तुल्यत्वात् ।

यत्तु—(पु. ८२) अनुभूतिप्रागभावस्यानुभूयमानस्यानपलपनीयत्वं निरसितुं विकल्पयतोक्तम्—अनुभूतिविशेषस्य प्रागभावः विशेषानुभूत्या गृह्यत एव । अनुभूतिसामान्यस्य तु प्रागभावो दुर्ग्रहः ; तस्येतराग्राह्यतया प्रतियोग्यग्रहणेऽभावग्रहणस्य दुर्वचत्वात् । अतोऽनुभूतिसामान्यं प्रागभावरहितम् । विशेषस्तु प्रागभाववानिति—तन्न–निर्विशेषं न सामान्यमिति न्यायेन विशेषाणां प्रागभाववत्त्वे सामान्यं निष्प्रागभावमित्यस्यासम्भवात् । न हि एकैको घटः प्रागभाववान् ; घटसामान्यं तु प्रागभावरहितमिति कश्चित् ब्रूयात् । न चात्रानुभूतिसामान्यशब्देन सर्वानुभूत्यधिष्ठानभूतनिर्विषया ब्रह्मशब्दवाच्यानुभूतिर्विवक्षितेति वाच्यम् । तस्या विशेषात्मकानुभूतिरूपत्वे प्रागभावशून्यत्वासम्भवात् । अतिरिक्तत्वे तस्या अनुभूतित्वादावेव प्रमाणाभावात् ।

अत्र किञ्चिदवधेयमस्माभिः । पूर्वपक्षिणां सिद्धान्तिना चाशयसारमनवबुद्ध्य व्यर्थेन विस्तरेण पक्षिश खण्डनं क्रियमाणं न कथञ्चिदपि किञ्चित्करम् । ब्रह्मणः स्वयम्प्रकाशतया ज्ञानरूपत्वमनादिनिधनतया प्रागभावशून्यत्वं च यथा यूयं वयमपि श्रुतिमूलं साधयितुं पारयाम, साधयामश्च । परं तु यौष्माकं तस्य ब्रह्मणः घटोऽस्ति, पटोऽस्तीत्येवं सद्रूपतयैव घटोऽनुभूयते, पटः ऽनुभूयत इत्येवमनुभूतिरूपतयाऽप्यनुवर्तमानत्वोपपादनाय अयं घट इत्यादिलौकिकानुभूत्यैक्यं समर्थयितुं सङ्कुशः प्रवृत्तम् । तत्र च ब्रह्मणो निर्विषयत्वान्निष्प्रागभावत्वादेकत्वान्निराश्रयत्वात्, आसां चानुभूतीनां सविषयत्वात्सप्रागभावत्वादनेकत्वात्साश्रयत्वादैक्यमसम्भवीत्याक्षेपे

प्रवृत्ते, घटादीनां भेदरूपाणां प्रत्यक्षग्राह्यत्वासम्भवात् भ्रान्तिसिद्धत्वादपारमार्थ्ये सन्मात्रपारमार्थ्यम् । एवमनुभूतेरप्यनुवर्तमानतया पारमार्थ्ये, अनुवर्तमानत्वाविशेषेऽपि विषयविषयिभावबलेन सदनुभूत्योर्भेदशङ्कायां भेदस्य दुर्निरूपत्वेन तस्यापि सन्मात्रस्यानुभूत्यविषयत्वं अनुभूतिरूपत्वं च कथयित्वा अनुभूतीनां निर्विषयत्वं प्रसाध्य निष्प्रागभावत्वमपि लौकिकानुभूतिष्वेव स्थापयितुमासां स्वप्रकाशत्वेन परप्रकाश्यत्वाभावमुक्त्वा, एवमासामिवासद्वणात् एतत्प्रतियोगिका. प्रागभावा अपि दुर्ग्रहा एवेत्येवं दुर्ग्रहत्वेनासां निष्प्रागभावत्वमपि प्रसाध्य एवं भेददुर्निरूपत्वादिनैवानुभूतेर्नानात्व साश्रयत्वं च निरस्य, अतो वैलक्षण्याभावाद्ब्रह्मणो लौकिकानुभूत्यैक्यमिति योऽभ्यधायि । एवंरीत्या प्रत्यक्षस्य घटाद्यविषयकत्वे सन्मात्रग्राहित्वे अनुभूतेरनुवर्तमानत्वे सदनुभूत्यैक्ये च सिद्धे शास्त्रस्येव प्रत्यक्षस्यापि सच्चिदात्मकब्रह्ममात्रग्राहित्वात् शास्त्रप्रत्यक्षयो. विरोध एव नास्तीति प्रपञ्चापलापेन ब्रह्ममात्रस्य शास्त्रतार्थेन सुप्रतिष्ठिता भविष्यतीति भवदीयानामाकूतम् । ततश्चास्मदीयैर्घटादीनां पारमार्थ्ये भेदस्य सुनिरूपत्वे अत एवानुभूतीनां सविषयत्वे तथा स्वप्रकाशत्वेऽपि परप्रकाश्यत्वस्यापि सद्भावेन तद्ग्रहणपूर्वं तत्प्रागभावग्रहणसम्भवम् अत एव सप्रागभावत्वे साश्रयत्वे नानात्वे च स्थापयद्भिः लौकिकानुभूत्यैक्यं ब्रह्मणि निरस्यते । अतश्च प्रपञ्चमिथ्यात्वेन शास्त्रस्य निर्विशेषब्रह्मपरत्वे प्रत्यक्षविरोध एवेति । तस्मात् पूर्वपक्षिसिद्धान्त्याशयसारानवबोधेन लौकिकानुभूतीनां सविषयत्वसप्रागभावत्वादिकमिष्टमिति त्वदीयो वादो नूनमस्मन्मतप्रवेश एवेति ।

यदपि—अनुभूतिसामान्यमित्यपि तद्व्यवहर्तुं न शक्यते निर्विशेषत्वात् । अथापि निरूपकैः केनचिच्छब्देन प्रदर्शनीयमित्येवं व्यवहार इति—तत्र कथञ्चिदपि निरूपकैरेवं व्यवहर्तुं शक्यत्वे तथा गृहीतत्वादेव तत्प्रतियोगिकप्रागभावोऽपि कथंचित् तद्ग्रहणपुरःसरं सुग्रह एवेति कथं प्रागभावस्याग्राह्यत्वं

प्रागभावस्याभावादग्रह इति चेत्—तर्हि तदुच्यताम् ; किमित्यनुभूत्यग्राह्यतया तत्प्रागभावाग्राह्यता वर्ण्यते ।

यच्च–सविन्नित्येत्यस्य नानित्येत्यर्थः । स्वप्रकाशेत्यस्य पराप्रकाश्येत्यर्थ इति निर्विशेषत्वभङ्गभयेनोक्तं–तच्चायुक्तम् । विलक्षणसंविदोऽसिद्धत्वात् । अन्यासां च संविदामनित्यत्वस्येष्टत्वेन नानित्येत्यस्यासम्भवात् । जगति सर्वस्य कल्पितत्वेन नित्यत्वस्यैवाप्रसिद्धावनित्यत्वाप्रसिद्ध्या 'नानित्ये'त्यस्य दुर्वचत्वाच्च । पराप्रकाश्यत्वमात्रेण स्वप्रकाशेति निर्देशे स्वाप्राकाश्यत्वमात्रेण संवित्परप्रकाश्येति कुतो न व्यवहारः । अथ संविदा स्वायत्तव्यवहारस्य परायत्तव्यवहारस्य च द्वयोरप्यभावे व्यवहार एव न स्यात् । अतो व्यवह्रियमाणत्वात् तत्र च परापेक्षाप्रयुक्तविलम्बादर्शनात् परप्रकाश्येति न वक्तुं युक्तमिति चेत्—तर्हि व्यवह्रियमाणत्वाङ्गीकारे तत्र च कारणापेक्षाया स्वमेव कारणमितीदृश स्वप्रकाश्यत्वमातिष्ठमानेन सविशेषत्वमेव संविदा मुक्तं भवतीति कथं निर्विशेषतेति ।

यच्च–(पु ८३)संवेदनस्य कालावच्छिन्नत्वसमर्थकभाष्येण 'इन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते' इति ज्ञाननित्यत्वसमर्थकभाष्यस्य विरोधोद्भावनम्—तत् प्रसरशब्दादिपर्यालोचनवैकल्यकृतम् । धर्मभूतज्ञानं नित्यम् । तत्प्रसरविशेषा एवानुभूतिसंवेदनशब्दवाच्याः । ते चानित्या इत्येव भाष्य वर्णनात्, तथा च घटत्वावस्थापन्नायां मृदि घटो जातो नष्ट इति व्यवहारवत् सङ्कोचविकासावस्थापन्ने धर्मभूतज्ञाने तथा व्यवहार इति वस्तुतो न निरन्वयविनाश इति ।

यच्च–विशेषाणां सामान्यपूर्वकत्वात् निर्विशेषानुभूतिस्थापनम्—तदपि विशेषाणां सामान्यरूपत्वेऽपि सामान्यपूर्वकत्वे प्रमाणाभावात्, अनुमानेन तत्स्थापनेऽपि सामान्यत्वे निर्विशेषत्वमिति नियमादर्शनात् तस्या प्रमेयत्वेन सविशेषत्वप्रसङ्गाच्च उपेक्षणीयम् ।

यत्तु—स्वापमदमूर्च्छासु निर्विषया संवित् स्फुरति । परं तु प्रबोधसमये सा न प्रतिसन्धीयते । कुतः? अनुभूत्यन्तराग्राह्यत्वात्'। अतस्तदानीं तदभावो दुर्वच इति—तन्न—तथा सति पिशाचशशविषाणादिस्फुरणस्यापि तदानीं निषेधासम्भवात्; अग्राह्यत्वादेव पश्चादप्रतिसन्धानोपपत्तेः । न च सुषुप्तावाश्रयाभावादनुभूतिः कुत्र संस्कारं जनयेदिति वाच्यम् । अनुभूतिपदेन निराश्रयानुभूतिग्रहणे ह्यपसिद्धिरेव । साश्रयाया ग्रहणे चाश्रयो न दुर्लभ इति ।

यत्तु–(पृ. ८४)सुप्तोत्थितस्य न किञ्चिदहमज्ञासिषमिति व्यवहारः ज्ञाने किञ्चिद्विषयकत्वाभावपर एव न तु ज्ञानाभावपरः । यथा वनं गच्छति देवदत्ते देवदत्तो न ग्रामं गत इति व्यवहारः । तथा च निर्विषयज्ञानं तदा सुषुप्तावस्थैवेति–तन्न–तथा सति देवदत्तो न क्वचित् गच्छतीति वाक्यमपि गमने किञ्चित्कर्मकत्वाभावपरः स्यात् । तथा चानुभूतिसामान्यवत् गमनसामान्यमपि किञ्चित्सिध्यत्विति यत्किञ्चिदेतत् ।

यत्तु—न च सत्यप्यनुभवे तदस्मरणनियमो विषयावच्छेदविरहात् अहङ्कारविगमाद्वेति शक्यते वक्तुम्; अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात्' इति सूक्त्यर्थमविज्ञाय साधिक्षेपमुक्तम्—तद्विषयकस्मरणं प्रति तद्विषयकसंस्कारस्य हेतुत्वात् सौषुप्तिकानुभवे विषयावच्छेदाभावात् संस्कारः किंविषयकस्स्यात् । अहमर्थरूपाधाराभावाच्च संस्कारः कुत्रोत्पद्येत । अतस्तदभावात् जागरदशायां स्मृत्यभाव इति तत् यथावद्बोधेन निराकुर्मः । इयमत्र निरूपणशैली जागरदशायां तावत् सविषयैवानुभूतिस्स्फुरति न निर्विषया । सुषुप्तिदशायां निर्विषया स्फुरतीत्युच्यते । तत्रायं विकल्पः—निर्विषयानुभूतिः सुषुप्तावनुभूयत इतीष्यते; उत न आद्यपक्षे दूषणं प्रकृत्येयं सूक्तिः । स्पष्टं चेदमत्रैव, 'सत्यप्यनुभवे' इति विन्यासेन । तथा चानुभूतिविषयका-

नुभवस्याङ्गीकारे तद्विषयकसंस्कारस्स्मृतिश्च स्यादित्यापादनं सम्यगेव सङ्गच्छते । धाराविषयविच्छेदाभावात् तद्विषयक संस्कारादि मा भून्नाम अनुभूतिविषयक वसत्त्वात् तत्स्मरणमेवेदानीमापादनात्तद्विषयकसंस्कारोत्प किं बाधकम् ? न चाहमर्थरूपाश्रयाभावात् सुप्तोत्थित इति शक्यम् , तर्हि अनुभूतिविषयकानुभवस्यापि त्वयानङ्गीकर्तव्यत्वात् । अनुभवोऽप्या-धाराभावे सुप्तोत्पद्येतेति । अतोऽस्मिन्ननुभवस्वीकारपक्षे आधारं विनाऽपि तदुत्पत्तिर्यथेष्यते तद्वदेव संस्कारादेरुत्पत्तिरापादयितुं शक्यत एव । इद-मेव दर्शयितुं 'अनुभूतार्थान्तरे'त्यनुभूतपदप्रयोगः । तस्मात् कस्मिन् पक्षे किमत्र सुवक्त्रोच्यत इतीदमज्ञस्यैव ते कोलाहल इति । अथ एतद्दोषपरिहा-राय प्रथमपक्षं परित्यज्य द्वितीयपक्ष आद्रियते ; तर्हि शशविषाणमिव ते अनुभूतिरितीदमपीत प्रागेव भाषितम् । न च निर्विषयाया अत एव परप्रकाशत्वरहिताया स्वप्रकाशत्वमस्तीति वाच्यम् । स्वप्रकाशत्वं चेद किं स्वविषयकप्रकाशरूपत्वम् ? स्वविषयकव्यवहारजनकत्वं वा ? नाद्य ; स्वस्य स्वविषयकत्वायोगात् ; निर्विशेषायामनुभूतौ विषयत्वासम्भवाच्च । नान्त्य , सुषुप्तौ तादृशव्यवहारस्यानुपलब्धेः । जागरे च सविषयानुभूतिव्यवहार-स्यैव सत्त्वात् निर्विषयव्यवहारस्याभावादिति ।

यत्तु—सुप्तोत्थितस्य इयन्तं कालं न किञ्चिदवेदिषमिति यदस्ति , स किं एवमाकारको ज्ञानप्रत्यवमर्शाभावः ; किं वा ज्ञानाभावप्रत्यवमर्श इति विकल्पनम्—तत् सर्वथैवासम्भवि । न खल्वभावस्य किञ्चिदाकारकत्व-मस्ति । तस्मात् ज्ञानाभावप्रत्यवमर्श एवैवमाकारकः । भाषितं च 'प्रत्यव-मर्शोऽभवे'ति । न च—प्रत्यवमर्शो हि स्मरणम् । सुषुप्तौ च ज्ञानाभाव-स्याननुभूतत्वात् कथमुत्थितस्य स्मरणमिति—वाच्यम् ; अत्र पूर्वकाला-वच्छिन्नतया वस्तुग्रहणस्यैव प्रत्यवमर्शपदेन विवक्षितत्वात् । एवं पूर्वानु

मत [illegible]

मर्शपदप्रयोग ।

यदपि—उत्पत्त्यतिरिक्तविकाराणा उत्पत्तिव्याप्यत्व न भवति, प्रागभावेऽनुत्पत्ते विनाशरूपविकारदर्शनादित्यंशोऽश खण्डयते । 'न खलु प्रागभावनाशो विकार अवस्थान्तरापत्तिरूपविकारस्य प्रागभावे दुर्वचत्वात् । सत्कार्यवादस्य विशिष्टाद्वैतिभिरप्यङ्गीकृततया उत्पत्ते प्रागपि कारणरूपेण वस्तुसत्त्वेन प्रागभावस्यैवाभावाच्चेति–तदप्ययुक्तम्–असदभिमतसत्कार्यवाद-स्वरूपस्य यथावत् ज्ञाने प्रागभावाभावस्य दुर्वचत्वात् । कारणरूपेण तत्सत्त्वेऽपि कार्यरूपेणाभावात् प्रागभावस्यावश्यकत्वात् । भवद्भिरपि तत्र तत्र स्वप्रागभावव्यतिरिक्तेत्यादि वदद्भि तस्याङ्गीकृतत्वात् । तत्प्रागभाव-नाशस्य तद्रूपतया किञ्चिद्विकारत्वस्यापि सम्भवाच्च । किंच प्रागभाव विनाशो विकारो भवतु मा वा । उत्पत्त्यभावेऽपि विनाशदर्शनात् इहाप्य-नुभूतावुत्पत्त्यभावेऽपि विनाशो भवतु शक्यत इति किमिहोच्यते । पर तु स विनाश सिद्ध्यन् 'अपक्षयविनाशाभ्या परिणामर्धिजन्मभि' इति परिग-णितान्तर्गततया भावसम्बन्धित्वाच्च विकारशब्दवाच्यो भवदेवेत्यवमुक्ति । तथा च विनाशत्वादिना तथा व्याप्यत्वकथन प्रागभावे व्यभिचार , विकारत्वेन रूपेण व्याप्यत्वकथने च भवदोयभावरूपाज्ञाने व्यभिचार इतीह भाष्यत इति ।

न च—(पृ ८५) भावरूपाज्ञानस्य ब्रह्मशक्त्यात्मकस्याव्यक्तादि-परिणामहेतो ब्रह्माभिन्नतया नित्यत्वादविनाश एवेति न व्यभिचार इति वाच्यम् ; शक्तिब्रह्मणोरैक्ये शक्तिपरिणामत्वादव्यक्तादिप्रपञ्चस्य ब्रह्मणोऽपि परिणाम्युपादानत्वप्रसक्त्या तस्य विवर्तोपादानत्वसिद्धान्तभङ्गापत्ते ।

एव भावरूपाज्ञानपदेन शक्तिग्रहणे तस्या ब्रह्माभिन्नत्वात् ब्रह्मणश्च ज्ञानरूपत्वात् अज्ञानत्वासम्भव । जीवस्य प्रतिबिम्बरूपतया ब्रह्मणि ब्रह्म-प्रतिबिम्बापत्तिश्च । शक्तिपरिणामभूताव्यक्तस्य ग्रहणे च तदनादित्वसि-द्धान्तभङ्ग । न च–जीवकर्मसहकृतशक्तिपरिणामभूतस्याव्यक्तस्य सादित्वे

ऽपि प्रवाहानादित्वस्वीकारान्न सिद्धान्तभङ्गः । प्रवाहानादित्वं च तस्योत्पत्तिकालानवधारणात् । कालानवधारणं च कालासत्त्वात् । अव्यक्तमहदहङ्कारानन्तरमेव हि दिगाद्युत्पत्तिः । ततः प्राक् च कालासत्त्वमेवेति—वाच्यम्, कालस्य महदहङ्कारानन्तरभावित्वस्यासम्भवात् । अव्यक्तादेः शक्त्यादिजन्यत्वात् जन्यजनकभावस्य कालघटितत्वात् । नियतपूर्वकालवृत्ति हि कारणम्; अन्यत् कार्यमिति । 'सदेव सोम्येदमग्र आसी'दित्यत्र अग्रे आसीदिति निर्देशेन प्रळयेऽपि कालसत्त्वस्य स्पष्टत्वाच्च । अतः कालो नाव्यक्ताद्यनन्तरजन्यः । न वा ब्रह्मशक्तिजन्यः; शक्तेस्तत्कारणत्वनिर्वाहायापि कालस्यापेक्षिततया कालस्य तज्जन्यत्वासम्भवात् । अतः कालासत्त्वात् कालानवधारणमित्ययुक्तमेव । किंच कालानवधारणं प्रवाहानादित्वमित्यपि अपूर्वं शिक्षणम् । स्वसजातीयस्य पूर्वं पूर्वं सद्भावो हि प्रवाहानादित्वम् । अन्यथा अनिश्चितोत्पत्तिक्षणस्य देवदत्तस्यापि प्रवाहानादित्वप्रसङ्गः । अङ्कुरादिकालस्यावधारितत्वात् तस्यानादित्वानापत्तिश्च । अव्यक्तारम्भकालो नावधारित इति चेत्—कोऽसावव्यक्तारम्भकालः प्रसिद्धः, यद्घटितं लक्षणमुच्यत इति । अपि चास्मिन् पक्षेऽव्यक्तापरपर्यायभावरूपाज्ञानात्मकाविद्याप्रतिबिम्बस्यैव जीवत्वात् तदुत्पत्तेः पूर्वं च जीवाभावात् तत्कर्मरूपसहकारिवैकल्यात् कथमव्यक्तोत्पत्तिः ।

अपि च शक्तेर्ब्रह्माभिन्नत्वाद्ब्रह्मणश्च सत्यत्वात् सत्यभूतशक्तिपरिणामत्वात् अव्यक्तस्य न मिथ्यात्वम् । न खलु शक्तिपरिणामभूतोऽव्यक्तादिर्मिथ्या, शक्तिस्तु सत्येति सुवचम् । न च घटादीनां व्यावर्तमानत्वात् मृद एवानुवर्तमानत्वात् यथा घटादीनां मिथ्यात्वम् तथाऽव्यक्तादेरिति वाच्यम्, व्यावर्तमानत्वं मिथ्यात्वसाधकमित्यस्य पराभिमतत्वात् । किंचेयं मृदिति ज्ञाने जातेऽपि यतो घटादीनां बाधो न दृश्यते, उदकाहरणादिकार्यस्य पश्चादपि भावात्, अतो घटादेर्मिथ्यात्वं नेत्येवावसीयते ।

तथा च तथैव ब्रह्मरूपतत्त्वज्ञानात् अव्यक्तादेर्बाधोऽप्यसम्भावित इति सिद्धं जगत्सत्यत्वम् । तत्र सुषुप्तौ घटादेरभानवत् विदेहमुक्तावव्यक्तादेः शक्तिपरिणामस्याभानमात्रम् । अव्यक्तादिकमस्त्येवेति सिद्धान्तं वर्णयतस्ते मुक्तौ ब्रह्मात्मकशक्तेस्तत्परिणामानां च बाधाभावात् रज्जुसर्पादिविलक्षणत्वस्य सम्मतत्वाच्च कथं जगन्मिथ्यात्वमिति । १

तस्मात् ब्रह्मातिरिक्तं ब्रह्मवदजन्यमेवानादि मिथ्याभूतं जगत्परिणाम्युपादानमेकं स्वीकर्तव्यमिति तस्य ज्ञाननाश्यतया सान्तत्वात् तत्र भावरूपाज्ञाने व्यभिचारप्रदर्शनं युक्ततरमेव । सर्वथा चिद्रूपस्यापि ब्रह्मणो निर्विकारत्वाङ्गीकारात् प्रागभावप्रध्वंसाभावरूपावस्थात्मकविकाराश्रयानुभूतिरूपत्वासम्भवात् न घटोऽनुभूयत इत्यादौ तदज्ञानमिति ॥

एवं ब्रह्मणो भावरूपाज्ञानव्यतिरिक्तत्वात् नित्यत्वैकत्वस्वयम्प्रकाशत्वादिधर्मवत्त्वाच्च सविशेषत्वमेव । न चैषामभावरूपत्वान्न दोष इति वाच्यम् । तथाऽपि धर्मत्वानपायात् । तेषामधिकरणस्वरूपत्वे चाधिकरणस्य स्वयम्प्रकाशत्वेन तेषामपि स्वयम्प्रकाशत्वमेवेति अनित्यत्वानेकत्वजडत्वादिकोटीनामेवानुत्थित्या वादिना विवादस्यैवानवसरप्रसङ्गात् । अतो विवाददर्शनान्नाधिकरणस्वरूपत्वम् । न च (पृ ८६) नित्यत्वादीनामभावानां कथं धर्मत्वम् । धर्माणां हि लोके धर्म्यपेक्षया सूक्ष्मसामान्यरूपत्वम् । यथा शब्दतन्मात्रस्याकाशनिष्ठतया प्रतीतस्याकाशापेक्षया सूक्ष्मसामान्यरूपत्वम् । एवं चाभावानां धर्मत्वे ब्रह्मणः सर्वसामान्यरूपत्वसर्वमूलत्वयोरसिद्धिः स्यादिति शङ्कितव्यम् । शब्दतन्मात्रपदेन सर्वैरप्याकाशपूर्वावस्थापन्नद्रव्यस्यैव विवक्षितत्वात् तस्य चाकाशनिष्ठस्य भेर्याद्याघातानन्तरभाविनः शब्दस्य च विभिन्नत्वात्, अन्येषां च पृथिव्यादिगुणानां पञ्चाङ्गादीनां पृथिव्यादिस्थूलताप्रयोजकानां पृथिव्याद्यपेक्षया सामान्यत्वस्यानुभवविरुद्धत्वाच्च धर्मस्य धर्मितः सूक्ष्मत्वस्यासिद्धेः । अतः शब्दतन्मात्रे आकाशादिनिष्ठ

शब्दे च शब्दशब्दानुवेधनिबन्धनेयं ते कल्पनेति । न च 'संविदि
त्वादयो धर्मा न सन्तीति वाक्यात् संविदि जडत्वाद्यभावरूपधर्मव
विधीयते । किं तु जडत्वादिधर्माणामत्र निषेधमात्रं क्रियते । घटो ना
घटाभावोऽस्ति, त्वं नासि, त्वदभावोऽस्तीत्यादावर्थभेदानुभवादिति वाच
संविदीत्यनुयोगिनिर्देशेन जडत्वाद्यस्तित्वाभावस्य तद्धर्मत्वप्रतीते
वासम्भवात् । भूतले घटो नास्तीत्यादौ पर्वतो वह्निमानिति वाक्यात्
वह्निरिति वाक्य इव सत्यपि बोधवैलक्षण्ये आधाराधेयभावभानस्यापरित्य
त्वात् । निषेधस्थले प्रवर्तकत्वरूपविधित्वाभावेऽपि अज्ञातज्ञापकत्वरू
विधित्वस्यानपवादाच्च । वस्तुतो घटो नास्तीत्यत्र घटास्तित्वाभावशा
बोधे जातेऽपि घटाभाव एव तस्य पर्यवसानम्, यथा भूतले घट प्रत्य
गृहीत ग्राहयितुमेव भूतलं घटवदिति शब्द प्रयुज्यते । तत्र बोधो
मार्थयोरभेदेनान्वयात् भूतले घटवदभेदविषयक । प्रत्यक्ष तु भूतले घ
प्रकारकम् । एव सत्यपि वैलक्षण्ये तस्य शब्दस्य प्रत्यक्षगृहीतार्थे
पर्यवसानम् । एव घटास्तित्वाभावस्य घटाभावातिरिक्तत्वे प्रमाणाभाव
दपि घटो नास्तीत्यस्य घटाभावपरत्व सुवचम् । न चेदेव, कथं भव
'अभय वै जनक प्राप्तोऽसी'ति श्रुति भयमन्योऽपि नास्तीति दर्शयतीत्
च्यते । श्रुतिवाक्यात् भयमन्यास्तित्वाभावस्याप्रतीते, भयाभावमात्र
विषयकत्वात्तस्य वाक्यस्य । तस्माद् यन्ताभिनिवेशकृतमेतत्—यत् 'जड
त्वादयो न सन्तीति वाक्यात् जडत्वाद्यभावप्रतीतिर्नास्ती'ति सर्वथा संवि
देऽभावरूपधर्मवत्त्वस्यापरिहारात्, 'न चेद् वित्तिधर्म स्यात्' इति यत्
प्रागुदीरितम् । तेनापि साधितं किञ्चित्संविदोऽस्ति न वा त्वया । अस्ति
चेत् पक्षपात स्यात् न चेत्ते विफल श्रम' इति सिद्धिलघोक्तं दुष्प्रघर्षम् ।
अतश्च ब्रह्मणः संविद्रूपस्य भवदुक्तनित्यत्वादिकमादायैव निर्विशेषत्व निर-
सितु शक्यम् । वस्तुतो लौकिकसंविदा किञ्चिदात्मनिष्ठत्वकिञ्चिदर्थविष-
यकत्वयोरानुभविकत्वात् ब्रह्मणः संविद्रूपत्वासम्भवश्च प्रागुक्त ।

न संविदो विशेषाणामन्तःकरणमाश्रयः ।
संवित्सामान्यमेवात्मा प्रत्यगित्यप्यसाम्प्रतम् ॥
अहङ्कारात् परः प्रत्यगात्मा ज्ञानात्मकश्च यः ।
स एव नियताहन्त्वः सुखी संवित्समाश्रयः ॥

अत्र लौकिकीनां संविदां किञ्चिन्निष्ठत्वकिञ्चिद्विषयकत्वनिर्बन्धेऽपि विशेषाणां सामान्यपूर्वकत्वमिति नियमेनानुमानतः सिद्धं यत् संवित्सामान्यं तस्य नैवंरूपत्वमिति (पु ८७) न वाच्यम् , निर्विशेषं न सामान्यमिति न्यायेन तादृशसामान्यस्यैवाभावात् । कथञ्चित्तादृशसामान्यस्वीकारे अनुभूतिक्रियास्विव गत्यादिक्रियास्वपि विशेषाणां सामान्यपूर्वकत्वन्यायेन गत्यादिसामान्यसिद्ध्यापत्तिरित्यादिपूर्वोक्तं ते बुद्ध्यारूढं न भवति । तथा च यथा रूपरसादयो गुणा गुणिनं विहाय सामान्यात्मना न सन्ति , किं विशिष्याभिधानेन , यथा सर्व एव धर्मा धर्मिणं विहाय सामान्यात्मना न सन्ति, तथा ज्ञानमपि , 'अर्थेनैव विशेषो हि निराकारतया धिया' मित्युक्तरीत्याऽर्थादिविशेषं परित्यज्य न स्थातुं पारयतीति न निर्विशेषायाः संविदः प्रसक्तिः । यदि च तादृशज्ञानमेकमभ्युपगम्य तत्राधारस्याहमर्थस्य ग्राह्यस्य च ग्राहकस्य च कल्पितत्वं कल्पयसि , नूनं प्रपञ्चापलापिनं बौद्धं प्रति यद्भगवता बादरायणेनोक्तम्, तद्दूषणजालादनिर्मोक्ष एव त इति ध्येयम् ।

तथा च तादृशसंविद एव युक्त्या साधयितुमशक्यत्वात् तस्या आत्मत्वस्य दुर्वचत्वात् अहमर्थ एव लौकिकसंविदाधार आत्मा । न चान्तःकरणमेवाहमर्थो नात्मेति वाच्यम् , असम्भवात् । अहं जानामि करोमीत्यादिप्रत्यय आत्मग्राहीति सार्वत्रिकनिर्विवादम् । अन्यथा अन्तःकरणस्य ज्ञातृत्वकर्तृत्वादिकमेवाल गृह्यत इत्यङ्गीकारे आत्मनो बन्धप्रसक्तेरेवाभावेन बन्धमोक्षयोरात्मनिष्ठत्वोपपादनस्याशक्यत्वापातेन शास्त्रवैयर्थ्यात ।

भवादृशप्रयत्नानामपि नैष्फल्याच्च। अतश्चाहंशब्देनात्मन एव ग्रहणं दुरपह्नवम्। न चान्तःकरणमेवाहमर्थो भवितुमर्हति; तस्य करणत्वेन कर्तृत्वाभावात्।

न च (पु. ८८) व्यावहारिकासदर्थत्वं अन्तःकरणे स्वीकुर्मः। परं तु तस्य असदर्थत्वप्रतिकोटिभूतव्यावहारिकयुष्मदर्थत्वविलक्षणधीविशेषसिद्धत्वरूपयुष्मदर्थत्वाक्रान्तत्वात् अन्यादृशमसदर्थत्वं आत्मनीष्यते। तथासदर्थत्वं व्यावहारिकासदर्थत्वविलक्षणं धीसामान्यत्वादिरूपमिति वाच्यम्; द्विविधस्यासदर्थत्वस्याप्रामाणिकत्वात्। व्यवहारतो लोकव्युत्पत्त्याऽवगतं यत् अहमर्थत्वं तदपेक्षयान्यस्यासदर्थत्वरूपतया निर्वचनस्य निर्युक्तिकत्वेन लोकसिद्धाहमर्थत्वस्यैवात्मनि स्वीकार्यत्वात्। धीविशेषासिद्धत्वं युष्मदर्थत्वं इत्यस्यापि केवलं भवद्भाष्यारम्भवाक्यश्रद्धामूलकत्वेन व्यवहारासिद्धतया प्रामाणिकत्वाभावाच्च। सम्बोध्यो हि युष्मदर्थः; नान्यः। न च स्वस्य स्वसम्बोध्यत्वं सम्भवति। अतश्च अहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति वचनं जननी मे वन्ध्येतिवत् व्याहतार्थमेव। एवं चाहमर्थस्यान्तःकरणरूपत्वं मनसिकृत्य तस्य प्रकृतिमहदादौ स्वकारणे व्यापित्वाभावात् व्यापित्वरूपमात्मत्वं दुर्वचमित्युक्तमपि निरस्तम्; अहंशब्देनान्तःकरणविलक्षण एवोच्यत इत्यस्य स्थापितत्वेन तस्यात्मत्वस्य सुप्रतिष्ठितत्वात्।

अपि चात्मैवाहमर्थः प्रत्यक्त्वात्। न च प्रति अञ्चतीति प्रत्यक् सर्वव्यापीत्यर्थ इति प्रत्यक्शब्दात्मशब्दयोः पर्यायत्वेनाहमर्थत्वाभावेऽपि प्रत्यक्त्वं स्यादेवेति वाच्यम्; प्रति अञ्चतीति व्युत्पत्त्या सर्वव्यापित्वस्यालाभात्। व्यापित्वमात्रोक्तौ आकाशादेरपि प्रत्यक्त्वापत्तेः। भवन्मताविद्यायामपि सर्वव्यापित्वात् प्रत्यगिति व्यवहारापत्तेश्च। न च प्रत्यक्शब्दात्मशब्दौ पर्यायौ; प्रत्यगात्मेति सहप्रयोगासम्भवप्रसङ्गात्। एवं सर्वव्यापित्वं प्रत्यक्त्वमिति पूर्वमुपवर्ण्य [पु. ८९] तदनन्तरमेव स्थावर-

जङ्गमेषु सकलवस्तुषु आत्मव्याप्ति. सत्त्वेऽपि ब्रह्मादिस्थावरान्तशरीरेषु जीवरूपेण व्याप्ति अनुभवपथमारोहतीति लोके जीव प्रत्यक्शब्देन व्यवह्रियत इति लिखता त्वया 'जीवरूपेण व्याप्तत्वं प्रत्यक्त्वम्, अथ वा जीवत्वं प्रत्यक्त्वम् । व्यवहारादेव शब्दार्थव्युत्पत्ते स्वीकार्यत्वात् लोके च जीव एव प्रत्यक्शब्दव्यवहारा दिति दर्शितमिति सर्वव्यापित्वज्ञानाभावेऽपि प्रत्यक्पदप्रयोगात् सर्वव्यापित्व न प्रत्यक्त्वमित्यपि ज्ञापितमेवेति स्वोक्तिव्याघात एव ।

अत्रेद बोद्धव्यम्–अहंशब्द स्वात्मन्येव लोके प्रयुज्यते, न परात्मनि । एवं प्रत्यगात्मशब्दोऽपि । आत्मशब्दस्तु सर्वत्र । अत प्रत्यक्त्वमात्मत्व च नैकम् । तथा च कणादो लोकानुभव दर्शयति 'अहमिति प्रत्यगात्मनि भावात् परत्राभावात् अर्थान्तरप्रत्यक्ष' इति (वै ३ २ १४) । उपस्कृत चेद शङ्करमिश्रेण–'अहमिति प्रत्ययस्य प्रत्यगात्मनि स्वात्मनि भावात् परत्र परात्मन्यभावादि'ति । अयमत्र सूत्राशय –अहमिति प्रत्ययस्तावत् स्वात्मनि भवति । यदि तत्र देहस्य विषयत्वम्, तर्हि स्वदेहस्येव परदेहस्यापि प्रत्यक्षत्वाविशेषात् तत्राप्यहमिति प्रत्ययापत्ति । अतो देहादितोऽर्थान्तरमस्य विषय । तत्रापि प्रत्यक्षाप्रत्यक्षत्वाविमर्शेन देहाद्यतिरिक्तात्ममात्रविषयकत्वस्वीकारे परात्मन्यहप्रत्ययापत्ति । अत प्रत्यक्षभूतार्थान्तरविषयकोऽयमहप्रत्यय । परात्मनामनुमेयतया प्रत्यक्षत्वाभावात् न तत्राहप्रत्ययापत्ति । अत प्रत्यगात्मा अहमर्थ इति ।

शङ्करभाष्ये च 'अविषयत्वादात्मन कथ अधिष्ठानाप्रद्दे तत्राध्यास' इत्याशङ्क्य, 'आत्मन वृत्तिविषयत्वात् स्वयप्रकाशत्वाच्चाध्यासो युज्यते । अस्मत्प्रत्ययविषयत्वात् वृत्तिविषयत्वम्, अविषयत्वव्यवहारश्च युष्मत्प्रत्ययाविषयत्वनिबन्धन' इत्याशयेन –, 'न तावदयमेकान्तेनाविषय अस्मत्प्रत्ययविषयत्वात् अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धे'रित्युक्त्वा 'युष्मदस्म प्रत्यय-

चरो रिति स्वारस्यं स्वयमेवोपपादितम् । तत्र परिमले 'आत्मनोऽहंबुद्धिविषयत्वाभावेऽन्तःकरणमात्रस्य तद्विषयत्वे इदमुल्लेख एव स्यात्, नाऽहमुल्लेख' इति न्यरूपि ।

अत्र भाष्ये 'प्रत्यगात्मप्रसिद्धे' रित्यस्यान्ये षष्ठ्यन्तत्वेनाभिप्रेतत्वेऽपि पञ्चम्यन्तत्वमुचितम् । तथा च युष्मत्प्रत्ययविषयपराग्र्थवैलक्षण्येन प्रत्यगात्मेति लोके व्यवहार अस्मत्प्रत्ययविषयत्वनिबन्धन । तत्राप्यात्मविषयकपरोक्षापरोक्षसाधारणज्ञानविषयत्वप्रयुक्तश्चेत् प्रत्यक्त्वव्यवहार परमात्मन्यपि स्यात्, परोऽहमिति प्रत्ययत्वस्य स्यादिति प्रत्यक्षज्ञानविषयत्व मत्र तत्रैव व्यवहार इत्यास्थेयम् । अन्यथा चात्मनामनुमेयत्वेनाप्रत्यक्षत्वात्तथा न व्यवहार । तथा चास्मत्प्रत्ययविषयत्वात्तत्रापि अपरोक्षतारूपविषयताशालित्वात्तद्विषयत्वमात्मन । इदमुभय च प्रत्यगात्मप्रसिद्धिपदात् स्वीकार्यमिति भाष्यार्थ । इत्थ निर्विवादत्वमप्यभिप्रेत्यासद्भाव्यक्तौ 'अहं बुद्ध्या परा थीत्य यतश्चोऽहि भिद्यते इति 'हि' शब्दप्रयोगपूर्वकमभाषि ।

तथा च प्रत्यक्शब्दार्थो न सर्वव्यापित्वम् । अपि तु पराक्शब्दार्थविपरीत रूपम् । पराक्शब्द परमञ्चति प्राप्नोति, परणोपादीयते । परस्मै प्रकाशत इति यावत् इति व्युत्पत्त्या परस्मै प्रकाशमानवाची । सर्वोऽपि स्वात्मातिरिक्त पदार्थ स्वात्मेन प्रकाशमानत्वात् पराग्र्थ एव । एतद्विपरीतपरत्वाच्च प्रत्यक्शब्द प्रतीपमञ्चति, पराग्र्थप्रतीप प्राप्नोति, स्व प्राप्नोति, स्वस्मै प्रकाशत इति यावदिति स्वस्मै प्रकाशमानवाची । अत एव श्रान्यायतुल्ये प्रत्येतु प्रत्येत व्यादनातिरेक प्रत्यक्त्व'मिति सात्त्विक सवादो दर्शित । प्रत्येतु ज्ञातु प्रत्येतव्यात् ज्ञातव्यादनातिरेक अभेद । स्वविषयत्वरवाश्रय वैज्ञ्यसम्बन्धेन ज्ञानविशिष्टत्वम् । स्वस्मै प्रकाशमानत्व च स्वविषय सम्बन्धित्वोभयसम्बन्धेन प्रकाशविशिष्टत्वम् । उभय चानति

पिन्नम्।

परमात्मा चान्येन गृह्यमाणतादशायां अन्यस्मै प्रकाशत इति स न तदा प्रत्यगर्थः। अत एव न स्वयंप्रकाशत्वं प्रत्यक्त्वम्। परं प्रकाशकतयाऽञ्चतीति पराक् इति परप्रकाशत्वं पराक्त्वम्; प्रतीपं स्वप्रकाशकतयाऽञ्चतीति प्रत्यक् इति स्वप्रकाशत्वं प्रत्यक्त्वमित्यर्थाङ्गीकारे ज्ञानेच्छादेरपि प्रत्यक्त्वापत्तेः। स्वप्रकाशानिच्छुभिः परैस्तार्किकादिभिरपि प्रत्यगात्मेति व्यवह्रियमाणत्वाच्च। उक्तश्रुत्यादिविरुद्धत्वाच्च। एवमेकस्याप्यात्मनः स्वदृष्ट्या प्रत्यक्त्वात् तत्र परदृष्ट्या पराक्त्वमप्यस्तीति प्रत्यक्त्वपराक्त्वयोः समावेशो भवतीति प्रत्यक्परागिति विभागस्थले क्वचित् प्रतिनियतव्यवहारसंरक्षणाय परं परस्मा एव प्रकाशमानत्वं पराक्त्वमिति निरुच्यात्मना प्रत्यक्त्वमेव स्वीक्रियते। एवमप्येकैकैव प्रत्यगन्यक्ति अहमिति प्रत्यये विषयीभवति।

स चाहम्प्रत्ययः प्रत्यक्षातिरिक्तो यदि स्यात्, परात्मविषयकोऽपि स्यादिति प्रत्यक्षरूपः स्वीकार्य इति पूर्वमेवोक्तम्। स च प्रकाश आत्मनिष्ठः गुणभूतः आत्मा त्वस्वयंप्रकाश इति तार्किकाः। प्रमाणयन्त्रं स्वप्रकाशरूप इति तु वेदान्तिनः। इदमेव समस्तवैलक्षण्यं ज्ञापयितुं स्वस्मै स्वयंप्रकाशमानत्वं प्रत्यक्त्वमिति लक्षणं निरुच्यते। न पुनः अतिव्याप्तिवारणं स्वयं पदकृत्यम्। अनुमितिशाब्दबोधादिनाप्यहमिति विषयीकारेऽपि प्रत्यक्षविषयभूतात्मन्येवाहन्त्वस्य प्रागुक्ततया तत् अहत्वप्रयोजकं प्रत्यक्षं किमित्यत्र गुणभूतज्ञानातिरिक्तः प्रकाश इति वेदान्तिभिरुक्तं भवति। इदमेव चाहम्प्रत्ययविषयत्वे तत्प्रयोजकमुक्तविषमपराक्षं च च प्रागुक्तशङ्करभाष्यारूढम्।

एवमनेनाहम्प्रत्ययेन भवन्मते शुद्धचैतन्याग्रहेण अन्तःकरणाद्युपाधिविशिष्टात्मग्रहणेऽपि तत्र उपाधिभूतान्तःकरणादेरिदमुल्लेख्यास्पदत्वस्य उक्त

भाष्यपरिमलवाक्यादिनैव सिद्धतया स्वारस्याच्च विशेष्यभूते चैतन्येऽहंप्रत्ययविषयत्वं पर्यवस्यति । यदि चास्मत्प्रत्ययविषयत्वमात्मनि नेष्यते, उक्तयुक्त्यान्तःकरणादेरपि तदभावेनाहंप्रत्ययो निरालम्बन एव स्यात् । एतावदभिप्रेत्यैव शङ्करभाष्येऽस्मत्प्रत्ययविषयत्वादिति अभिहितम् ।

अहंत्वं चेद् स्वप्रकाशाद्धृदयत्वं स्वप्रकाशफलित्वं स्वनिष्ठम् । वस्तुप्रकाशफलं हि हानमुपादानमुपेक्षा वा । पराग्वस्तुप्रकाशं हानादिकर्तृत्वरूपं फलित्वं परस्य भवति । प्रत्यक्प्रकाशो च स्वस्यैवेति स्वयं प्रत्यक् । यद्यपि शास्त्रबलेन धर्मभूतज्ञानेनात्मा परमात्मार्थतयैव प्रकाशते, न तु स्वार्थतया, तथापि धर्मभूतज्ञानविलक्षणेन स्वप्रकाशेनात्मन उपादानादिकर्तृत्वभूतफलित्वं परमात्मायत्तं परमात्मार्थमेव वर्तमानं आत्मनि प्रत्यक्त्वं स्थापयति । ईदृशप्रकाशफलित्वविशिष्ट आत्मा परमात्मार्थतया शास्त्रजन्यज्ञानेन गृह्यते । अस्याप्यहंप्रत्यये भानादेव प्रत्यक्त्वेन रूपेणात्मा प्रकाशत इति भ्रमः । अतोऽहंप्रत्ययविषयत्वबलसिद्धं प्रत्यक्त्वं स्वीकृत्याहंप्रत्ययविषयत्वस्याहमर्थत्वस्य चास्वीकारः तु शङ्कोऽप्रामाणिकश्चेत्यलमधिकेन । अतः सुष्ठु भाषितम्, 'अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेदि'ति ।

एवमन्यस्मादहमर्थत्वासम्भवादपि आत्मैवाहमर्थः । तथा हि भवता अहङ्कारः स्वसान्निध्यात् अहंभावानापन्नमपि जीवमहंभावापन्नं करोतीत्युक्त्वा (पृ. ८२) इत्थमुपपाद्यते—अहङ्कारो हि महत्तत्त्वस्य साक्षात्परिणामः । स चानहमर्थं देहादिकमहमर्थं करोति, अहमर्थतया भासयतीत्यहङ्कार इत्युच्यते । तत्र यदि तस्याहंभावो न स्यात्, कथं स्वस्मिन्नसन्तं अहंभावमन्यत्रारोपयेत् । न हि हरिद्रा स्वस्मिन्नसन्तं रक्तिमानं स्फटिके प्रदर्शयेत् इति । एवमुपपादयतश्च ते वास्तवोऽहमर्थः अहङ्कार एवेति कथमन्तःकरणस्याहमर्थत्वं ज्ञातृत्वादिकं च संभावनीयमपसिद्धान्तः । न चान्तःकरणमोऽहङ्कारश्चेत्येकं तत्त्वम् । पञ्चभूतसात्त्विकसमुदायाधीनस्यान्त

करणस्य ततो भिन्नत्वात् । अतोऽवस्थाविशेषमापन्न अन्तःकरणमेवाहमर्थो ज्ञातृत्वाद्याश्रय इति सिद्धान्तानुसारे भवदीयो रागो भवन्न प्रदृश्यते, यत् 'कथं महत्त्वमापन्ना परिणाममूलस्याहङ्कारस्याहङ्कारपदवाच्यता ' तस्मिन् वास्तवाहमर्थं रामानेन तत्र देहादौ तदारोपासम्भवा'दिति । अतो वस्तूनामन्यत्र स्वनिष्ठधर्मारोपकत्वमेव स्वभाव इतीद भवतैवोपेक्ष्यम् । असम्भवी चायं नियमः, इन्द्रियगतदोषस्य शुक्त्यादौ स्वस्मिन्नविद्यमानरजतत्वारोपकत्वदर्शनात् । अत प्रमाणबलात् महत्तत्त्वपरिणामोऽहङ्कार अन्यत्र वर्तमानमहमर्थत्वं देहादावारोपयतीति युज्यते ।

तत्राहमर्थं न किञ्चिद्वामिति विचारे परागर्थेऽन्तःकरणादौ तदसम्भवात् आत्मनिष्ठमिति स्वीक्रियते । यदि चान्तःकरणस्य मुख्याऽहमर्थता, तदा अहं स्थूल इत्यादीनां अन्तःकरणगताहमर्थत्वस्य देहे आरोप इत्येव निर्वाहात् देहात्मभ्रमरूपता न स्यात् । अहं जानामीत्यादौ अन्तःकरणे वस्तुसद्ज्ञातृत्वादिपरतयैव सुष्ठु निरूढत्वात् अहशब्देनात्मग्रहणम्, तत्र ज्ञातृत्वोपचार इत्यादिकल्पना निर्मूलैव स्यात् ।

तर्हि आत्मना बन्धमोक्षौ नोपपादितौ भवत इति चेत् अस्तु । तावताऽपि नित्यशुद्धत्वमेवात्मनः सुस्थितं भविष्यति यथात्मनि किञ्चिद्वस्तुप्रमाणतः संस्थितिः । स्वीक्रियतां वा आत्मनि अहमित्यहत्वारोपः । तावताऽपि कथं तस्य बन्धमोक्षोपपादनम् । वस्तुतो ज्ञातृत्वभोक्तृत्वाभावेन बन्धाभावात् । आत्मानमहम्भावापन्नं मत्वा ज्ञातारमपि मन्यत इति बन्धोपपत्तिरिति चेत्—तदपि अहमावापन्नतया मन्तृत्वं ज्ञातृतया मन्तृत्वं च ज्ञातृत्वविशेष एवेति तदप्यन्तःकरणगतमेव, आत्मनि कथं भविष्यति? अन्तःकरणकर्तृकेण ज्ञानेनाहम्भावापन्नतया ज्ञातृतया च गृह्यमाणत्वमेवात्मनो बन्ध इति चेत् तन्न– न हि चैत्रः सत्यपि पाण्डित्ये मैत्रेण मूढतया गृह्यमाणः स्वयं मूढो भवति । अतो बन्धमोक्षोपपादनं भवतो दुर्घटमेव ।

आत्माभेदात्, अहन्त्वारोप आत्मन्यावश्यक, यस्मात् अहमिति ग्रहणे आत्मग्रहणमनुभवसिद्धमिति चेत्—तदनुभवमनुरुध्य आत्मैवाहमर्थ इत्यापनात् । किमन्तःकरणगतस्याहन्त्वस्यात्मन्यारोप इति कल्पनेन । न च स्फटिकनिर्मोकेन जपाकुसुमस्य रक्तस्य दर्शनवत् आत्मनिर्मोकेनान्तःकरणमहमिति कदाचिदुल्लिख्यते । न चेदमर्थे तत्राहन्त्वसाधकमप्यबाधितं किञ्चिदस्ति । तस्मादात्मैवाहमर्थः । न चात्मन देहादौ स्वनिष्ठाहन्त्वारोपकत्वात् अहङ्कारपदवाच्यता स्यादिति वाच्यम्—महत्तत्त्वविकारनिष्ठस्याहङ्काराभिमानहेतुत्वविशेषस्यैवाहङ्कारशब्दप्रवृत्तिनिमित्तत्वेनादोषात्। जीवस्य स्वभावत एव देहादावहम्भावापादकत्वे सर्वदैवाहम्भावापत्तिरिति अहङ्काररूपदोषस्य प्रमाणपरत्वास्वीकारः ।

एवमहन्त्वस्य वस्तुतोऽन्तःकरणमूलाहङ्कारनिष्ठत्वाङ्गीकारे, 'बहु स्यां प्रजायेय' इति 'हन्ताहमिमास्तिस्रो देवता' इत्यादौ श्रुतस्येश्वराहन्त्वस्य कुगतिता । न हीश्वरेऽन्तःकरणावच्छिन्नचैतन्यम् अहङ्कारावच्छिन्नचैतन्यं वेश्वरः, मायोपाधिकः खलु सः । न च मायायामहन्त्वमस्ति । न च बहु स्यामिति सङ्कल्पकालेऽहङ्कार उत्पन्नोऽस्ति, येन स्वनिष्ठमीश्वरे आरोपयेत । तस्मात् प्रत्यक्परिणामविशेषोऽहमर्थ इति सिद्धमात्मनोऽहमर्थत्वम् ।

एवं मोक्षेऽपि 'अहमन्नाद' इत्याद्यनुभवस्य प्रामाणिकत्वात् आत्मैवाहमर्थः । न च मोक्षे धर्मधर्मिभावादिभेदलक्षणस्याप्यभावात् नैवमनुभवः सम्भवतीति (पृ० ७०) वाच्यम् । मोक्षे सुखानुभवस्य स्वीकार्यतया भेदस्यावर्जनीयत्वात् । न च सुखानुभवश्रुतिर्दुःखात्यन्ताभावपरेति वाच्यम्—लक्षणायां प्रमाणाभावात् । भवन्मतेऽपि ब्रह्मण सच्चिदानन्दरूपतयाऽऽनन्दाविर्भावस्यावश्यकत्वात् । अस्वीकारे च लौकिकसुखानां ब्रह्मसुखैकदेशत्वकथनं 'एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' 'सोऽश्नुते सर्वान् कामान्' इत्यादौ भवदीयानामर्थवर्णनमित्यादि बहु व्याकु

प्येत् । न च लोकेऽपि सुखमिति किञ्चिन्नास्तीति अपह्नोतुं कश्चित् प्रभवति लौकिकसुखस्य दुःखाभावविलक्षणस्य भारापगमे सुखी संवृत्त इत्यौपचारिकव्यवहारमूलभूतस्य मुख्यस्य भवताऽपि वर्णितत्वात् । अन्यथा औदासीन्यावस्थायामेव स्वर्गादिसर्वसुखित्वव्यवहारः स्यात् । तस्मादानन्दस्य मोक्षेऽपि स्वीकार्यतया तस्याप्रकाशमानस्य सतोऽप्यसत्प्रायत्वात् प्रमाणानुरोधात् आनन्दप्रकाशोऽपि स्वीकार्यः । अत एव परिभाषायां 'सुखदुःखाभावौ मुख्यप्रयोजने' इत्यारभ्य मोक्षश्चानर्थनिवृत्तिर्निरतिशयब्रह्मानन्दावाप्तिश्चे'ति निगमितम् ।

एवं चित्स्वरूपत्वमपि कश्चिद्धर्मः । न च परप्रकाश्यत्वाभाव एव चित्त्वमिति वाच्यम् । यतः एवं स्वप्रकाश्यत्वास्वीकारे, 'प्रत्यगात्मा न स्वतः नापि परतः प्रथत' इत्यविषय इत्याक्षिप्य तदप्रथायां सर्वस्याप्रथनेन जगदान्ध्यप्रसङ्ग इत्युक्तं भामत्याम् । अतो यादृशो वस्त्वन्तरप्रकाशस्तादृशस्तत्प्रकाशोऽपि स्वीकार्य इति कथं धर्मधर्मिभावापलाप इति । ननु प्रकाशो व्यवहारानुगुण्यम् । न च मोक्षे व्यवहारः सम्भवतीति चेत्–क एवमाह मोक्षे व्यवहारो नास्तीति ।

न च दुःखनिवृत्त्यर्थैव मोक्षे प्रवृत्तिरिति (पु ९१) वाच्यम् । अधीतसाङ्गसशिरस्कवेदो हि 'एष ह्येवानन्दयाति ; रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इत्यादिवाक्यविशेषदर्शनजनितानन्दानन्दसम्भावनः निरस्ताखिलदुःखोऽहमनन्तानन्दमाक्स्वराट् भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्तते । न चैवंप्रवृत्तस्य पश्चाद्विचारात् आनन्दाभावप्रतिपादकं किमपि प्रमाणं प्रतीतिपथमधिरोहति । येनानन्दावाप्तिर्नास्तीति निश्चिनुयात् । अतः ईदृशमोक्षार्थप्रवृत्तिबलादपि मोक्षेऽहत्वप्रतीतिरस्तीत्युन्नीयते । न चेदृशसङ्कल्पवशात् मोक्षेऽहमर्थसत्तामात्रनिश्चयेऽपि तत्प्रतीतिनिश्चयो न भवतीति भ्रमितव्यम् । अनन्तानन्दभाक्त्वस्य मोक्षकालिकत्वेन कीर्तनात्, आनन्दस्य

चानुभवावश्यकतायाः प्रागेवोक्तत्वात्, सुखादीनां धर्माणां धर्मिणं विहाया-नुभवस्य च कदाऽप्यभावात् अहमर्थानुभवस्यापि तदानीमावश्यकतया तद-पलापासम्भवात्। अपनीताहमर्थानुवृत्तिमात्राङ्गीकारेऽपि अन्तःकरणमह-मर्थ इति पक्षस्य प्रतिक्षेपावश्यम्भावेनेदृशाशङ्काया व्यर्थत्वाच्च। अतःप्रमा-णाद्यनुरोधात् दुःखनिवृत्तिः सुखप्राप्तिश्च मोक्षदशायाम्।

न च मोक्षस्य बन्धप्रतिद्वन्द्विभूततया दुःखात्यन्ताभावस्यैव दुःखप्रति-द्वन्द्वितया स एव मोक्षः, न तु सुखम्; तस्य दुःखसामानाधिकरण्योपल-म्भादिति वाच्यम्—दुःखात्यन्ताभावस्यास्माभिरपि स्वीकारात्। सुखक्षणे दुःखोत्पत्त्यसम्भवेन निरतिशयाविच्छिन्नसुखरूपे निःश्रेयसे सुखवर्जितक्षणा-भावेन दुःखोत्पत्तेरनवकाशात्। ईदृशस्य सुखस्य दुःखप्रतिद्वन्द्वित्वस्यापि सम्भवाच्च। किं च दुःखनिवृत्तिमात्रस्य मोक्षत्वे तस्य गौणपुरुषार्थतापत्तिः। 'अनुकूलप्रतिकूलान्वयविरहे सति स्वरूपेणावस्थितिर्दुःखनिवृत्तिरिति हि यथार्थभाष्ये भवताऽपि स्वीकृतम्। तस्य च दुःखाभावसंघटता दुःख-रूपप्रतिकूलप्रतियोगिकत्वात्; न तु स्वतः। सुखमेव तु स्वत इष्टमिति मोक्षरूपमुख्यपुरुषार्थस्य गौणतापत्तिः। न च मोक्षेऽनुकूलान्वयप्रसक्त्य-भावात् कथं सुखमिति वाच्यम्—स्वस्यैव स्वानुकूलत्वात्। सविभूतिक-ब्रह्मरूपानुकूलतमान्वयसद्भावेन सुखातिशयस्याक्षतेश्च।

न चैवं द्वितीयसद्भावे द्वितीयाद्वै भयं भवतीति मोक्षे भयमापादनी-यम्—प्रतिकूलद्वितीयाभावेन तदप्रसक्तेः। श्रुत्यर्थस्य प्रागेव वर्णितत्वात् नित्यसुखाभिव्यक्त्यङ्गीकारे च भयस्य का प्रसक्तिः? न च दुःखातिशयेनैव मोक्षे उत्कर्षातिशय उपपाद्यः, न सुखातिशयेन। सुखातिशयस्याप्यस्त्वेन औपचारिकेण दुःखनाप्यभिभवदर्शनात्। यथा राज्यादिसुखस्य सतोऽपि अनपत्यतानिबन्धनसुखाभावरूपदुःखबलेन दशरथे दाशरथेरवतारात् प्राक् अभिभवः। अतो दुःखाभावमादायैव मोक्ष उपपादनीय इति किमन्येन

सुखातिशयेन इति वाच्यम् । न ह्यत्र सुखातिशयं कल्पयामः । किन्तु प्रमाणानुरोधेन परिगृह्णीमः । किञ्च भवन्मते सुखात्यन्ताभावरूपोपचारिकदुःखस्य मोक्षे सत्त्वेन दुःखात्यन्ताभाव एव दुरुपपादः । अस्माकं तु दुःखस्येष्टालाभप्रयुक्तत्वात् मोक्षे चाविर्भूतगुणाष्टकस्य तदलाभप्रसक्त्यभावात् न दुःखलेशस्यापि सम्भावना । अतो भवता सुखस्यौपचारिकसकलदुःखाभावाय मोक्षे सुखातिशयः स्वीकार्य एवेति । तथा च धर्मधर्मिभावानन्तानुकूल्द्वैतपक्षेऽपि भयप्रसक्त्यभावान्मोक्षस्याभयत्वसिद्धेः न तद्भयेनाहमर्थानुवृत्तेः प्रामाणिक्या परित्यागः इति सिद्धं आत्मन एवाहमर्थत्वम् । एवमव्यक्तपरिणामस्याहमर्थत्वे तस्य प्रतिसर्गं भेदात् अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गोऽप्यनुसन्धेयः ।

अस्य चाहमर्थस्यात्मनः ज्ञातृत्वमपि स्वाभाविकम् , अहं जानामीत्यादौ ज्ञातृत्वोपचाराश्रयणायोगात् । ज्ञानसामान्यस्य साश्रयत्वसविषयत्वावश्यंभावेनाश्रयापेक्षायां प्रतीयमानाहमर्थरूपात्मत्यागेनान्याश्रयकल्पने प्रमाणाभावात् । न च (पु ९३) शब्दतन्मात्राद् आकाशादिनिष्ठस्याकाशात्प्रागपि निराश्रयतया सद्भाववत् ज्ञानमपि पश्चाद्विशेषरूपं साश्रयं भवदपि सामान्यावस्थायां निराश्रयमस्तीति वाच्यम्—शब्दतन्मात्रस्य आकाशोपादानद्रव्यात्मकतयाऽऽकाशानिष्ठत्वाभावेन 'शब्दतन्मात्रादिष्वस्तदाश्रयाणां महाभूतानामुत्पत्तिः साङ्ख्यैरुक्ता, भवताऽपि स्वीकृता चे'ति त्वद्वचनस्य निर्मूलतया दृष्टान्तस्यैवासिद्धेः । अनुभूतेराश्रयसम्बन्धविषयसम्बन्धातिरिक्तविशेषाभावेन विशेषरूपतायां साश्रयत्वसविषयत्वनियमः, न त्वन्यदेति नियमस्य दुर्वचत्वाच्च । अतिरिक्तविशेषस्यानुभूताबङ्गीकारे च तस्याः परिणामित्वापत्तिः । न च विषयसम्बन्धरूपविशेषवत्या अनुभूत्या आश्रयापेक्षा न तु तद्राहित्य इति वाच्यम्—अनुभूतेर्ब्रह्मणो विभुत्वेन सर्वदैव सर्वविषयसम्बन्धित्वात् तादृश्याश्च सर्वाश्रयसापेक्षत्वे सर्वस्य सर्वज्ञत्वापत्तेः ।

न च घटादिरूपयादृशविषयावच्छिन्नचैतन्यं यदन्तःकरणरूपस्वच्छद्रव्यगतवृत्त्याख्यपरिणामसम्बन्धोपाधितत्स्वच्छताकं घटादौ प्रतिफलति, तादृशविषयावच्छिन्नस्य तथाविधस्यैव चैतन्यस्य तदन्तःकरणरूपाश्रयापेक्षेति वाच्यम्—ईदृशस्वच्छताकघटादिगतप्रतिफलनातिरिक्तस्य चैतन्यविषयसम्बन्धस्य दुर्वचतया तदतिरिक्तस्य चाश्रयसम्बन्धस्यान्यस्याभावेन तादृशसम्बन्धविशिष्टस्याश्रयापेक्षेति वक्तुमशक्यत्वात् । प्रतिफलनस्य घटादौ वृत्तौ च विशिष्टतयाऽहं जानामीतिवत् घटो जानातीति प्रयोगस्य प्रसङ्गाच्च । घटकर्तृकज्ञानेऽन्तःकरणस्य विषयत्वप्रसङ्गाच्च । न ह्यन्तःकरणमतीन्द्रियम्, अहमित्यत्र तद्भानाङ्गीकारात् । प्रत्यक्षस्थलेऽन्तःकरणवृत्तिनिर्गमस्य तद्बलेन विषयस्वच्छतायाश्च कैश्चिद्वद्भिरङ्गीकारेऽपि परोक्षवृत्तिस्थले तदभावेन तस्या आश्रयापेक्षताया ईदृशरीत्यसम्भवाच्च ।

न च विषयाकारकवृत्त्यवच्छिन्नचैतन्यस्य वृत्तिपरिणाम्युपादानरूपाश्रयापेक्षेति वाच्यम्—वृत्तेर्जडतया विषयाकारकत्वाभावात् । अङ्गीकारे च वृत्त्यैव सर्वनिर्वाहात् चैतन्यपदार्थ एव न सिद्ध्येत् । एवं चैतन्यस्यापि शुद्धतया विषयाकारकत्वं न सम्भवति । न च केवलचैतन्यस्य निर्विषयत्वेऽपि वृत्त्यवच्छिन्नस्य विषयविषयकत्वमस्तीति वाच्यम् । एवमपि विषयसम्बन्धात्प्रागेवान्तःकरणवृत्त्यवच्छिन्नत्वस्य सिद्धतया तदतिरिक्तस्य साश्रयत्वस्वरूपस्याभावेन विषयसम्बद्धचैतन्यमाश्रयसापेक्षमित्यस्य दुर्वचत्वात् ।

वस्तुतो वृत्त्यवच्छिन्नचैतन्यान्तर्गतया वृत्तेरेवान्तःकरणनिष्ठत्वं, न तु चैतन्यस्य ब्रह्मण इति अहं जानामीत्याधाराधेयभावप्रतीत्यनुपपत्तिरेव । यत्तु-पेक्ष्येण—अहंशब्देनान्तःकरणावच्छिन्नचैतन्यं जाधातुना वृत्त्यवच्छिन्नचैतन्यं च गृहीत्वा धर्मधर्मिभावे कथिते विशेष्यस्वरूपस्य एकतयाऽऽधाराधेयभावासम्भवत्या विशेषणभूतेऽन्तःकरणे विशेषणभूतवृत्तिमत्त्वमेव कथितं भवतीति—तत्र सर्वथैव क्लिष्टमनुभवानारूढं च । अहंशब्देन प्राह्यस्यात्मन

वस्तुगत्याऽन्तःकरणावच्छिन्नत्वेऽपि अहंशब्दात् देहेन्द्रियाद्यवच्छिन्नत्वस्ये-वान्तःकरणावच्छिन्नत्वस्यापि न प्रतीतिः । अत एवानुभविकत्वाभावाद-न्तःकरणोपाधिकत्वमविद्याप्रतिबिम्बत्वमित्यादीनां पक्षाणां जीवविषये समु-त्थानम् । अतश्चान्तःकरणस्य विशेषणत्वाभावात् विशेषणपर्यवसानमा-धारत्वस्य दुर्भणम् । अविद्याप्रतिबिम्बो जीव इति भवत्पक्षे चान्तःकर-णरूपाहमर्थज्ञातृत्वस्यात्मन्यारोपेऽहं जानामीति प्रतीतिर्न साधिका । अहमो-ऽन्तःकरणावच्छिन्नचैतन्यपरत्वात् । कथञ्चित्प्रतिबिम्बग्रहणेऽपि तस्यावि-द्यागतस्यान्तःकरणवृत्त्यवच्छिन्नचैतन्याश्रयत्वमपि दुर्घटम् । अतः स्वरस-प्रतीतिकः आत्मन्यहमर्थे ज्ञाननिरूपिताधारभावः पक्षान्तरसम्भावनायामपि युक्तो ग्रहीतुम् ; सुतरां च पक्षान्तराणां अनुपपन्नत्वे इति सिद्धमात्मनो धर्मभूतमेव ज्ञानमिति । तस्मात्—

संविदोऽन्याश्रयापेक्षा ज्ञातृत्वं च तथाऽऽत्मनः ।
ज्ञानस्वरूपो ज्ञातात्मा ज्ञाता(तृ अ)न्तःकरणं कथम् ॥

अतश्च ज्ञातृत्वस्य कल्पितत्वाभावात् 'विज्ञातारमरे केन विजानीयात्' इति श्रुतिरपि न कदर्थनीया । यत्तु 'अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चित'मिति सूक्तौ प्रत्यगात्मपदेन जीवेश्वरग्रहणे सिद्धसाधनम् , तत्र ज्ञातृत्वादेरङ्गीकारात् । निर्विशेषचिन्मात्रं तु न त्वन्मते प्रसिद्धमिति न सङ्ग्रहणमिति—तन्न—अत्र हि सूक्तौ वस्तुतोऽहमर्थत्वज्ञातृत्वविशिष्टस्य प्रत्य-क्त्वविशिष्टात्मत्वं साध्यते । त्वया जीवेश्वरपदाभ्यां किं चैतन्यांशो गृह्यते उत उपाधिमात्रम् । नाद्य , तस्य वस्तुतोऽहमर्थत्वाविशिष्टत्वाभावात् । नान्त्य ; उपाधौ आत्मत्वरूपसाध्यस्यासिद्धतया सिद्धसाधनाभावात् । निर्विशेषचिन्मात्रत्वेन रूपेणास्माभिरसाधनात् प्रत्यक्त्वविशिष्टात्मत्वमित्यस्य-दुक्तांशे कस्यचिदंशस्याप्यप्रसिद्धत्वाभावात् । भवता ज्ञातृत्वादे आत्मत्वा-देश्च वैयधिकरण्यं स्वीकृतमिति तत्प्रतिषेधाय सामानाधिकरण्यमत्र साध-

याम । अतो भवत्कृतो विकल्पः विपर्यासमूलक इति ।

न च चिद्रूपस्य मनसोऽनन्यगुणकत्वं कथमिति शङ्क्यम्—यथा एकमेव तेजोद्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते तथेति भाष्य एवोपपादितत्वात् । न च (पृ. ०.४) एकधर्मेत्यस्य एकजातीयधर्मेत्यर्थः । तथा च द्वयोरपि ज्ञानत्वेन एकजातीयत्वे धर्मभूतज्ञानस्येव धर्मिणोऽप्याश्रयविषयापेक्षा—इति वाच्यम्, दृष्टान्तापरिशीलनात् । यथा हि तेजस्त्वेन एकजातीयत्वेऽपि प्रभावतः प्रभाया इव नाश्रयापेक्षा तद्वदिति दृष्टान्तपरिशीलने शङ्कोत्थानस्यैवाभावात् ।

नन्वनुभूतिरिति ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेष इति ज्ञानसामान्यस्य साश्रयत्वसविषयत्वादिभिर्वादिनिराश्रयनिर्विषयज्ञानस्वरूप आत्मेत्युच्यते तर्हि निराश्रयनिर्विषयसंविद्वादिभिर्मायिभिः किमपराद्धमिति चेन्न—आशयापरिज्ञानात् । घटमहं जानामि पटमहं जानामीत्यादिसर्वविषयानुवृत्ततया प्रकाशमानं ज्ञानमेव ब्रह्मेति स्वीकृत्य तस्य निराश्रयत्वनिर्विषयत्ववादो हि भवद्भिः क्रियमाणः धात्वर्थतया प्रतीयमानस्य ज्ञानस्य साश्रयत्वसविषयत्वनियमात् अयुक्त इत्यस्माभिर्निरूप्यते । यत्र प्रतीयमानसविशेषज्ञानविलक्षणं ईदृशप्रतीत्यनारूढं निर्विशेषं ज्ञानस्वरूपं किञ्चिदस्तीति श्रुतिप्रदर्शनेनोच्यते तर्हि तस्य प्रामाणिकत्वं वयं न निषेद्धारः । न चायमेव लौकिकानुभूतिविलक्षणानुभूतिरिति सहसा वक्तव्यम् । स्वप्रकाशस्य चैतन्यस्यैकस्यैव भवद्भिः स्वीकारात् । अन्यस्य चान्तःकरणवृत्त्यादिरूपस्य जडस्य भवन्मते मुख्यज्ञानत्वाभावात् । अतश्चानुभवसिद्धं ज्ञानसविशेषत्वमपरस्यत इति भवतामेव दोष एव ।

येन हि घटमहं जानामीति प्रत्ययेन ज्ञानवत्प्रतीयमानत्वाविशेषात् घटादिबाह्यापलापिनो बौद्धाः पराहन्यन्ते तेनैव प्रत्ययेन प्रतीयमानज्ञानस्य सविशेषत्वं कथङ्कारमुपेक्षितुं प्रभवाम । व्यवहाराच्च लोके व्युत्पत्तिमहं ।

व्युत्पत्तिश्च घटमहं जानामीत्यादिना ज्ञानादिशब्दस्य साश्रये सविषयक एव । एवं च वास्तवज्ञानस्य साश्रयत्वादिकमस्वीकृत्य अन्यत्र स्वपरिकल्प्य व्यवहारजनितव्युत्पत्तिभङ्गेन निर्विशेषस्य ज्ञानत्वकथनमसङ्गतमेव । अतः स्वीकृत्यास्य मुख्यमेव ज्ञानत्वम् अन्यस्यापीदं सम्भाव्यते चेत् कामं प्रमाणबलाद्युज्यते स्वीकर्तुम् । तथा च यथा गोशब्दस्य शब्दव्युत्पत्तिबलेन गमनकर्तृत्वरूपार्थप्रतीतावपि गच्छदगच्छत्सर्वगोव्यक्तिगतगोत्वप्रवृत्तिनिमित्तकत्वस्वीकारः तथा प्रथमप्रतीतसकर्मकसाश्रयज्ञानाविरोधेन श्रुतिप्रमाणप्रमितात्मादिज्ञानरूपवस्तुसाधारण्यार्थं सविषयकत्वादिव्युत्पत्तिनिमित्तप्रवृत्तिनिमित्तत्वेनास्वीकृत्य व्यवहारानुगुण्यापादकत्वरूपसर्वसाधारणप्रवृत्तिनिमित्तस्वीकारो नानुपपन्नः । तावता ज्ञाधात्वर्थगतसविषयकत्वाद्यंशभङ्गो न कथञ्चिदपि । तथा च व्युत्पत्तिनिमित्तं सविषयकत्वम् । प्रवृत्तिनिमित्तं तु साधारणमिति तत्त्वं विभाव्यताम् । यद्येतावताऽपि न तृप्तिः ; तर्हि लोकावगतव्युत्पत्त्यविरोधाय श्रुतौ ज्ञानादिशब्दः आत्मनि प्रयुज्यमानः व्यवहारानुगुण्यापादकत्वरूपं साधारणं धर्ममादाय गौण एवास्तु । मुख्यं तु ज्ञानं साश्रयं सविषयकमेवेति न कश्चिद्दोषः । सर्वथा न ज्ञानशब्दस्यानेकशक्तिकल्पनाप्रसक्तिः । स्वीक्रियतां वा 'सविषयकवाची ज्ञानादिशब्दः ज्ञाधातुनिष्पन्नः, आत्मवाची तु ज्ञानादिशब्दः रूढो न व्युत्पन्नः' इति शब्दवैलक्षण्यम्, एवमपि निर्वाहसम्भवात् । न चास्माभिरपि स्वीक्रियते इति [पृ ९५] वाच्यम् । तथा सति घटोऽनुभूयत इत्यादौ ब्रह्मरूपानुभूत्यनुवृत्तिकथनस्यासाङ्गत्यापातात् ।

न च विज्ञानमानन्दं ब्रह्मेत्यादिश्रुत्युपपत्तये ज्ञानस्वरूपात्मस्वीकारेणैवोपपत्तौ किं गुणभूतज्ञानस्वीकारेण । न हि शुक्लो घटः, घटः शुक्ल इति द्विविधव्यवहारनिर्वाहाय शुक्लगुणातिरिक्तशुक्लस्वीकारः [पृ ९४] इति वाच्यम्– विषमत्वात् दृष्टान्तोपन्यासस्य । न हि गुणगुणिनोरैक्यम् ।

तथा च शुक्लगुणस्वीकारवत् धर्मभूतज्ञानस्वीकारेणोपपत्तौ किमिति धर्मिभूतज्ञानाभ्युपगम इति प्रष्टव्यम् । आवश्यक च धर्मभूतज्ञानस्वीकरणमिति च प्रत्यक्षागमादिना प्रागेव समर्थितम् । धर्मिज्ञान किमर्थमित्येव पृच्छयत इति चेत् किं धर्मि किमर्थमिति प्रश्नाशय , उत तस्य ज्ञानत्व कुत इति । नाद्य । शुक्लगुणाश्रयघटवत् ज्ञानाश्रयतासिद्धे दुर्वारत्वात् । विज्ञातार मरे इत्यादिश्च श्रुति । 'ज्ञानत्व साक्षात् कुत ' ज्ञानगुणकत्वेनैव ज्ञान शब्दनिर्वाहात्' इति चेत् सत्यम्– तथाऽपि 'अत्राय पुरुष स्वय ज्योति - रितीदृशश्रुतिबलात्तदपीष्यते । युक्त चैतत् मन इन्द्रियनन्यलौकिकप्रत्यक्षस्य कस्यचिदस्वीकारात् । ज्ञानेच्छासुखदु खादीना प्रत्यक्षयोग्यानामात्मगुणाना स्वप्रकाशत्व न, तद्वदेवात्मनोऽपि स्वप्रकाशत्वेऽह सुखी इत्यादीनामिन्द्रियनिरपेक्षमेव निर्वाहात् । अत श्रुत्युपपत्तिभ्या ज्ञानस्वरूपत्व ज्ञानगुणकत्व चावर्जनीयम् ।

न च संविदात्मा अजडत्वात् यन्नैव तन्नैवमित्यनुमानेन संविद आत्मत्वसिद्धिरिति [पृ ९५] वाच्यम् , संवित्पदेन धर्मिभूतज्ञानविवक्षाया सिद्धसाधनात् । सविषयज्ञानस्य स्वरसतो ग्रहणे च बाधितत्वात् । किं चेदमजडत्व ? अनन्याधीनप्रकाशस्वरूपत्वमजडत्वम् घटादे सर्वस्यान्याधीनप्रकाशत्वाच्च न व्यभिचार इति चेत् तत्र अनन्याधीनेति व्यर्थं प्रकाशस्वरूपत्वाभावादेव घटादिवारणात् । अस्तु तावदेवेति चेत् एवमपि सुखदु खादौ व्यभिचार , न च तस्य न प्रकाशस्वरूपत्वमिति मन्तव्यम् । तथा सति स्वयप्रकाशस्य ब्रह्मण सुखरूपताऽऽनन्दरूपता न स्यात् । सुखस्याप्रकाशत्वात् । तथा च तुल्यन्यायात् स्वप्रकाशे दु खादौ व्यभिचार एव । एवमहङ्कारव्यङ्ग्याया संविदि अनन्याधीनप्रकाशत्व च दुर्वचम् ।

किं चानुभूतेरात्मत्वे अहमर्थस्य च तत्रारोपे अनुभूतिरहमिति इद रजतमितिवत् प्रतीति स्यात् , न पुनरनुभवाम्यहमिति विशेष्यविशेष

णभावेन । न च कथमनुभूतिरहमिति स्यात् अधिष्ठानस्य विशेषरूपेण भ्रमे ग्रहणाभावादिति [पु ९५] वाच्यम् । भवन्मते अनुभवाम्यहमिति निर्विशेषानुभूतिप्रतीतावपि यथा तत्राहमर्थप्रतीति तद्वदुपपत्ते । अनुभूतौ विशेषाकारसामान्याकारद्वयस्य भवद्भिरनङ्गीकारेण यावदनुभूतिरहमित्येव प्रतीतिरहमर्थारोपपक्षे स्वीकार्यं त्वाच्च । न चानुभवाम्यहमित्यत्र धात्वर्थोऽनुभवः न निर्विशेषानुभूति, किं त्वव्यक्तपरिणामविशेष । अतश्चदृशा व्यक्तपरिणामात्मकानुभववैशिष्ट्यप्रतीतिरहमर्थे उपपन्ना [पु ९६] इति वाच्यम्—अव्यक्तपरिणामस्य जडस्यानुभवत्वायोगात् । न चालौकिकी अनुभूति न प्रतीयते ज्ञेयत्वाभावादिति वाच्यम्, तर्हि अधिष्ठानाग्रहणे भ्रमस्यैव दुर्वचत्वापत्ते, तदग्रहणे चानुभूतित्वस्यैव तत्रासिद्धिप्रसङ्गाच्च । एतेनाहमर्थाधिष्ठानस्यालौकिकानुभूतेरनुभूतित्वेन न प्रतीति, अपि तु सत्वेन इत्यपि निरस्तम् । अहमर्थोल्लिखाकारे सर्वदा सत्वोल्लेखाभावाच्च ।

अन्त करणस्यैव ज्ञातृत्व युक्तम् । ज्ञातृत्व ह न ज्ञानगुणकत्वम्, किं तु ज्ञानक्रियाकर्तृत्वम्। क्रियावाचिनो धातोस्तृच स्मरणात् ज्ञातृशब्द निष्पत्ते । तच्च ज्ञान मानसी क्रियेति मन एवान्त करण ज्ञातृ । न चाचेतन वप्रकृतिपरिणामित्वादिना देहस्येवान्त करणस्य ज्ञातृत्वविरह शङ्कनीय, अचेतनत्वादिना साम्येऽपि एतत्सम्भवात्, तस्याप्रयोजकत्वादिति [पु ९६] चेन् इदमतिशवीय । ण्वुल् तृचौ [३ १ १३३] इति विहितस्य तृच संयोगविभागादिगुणवाचिधातुत इव ज्ञाधातोरपि सम्भवात् । न हि धात्वर्थरूपक्रियात्वस्य तार्किकपरिभाषितगुणत्वस्य च कश्चिद्विरोध । न हि उत्क्षेपणादिकर्मरूपक्रियावाचित्व सर्वेषा धातूनाम् । कथं च ज्ञानस्य मानसक्रियात्वम् । किं ज्ञानमिति शुद्धचैतन्य गृह्यते किं वाऽन्त करणवृत्ति । आद्ये तस्याक्रियात्वममानसत्व च स्पष्टम् । अन्त्येऽपि वृत्ते मृदो घटवत् अन्त करणपरिणामभूताया यहिर्घटादिना सम्बन्धाद्याया घट याकार

किं च किमिदं अन्तःकरणस्य ज्ञानव्यञ्जकत्वं नाम ? ब्रह्मभूतचैतन्यव्यञ्जकत्वं तु त्वया नेष्यते। वृत्तिव्यञ्जकत्वेऽपि किमिदं व्यञ्जनम् ? वृत्तिविषयकज्ञानजननमिति चेत्–तादृशवृत्तिविषयकज्ञानाश्रयत्वं नाम किम् ? तद्व्यञ्जकत्वमेवेति चेदेवमनवस्था। तद्ज्ञानं साक्षादेव अस्तीति चेत्–तर्हि पूर्वा वृत्तिरप्येवमेव स्यास्यतीति कुतो व्यञ्जकत्वनिरूपणप्रयासः ?

किं च घटादिवृत्तिज्ञानानि अन्तःकरण उत्पद्यमानानि तद्गत घटाद्यज्ञानरूपं करणमपमपनयन्तीति भवतोच्यते। तन्न युज्यते। अज्ञानं हि, यत्परमार्थमत् तद्विषयकज्ञानोत्पत्तेः प्राक् तद्विषयकमस्तीति साम्प्रतम्। अतश्च ब्रह्मज्ञानात् प्राक् ब्रह्माज्ञानमिति किञ्चिदस्तीति भवतु। घटादयस्तु स्वयमपरमार्था इति तेषामेवाभावे तदज्ञानमिति किञ्चित् दुर्वचम्। यथा हि प्रातिभासिकरजताज्ञानं किञ्चित् प्रातिभासिकरजतज्ञानेन निवर्त्यत इति न भवति तथेति। यथा हि शुक्तौ कस्यचिद्रजतभ्रमदशायां कल्पितरजतमन्यो न जानातीति तदुपपादनाय तस्य तद्रजताज्ञानं किञ्चिन्न कल्प्यते; अन्यथा प्राज्ञस्याप्यज्ञःवापत्तेः तथा ब्रह्माज्ञानेन घटादिभ्रमभाक्षु जनषु तत प्राक् घटाद्यज्ञानभूतं किञ्चिद्वस्तु स्थितमिति न युक्तम्। अज्ञानं हि दोषः यथावस्थितवस्तुज्ञाननिवर्त्यः। न ह्ययथाभूतपदार्थाज्ञानमपि दोषो भवति। तथा तु सति मुक्तस्य जगदज्ञानमपि कश्चिद्दोषः स्यात्। अतो ब्रह्ममात्रपारमार्थ्यवादिभिर्घटादिज्ञानेन तदज्ञानरूपकरणमपनयनं दुर्वचम्।

'अभिव्यञ्जकस्य स्वनिष्ठतयैवाभिव्यङ्ग्यप्रदर्शनमिति स्वभावो नास्ति। प्रदीपादिष्वदर्शना'दिति भाष्योक्तोपरि भवता, 'न प्रदीपो व्यञ्जकः किं तु तत्प्रभा' इत्युच्यते। तावता किं तेऽनुकूलम् ? न हि प्रभा स्वनिष्ठत्वेन घटाद्यभिव्यनक्ति। दर्पणादेश्चाक्षुषरश्मिप्रतिफलनद्वारा मुखादिव्यञ्जकत्वमस्तीति त्वया (पु. ९०)भाष्यते। तावताऽहङ्कारस्य कीदृशकार्यद्वारा वृत्तिज्ञानव्यञ्जकत्वं त्वयोपपादितं भवति। तस्मादात्मनः साक्षात्ज्ञातृत्व-

महमर्थत्वं च । अहमर्थत्वाभावे प्रत्यक्त्वं न सिद्ध्यतीति प्रागेवोक्तम् । स्वयंप्रकाशत्वमेव प्रत्यक्त्वमित्यपि प्रागेव परास्तमिति । नन्वात्मनोऽहमर्थत्वे सुषुप्तादावप्यहम्भावापत्तिरिति चेत्–कोऽयमापाद्यमानोऽहम्भावः ? किमहमर्थत्वम्, किं वा अहमिति प्रकाशः, आहो अहमिति धर्मभूतज्ञानेन ग्राह्यता । नाद्यः; इष्टत्वात् । अहमर्थे वर्तमाने अहमर्थत्वमपि तत्रास्त्येवेति । न द्वितीयः; तस्यापि स्वप्रकाशत्वादात्मनः इष्टत्वात् । यथा भवदभिमतानुभूतिः सुषुप्तावपि प्रकाशते, तथेति । तत्र किं प्रमाणमिति चेत्–अनुभूतावेव न प्रमाणम्; 'न किञ्चिदवेदिष'मिति तदानुभवनिषेधात्। अहमर्थसत्त्वे तु 'अहमस्वाप्स'मिति जागरानुभव एव प्रमाणम् । अथापि तत्प्रकाशे किं प्रमाणमिति चेत्–तस्य स्वयंप्रकाशत्वं पूर्वोक्तप्रमाणोपपत्तिसिद्धं न प्रष्टुमर्हसि । तृतीयः पक्षस्तु नेष्यत एव । अत एव 'न किञ्चिदहमवेदिष'मिति प्रतीतिरपि सुस्था । धात्वर्थो हि सविषयकं धर्मभूतं ज्ञानमिति प्रागेवावोचाम । न च तदा किञ्चिदपि धर्मभूतज्ञानेन गृह्यत इति स्वीकुर्म इति । न च धर्मभूतज्ञानं सुषुप्तौ वर्तमानं कुतो न प्रकाशत इति शङ्क्यम्–तस्य विषयसम्बन्धे सत्येव प्रकाशाभ्युपगमात् । विषयसम्बन्धाभावेन च सुषुप्तौ तदभावात्, न च धर्मभूतज्ञानस्य प्रथमत आश्रयापेक्षैव न तु विषयापेक्षेति कथं विषयापेक्षप्रतीतिकत्वमिति शङ्कनीयम्–प्रथमतः स्वसत्तायै आश्रयापेक्षत्वेऽपि स्वप्रतीतये विषयापेक्षत्वस्यानुभविकस्य स्वीकारे विरोधाभावात् । अतः सुषुप्तौ किमपि धर्मभूतज्ञानवेद्यं न भवतीति अस्माभिरपीष्यत एव । न चैवमेव 'मामप्यहं न ज्ञातवानि'ति प्रतीत्याहमर्थप्रकाशोऽपि तदा नाभ्युपेत्यः । मामित्यस्य वर्णाश्रमादिविशिष्टरूपेण मामित्यर्थवर्णनेन निर्वाहस्तु क्लिष्ट इति वाच्यम्–क्लेशलेशस्याप्यभावात् । ज्ञाधातुना धर्मभूतज्ञानमुच्यत इति प्रागेवोक्तम् । न च धर्मभूतज्ञानं किञ्चिद्विशेषणविकलमात्मानं केवलं गृह्णाति । अननुभवात्; स्वप्रकाशे तादृशे तत्र तद्वै-

यर्थ्याच्च । अतः अहमर्थविषयकधर्मभूतज्ञाननिषेधः विशेषणविशिष्टाह मर्थग्रहणनिषेध एव पर्यवस्यति । क्वचित्क्वचिदहमर्थः स्वयमेव ज्ञाय इत्यादौ ज्ञापातुप्रयोगः औपचारिकः । उपचारतात्पर्यग्राहकश्च स्वयमे त्यादिनिर्देश इति विभाव्यम् । भवदीयैस्तु घटोऽनुभूयत इत्यादौ प्रज्ञान वृत्त्युपपादनाय परमात्मचैतन्यमेव ज्ञापात्वार्थत्वेनेष्यत इति भवदभिमत नुभूत्यभावसाधक एवायं न किञ्चिदहमवेदिषमिति प्रत्ययः । अतश्च ते प्रत्ययेन प्रतिषिद्ध्यमानां विधिं तदा स्वीकृत्य तेनानुमान्यमानस्याहमर्थ तदा विलयस्वीकारः भवन्मते क्रियमाणो न युक्त इति भाव्ये सुव्यक्तमि सुधीभि. सुविभाव्यमेतत् ।

किञ्च भवन्मते कथं ज्ञातुरप्रकाशः ? सुषुप्तौ अज्ञानसाक्षित्वेन अ स्माऽवतिष्ठत इति हि भवन्मतम् । साक्षित्वं च 'साक्षात् द्रष्टरि सञ्ज्ञाया मिति पाणिनिस्मरणात् द्रष्टृत्वरूपम् । एवं च ज्ञातृत्वे तदानीं क ज्ञातुरप्रकाशः ? न च(पु.१००)तदा साक्षित्वं इदमज्ञानमित्यज्ञानविषयक नुसन्धानरूपं न ; किं तु 'न किञ्चिदवेदिषमि' त्येवरूपमिति वाच्यम्— नह्येवंरूप साक्षित्वमित्यस्य एतदाकारकज्ञानवत्त्वरूपमित्येव ह्यर्थ. । त च कथं ज्ञातृत्वाभावः ? अज्ञानसाक्षित्वं नाम किञ्चिद्विषयकज्ञानाभाव इ चेत्—तदयुक्तम्—भावरूपमज्ञानं हि तथा साक्षित्वेयं भवदीयैरुच्यते , न ज्ञानसामान्यस्याभावोऽस्तीति । न चेदेव ; कथ भवन्मते न किञ्चिदवेदि षमित्येतद्दृष्टान्तद्भावरूपाज्ञानसिद्धिरिति भवानेव भावयतु । मुक्तावहमर्थ सत्त्वं तु प्रागेवोक्तम् । जीवन्मुक्तौ तु तद्विचारो व्यर्थः ; तस्या एव नभ्युपगमात् । 'हन्ताहमिमास्तिस्रो देवता' 'बहु स्याम्' इत्यादीश्वरीयाहं प्रहश्च आत्मन्यहंप्रत्ययस्य भ्रमरूपत्वेऽनुपपन्नः ; तस्य सर्वज्ञतया भ्रमाभावात् लोकसंग्रहार्थं आरोपितोऽयं ग्रह इत्यपि क्लिष्टम् । आरोपश्च न सम्भवी तस्येच्छाजन्यत्वात् । शुद्धचैतन्ये च भौतिकान्तःकरणराहित्ये इच्छाया एव प्रसक्तेरिति ।

अद्वयचक्षुरुद्धपरमस्ति न शास्त्रमेतन्नाक्षाद्बलीय उभयन्नु दोषमूलम् ।
नासत्यतो भवति जात्वपि सत्यलाभो ब्राह्म कथन्न तव शून्यधियाऽप्रबुद्धे ॥

जगन्मिथ्यात्वे च शास्त्रस्यापि मिथ्यात्वात् न शास्त्रप्रमाणक ब्रह्म भवेत् । न च 'असत्ये वर्त्मनि स्थित्वा तत सत्य समीहते' इति न्यायेन वत्सल शास्त्रमसन्मार्गगामिनो जीवान् असत्य एव स्थित्वा सत्यं प्रत्यानयतीति (पु १०२-१०३) वाच्यम्–जीवा एव तादृशा असत्या ; असन्मार्गश्चा-सत्य ; तत्र गमन चासत्यम् ; तत् कुत्र वात्सल्यम् ? केषा प्रत्यानयन-मिति विचित्रमेतत् । बन्धो मिथ्या तत्प्रतीतिरपि मिथ्या जीवभेदश्च मिथ्येति जानन्नेव कश्चिदद्वैत प्रतिपिपादयिषति । प्रबन्धान् प्रणिनीषति । परमत चिखण्डयिषतीति सर्वथा न युज्यते । स्वस्याद्वैतज्ञानेन बन्धाभावेऽपि अन्यस्य तदभावे मुक्तिर्न भवतीति तदर्थमुपदेश इति चेत्–इदमेकजीववादे व्यर्थमेव । तदेव भवदिष्टम् । अनेकजीववादे अन्यस्य बन्धो मिथ्येति जानन् प्राज्ञ कथममुक्त तमाकलय्य तत्त्वज्ञापने प्रवर्तेत ? अत ईश्वरोऽपि तत्त्वज्ञश्चेत्, न शास्त्र प्रवर्तयितुमर्हति । अतत्त्वज्ञश्चेत्–न तत्त्वविषये तत्प्रवर्तित शास्त्र प्रमाणमिति । एव च शास्त्रस्य तत्त्वज्ञानात् पश्चात् वैय-र्थ्येऽपि न क्षतिरितीदमयुक्तम्–पूर्वमपि वैयर्थ्यस्योपपादितत्वात् ।

किं च शास्त्रमद्वैत न प्रमापयति , असत्यत्वात् । आमोक्षलाभ शास्त्र प्रमाणमिति चेत्–तावत् प्रत्यक्षमपि प्रमाणमेवेति तद्विरुद्धमभेद कथ शास्त्र बोधयतु । शास्त्रमसम्भावितदोषकत्वात् प्रबलमिति चेत्– कोऽय दोष , यस्तत्र न सम्भाव्यते । भ्रमप्रमादादिरिति चेत्–एव प्रत्यक्षेऽपि इन्द्रियदोषादेरसम्भावितत्वात् प्रामाण्य तुल्यमेव । अनाद्यविद्यारूपदोष मूलत्व प्रत्यक्षप्रमाणस्येति चेत्–तदिद शास्त्रस्याप्यविशिष्टम् । एवमनादि-भेदवासनादोष इति पक्षेऽपि द्रष्टव्यम् । अपि च भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निर्विशेषबोधित्वनिश्चय । शास्त्रस्य निर्विशेषपरत्वनिश्चये

सत्येव भेदवासनाया दोषत्वनिश्चय इति अन्योन्याश्रयापादानमप्रकम्प्यम् । अनुपपन्नमेव तत्परिहारहेतुं केवल'मेतेन तदप्यसङ्गत'मिति कथनमफलम् । न केवलं भेदवासना प्रत्यक्षमूला, 'यः सर्वज्ञः सर्ववि'दित्यादिशास्त्रमूला च । न च 'अन्नं ब्रह्मेति व्यजानात्' इत्यादौ अब्रह्मणि ब्रह्मत्वारोपवत् स्थूलारुन्धतीन्यायेन निर्गुणब्रह्मनिरूपणाय सगुणब्रह्मनिरूपणमिति वाच्यम्—यत्र ह्यवगतचरं वस्तु ज्ञापनीयवस्तुत्वेनारोप्यते, तत्र स्थूलारुन्धतीन्यायो भवितुमर्हति । न च प्रकृतिमहदादिक्रमेण सृष्ट्यादिहेतुः सर्वज्ञः [illegible]यसङ्कल्पः निमित्तोपादानभूतो विलक्षणो देवताविशेष ईदृशः शास्त्रमन्तरेणावगतोऽस्ति । तत्तादृशमेकं परिकल्प्य तत्र निर्गुणब्रह्मत्वमारोप्य तत्तत्त्वकथनमित्यत्यन्तानुपपन्नम् । ततो वरं सगुणब्रह्मणोऽपि शब्देनैवावगन्तव्यत्वात् तद्वर्जनेन निर्गुणशब्दस्यैव पूर्वं निर्देशः । एवं चारोपितगुणनिषेधविस्तारोऽपि न भविष्यतीति लाघवम् ।

न च निर्गुणशास्त्रस्य गुणरूपप्रतियोगिज्ञानाय सगुणशास्त्रापेक्षया आवश्यकत्वात् परत्वात् प्राबल्यम्, सगुणशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यात् । अत एव हि, 'नानुयाजेष्वि'त्यत्र प्रतिषेधस्वीकारे 'यजतिषु येयजामहं करोती'ति शास्त्रस्य प्रतियोगिसमर्पणार्थमुपजीव्यत्वात् नाप्रामाण्यकल्पनं युक्तमिति शास्त्रद्वयस्यापि प्रमाणत्वाविशेषात् अनुयाजेषु येयजामहविकल्पस्स्यादिति प्रतिषेधपरित्यागेनानुयाजभिन्नेषु येयजामहं करोतीति पर्युदासो वार्तिककृद्भिर्वर्णितः । न च वैकल्पिकत्वमप्यत्र निर्गुणत्वप्रसक्तेः ; वस्तुनि विकल्पायोगात् । कथमुभयोः प्रामाण्यं रक्ष्यमिति चेत् मिथो विरुद्धार्थपरत्वे हि प्रामाण्यवर्णने क्लेशः, अविरुद्धानुकूलार्थपरत्वेन प्रामाण्यमेव वयं वर्णयाम इति न निर्गुणादिशब्देषु विरुद्धार्थस्वीकारो युक्त इति । अत्र उपक्रमाधिकरणन्याय एव प्रवर्तते ; न परप्राबल्यपरः अपच्छेदाधिकरणन्याय इत्यपि श्रुतप्रकाशिकादौ विस्तरेणानुसन्धेयम् । एवं च 'अभे-

दशास्त्रं स्वयमभेदप्रतिपादनाय यावान् भेदः अपेक्षितः तावतो भेदादन्येष भेदानां निवर्तकंसत् तावन्तमपि भेदं निवर्तयति कलुषजले कतकमिः मालिन्येन सह स्वकीयमपि रज इत्यपास्तम्; अपेक्षितभेदातिरिक्तभेदमात्र निवृत्त्यवगाहिना शाब्दबोधेनापेक्षितभेदनिवृत्त्ययोगात्। अभेदशास्त्रत्वेन भवदभिमतस्य भेदविरोध्यर्थप्रतिपादकत्वस्यैवाभावाच्च। घटपटादिप्रत्यक्ष-प्रतीतिः दोषमूला प्रत्यक्षप्रतीतित्वात् रज्जुसर्पादिप्रतीतिवदित्यनुमानेन सर्व-प्रत्यक्षेष्वनाश्वास इति चेत्-न, बाधितत्वस्योपाधित्वात् एवमेव हि जागरित-प्रत्ययो निरालम्बनः प्रत्ययत्वात् स्वाप्नप्रत्ययवदिति वदन् बौद्धो निरस्तः। किञ्चैवमभेदपरश्रुतिजन्यप्रतीतिरपि दोषमूला; प्रतीतित्वात्; भेदपरश्रुतिजन्य-प्रतीतिवत् रज्जुसर्पादिप्रतीतिवच्चेति किं न भविष्यति? एवमेव विवादाध्या-सित ब्रह्म मिथ्या, अविद्यावदुत्पन्नज्ञानविषयत्वात्; असत्यहेतुजन्यज्ञानवि-षयत्वात् प्रपञ्चवदित्यादिभाष्यदर्शितान्यापादनानि द्रष्टव्यानि।

यत्तु-(पु १०४) चिदचितोः परमात्मशरीरत्वं प्रत्यक्षेणाननुभूत-त्वात् श्रुतिप्रतिपादितमपि कथं विश्वसनीयमिति, तदपि न-अननुभूतमेव हि शास्त्रं प्रतिपादयति। 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात्। न च तावता तत्राविश्वासः, प्रत्यक्षविरोधित्वाभावात्। अभेदस्तु भवदुक्त प्रत्य-क्षानुभूतभेदविरुद्ध इति न स शास्त्रार्थः।

यत्तु-असत्यहेतुजन्यज्ञानविषयोऽपि सत्यं भवतीति तत् गगनकुसुम-प्रदर्शनमेव। असत्यात् स्वाप्नात् हस्त्यादिज्ञानात् परमार्थशुभाशुभप्रतिपत्ति रस्तीति चेन्न- तत्र हेतुभूतं हस्त्यादिज्ञानमपि हि सत्यमेव। जागरेऽभा-वादसत्यमिति चेन्न-किञ्चित्कालसत्त्वमात्रेणैव सत्यत्वसम्पत्तेः। अन्यथा शुभाशुभप्रतिपत्तिः शुभाशुभादिकमप्यसत्यमापतेत् कादाचित्कत्वात्। अतो भवदुक्तमनुपपन्नमेव। यत्तु स्वाप्नज्ञानं स्मरणात्मकमिति- तत् आग-न्तुकनिद्रादोषाधीनप्राविभासिकस्वाप्नरथादिसृष्टितत्प्रत्यक्षनिरूपकपरिभाषोक्त-

मतसिद्धान्तविरुद्धम् । अतो भवन्मतेऽपि स्वाप्नज्ञानं प्रत्यक्षमेव । न हि प्रबुद्ध 'स्वप्ने ज्ञानं मे नासी'दिति प्रत्येतीति तत् सत्यमेव । अत एव भामत्यामप्युक्तम्; यथा 'दर्शनं सूचकम् । तच्च स्वरूपेण सत् । असत्तु दृश्यम् । अत एव स्वप्नदर्शनस्वरूपसाध्या .. जाग्रदवस्थायामनुवर्तन्ते' इति । अत्र जाग्रदवस्थावस्थितत्वेन सत्यभूतस्य दर्शनसाध्यत्वात् दर्शनं सत्यमिति ब्रुवन् वाचस्पतिमिश्रः सत्यादेव सत्योत्पत्तिमाकल्पयतीति स्पष्टम् ।

एतेन दर्शनस्य स्वरूपसतोऽपि असत्यभूतस्वाप्नविषयकत्वविशिष्टत्वेन जनकत्वात् असत्यमेव जनकमिति कुमतिरपि हेया । अत्रैव दर्शनस्य सत्यस्यासदालम्बनत्वस्यासद्विषयकस्वरूपस्य भामत्यामुक्तत्वात् 'बुद्धीनां सालम्बनत्वमात्रनियमा'दिति भाष्यमपि अबाधितार्थमिति तत्र त्वया क्रियमाणो विचारविस्तरः सर्वथोपेक्ष्य एव । एवं भामत्यादिसंवादप्रदर्शनार्थमेव उपर्युपपादकभाष्यम्, 'अर्थस्य प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षित'मिति । अत्र प्रतिभासमानत्वमालम्बनत्वं च शोधनं एकमेव । अतश्च आलम्बमानमिति व्यवहर्तव्यत्वे प्रतिभासमानत्वमेवापेक्षितम् । न तु ज्ञानजनकत्वमपि । भूतभाव्यालम्बने तदनुपपत्तेः । तथा च प्रतिभासमानत्वमेव विषयत्वमिति भाष्यार्थः । अथ वा यत्र क्वापि यदाकदाचिद्भासमानत्वमेव प्रवृत्तबुद्धि प्रत्यालम्बनत्वेऽपेक्षितम् । तथा च शशविषाणवत् यत् निरुपाख्यं न भवति, कालान्तरे देशान्तरे वा विशकलितरूपेण वा सत्यभूतम्, तत् ज्ञाने विषयीभवतीति भाष्यार्थः । न च तदानीमवर्तमानात् कथं सत्या बुद्धिरुदेतीति शक्यम्–विषयस्य ज्ञानजनकत्वाभावात्, भूतभाव्यादिविषयेऽपि ज्ञानदर्शनात् । तथा च स्वाप्निकाः पदार्था विशिष्टरूपेणासन्तोऽपि विशकलितरूपेण सत्याः अन्यथाख्यातिसामग्रीबलात् तदा तथा प्रतीयन्ते । यथार्थख्यातिपक्षे च भेदाग्रहोऽपि न दुर्ग्रहः । सर्वमिद

सर्वेष्वपि भ्रमेषु द्रष्टव्यम् । ननु 'स [illegible] बाधितोऽसत्य इत्यवसीयते' इत्युक्ति सत्ख्यातिवादिमते न सङ्गच्छत इति चेन्न—स्वाभिकाद्यर्थाना मसत्यत्वानिरोधेनैवात्र प्रकरणे विचारस्य प्रवृत्तत्वेनासङ्गत्यभावात् । वस्तुत सत्ख्यातिवादिनाऽपि असत्य बाधितमित्यादि व्यवहारस्य लोकप्रसिद्धस्य निर्वाह समुचित क्रियत एवेति तदनुसारेणापीद भाष्य सूपपन्नमिति न कश्चिद्दोष । विषयासत्यत्वेऽपि ज्ञानासत्यत्व नास्तीत्यत्रैव निर्भरो भाष्य क्रमामित्यपि यथावत्परिशील्यता सुगमम् ।

यत्तु–(पु १०६) रेखातो वर्णबुद्धेरुत्पत्तिरित्यत्र अमत्यात् सत्य प्रतिपत्तिर्न भवतीति दूषणमयुक्तम्, न हि दृष्टेऽनुपपन्न नामेति न्यायेन प्रत्य क्षदृष्टनिषेधायोगात्, असत्यान्नैव जायत इति निषेधे प्रमाणाभावाच्चेति तत्रोच्यते–रेखावर्णबुद्ध्यादिस्थल सर्वं हि सप्रति विवादविषयीभूतम् । अन्यत्र सत एव मृदादे सतो घटादेरुत्पत्तिर्दृश्यते । असतो निरुपाख्याच्च न किञ्चिज्जायत इत्येवमन्वयव्यतिरेकावेवासत्यात् सत्योत्पत्तिनिषधे प्रमाणम् । न च शशशृङ्गादेरपि शशशृङ्गादिबुद्धिरुत्पद्यत इति साहस युक्तम्–तथा सति तस्यार्थक्रियाकारित्वरूपसत्त्वाश्रयत्वेनासत्यत्वस्यैवासम्भवात् । एव प्रत्यक्ष रेखादेर्वर्णबुद्धिजननमित्यपि न युज्यते, अगृहीतसङ्केताना रेखादर्श नेऽपि वर्णबुद्ध्यभावात् । रेखाया रेखात्वेन न कारणत्वम्, किं तु वर्णा त्मतयेति चेत् किमिद वर्णात्मत्वम्, साक्षाद्वर्णतादात्म्यस्य बाधितत्वात् । वर्णतया गृह्यमाणत्व वर्णात्मत्वमिति चेत्—वर्णतया ग्रहे किं कारणम् ? न हि सादृश्यादिज्ञानमन्तर किञ्चित् केनचिद्रूपेण गृह्यत । न च पत्र गतरेखाया गगनगुणस्य च शब्दस्य भिन्नेन्द्रियग्राह्ययो किञ्चित्सादृश्य विशिष्यास्ति । तस्माद्रेखावर्णयोरेकग्रहणेऽपरग्रहण शिक्षावशेन सङ्केतग्र हणादेव भवतीति भाष्य सङ्केतग्रहस्य कारणत्वमुक्त युक्तमेव । अन्यथा वर्णा त्मतया बुद्धि वर्णबुद्धिहेतुरित्युक्तो आत्माश्रय इत्यपि भाष्य एव स्पष्टम् ।

सर्वथा तावत् रेखा स्वरूपसती न कारणम् । अनुपलब्धरेखाणां पुंसामपि वर्णबुद्धिप्रसङ्गात् । रेखासन्निकर्षमात्रमपि न कारणम्; अगृहीतसङ्केतानामपि प्रसङ्गात् । अतो रेखासन्निकर्षे, तद्ग्रहणम्, ततः सङ्केतस्मरणम्, ततो वर्णबुद्धिरिति तत्त्वम् । तत्र च न किञ्चिदसत्यम्; रेखाया रेखात्वेन सत्यत्वात्, तथैव तस्याः पूर्वं गृह्यमाणत्वात् ।

यत्तु—वर्णविशेषसङ्केतो रेखाविशेषे इत्यङ्गीकारेऽपि रेखावर्णयोस्तादात्म्यसिद्धिरेव; 'वृद्धिरादैच्' इति वाचकवाच्ययोः सामानाधिकरण्यनिर्देशेन शब्दार्थतादात्म्यारोपस्य स्वीकार्यत्वात् इति—तत्केवलं व्याकरणवासनाविजृम्भणविहितम्; व्यवहारे भाट्टनयस्यैव भवद्भिरादरणात् । वैयाकरणमतस्य भवता स्वीकारे च तन्निराकरणेनैव भवानपि निराकृत इति न किञ्चिदुक्तव्यमवशिष्यते । किञ्च तादात्म्यारोपमात्रात्तस्य न सिद्ध्यति । 'वृद्धिरादैच्' इत्यत्र च वृद्धिपदस्य वृद्धिशब्दे लक्षणां स्वीकृत्य तादात्म्यारोपकल्पनापेक्षया वृद्धिशब्दवाच्ये लक्षणां स्वीकृत्य वास्तवतादात्म्यवर्णनं युक्तम् । अपि च रेखायां ककारत्वाद्यारोपस्वीकारेऽपि पूर्वगृहीतारोपितत्वाद्यसम्भवात् रेखादर्शनाद्वर्णस्मरणमिति नासत्यात् सत्यसिद्धिः ।

एवं रेखागवयस्थलेऽपि प्रथमतः रेखाग्रहणम्, ततस्तद्गतदीर्घत्वह्रस्वत्वग्राहकान्तरालादिदर्शनेन तत्तुल्यदैर्घ्यादिशालिवास्तवगवयपिण्डस्मरणमिति कथमसत्यात्सत्यप्रतिपत्तिः ।

ननु (पृ १०७) सत्यादेव सत्योत्पत्तिरित्यस्तु । शास्त्रमपि सत्यमेव; गगनकुसुमवदसत्यत्वाभावादिति चेत्—कुतो गगनकुसुमवैलक्षण्यम् । गगनकुसुमं न प्रतीयते, इदं तु प्रतीयत इति चेन्न—तस्यापि गगनकुसुमशब्दात्प्रतीयमानत्वात् । प्रतीयमानत्वाभावे बाध्यमानत्वस्याप्यसम्भवात् । प्रतियोगिग्रहणपूर्वको हि निषेधः । प्रत्यक्षेणागृह्यमाणत्वात् गगनकुसुममसत्यमिति चेन्न—धर्माधर्मस्वर्गनरकेश्वरादेरप्रत्यक्षस्य गगनकुसुमायमानत्वप्रस-

ङ्गात् । दूरतो गुल्मे शशं तच्छिरसि लग्नं शाखाखण्डं च पश्यतः शशशृङ्गमिदमिति भ्राम्यतः प्रत्यक्षदर्शनाच्च । तच्च पश्चात् बाध्यत इति चेत्—शास्त्रमपि पश्चात् बाध्यत एव । इदानीं न बाध्यत इति सत्यमिति चेत्—शशशृङ्गदर्शनमपि तदानीं न बाध्यत इति तुल्यम् ।

अर्थक्रियाकारित्वाच्छास्त्रं सत्यमिति चेत्—तर्हि तत एव हेतोरबाध्यमपि । यदि पश्चाद्बाध्येत, तर्ह्यसत्यमिति तस्यार्थक्रियाकारित्वमपि न स्वीकार्यम् । अपि चेदमर्थक्रियाकारित्वज्ञानमपि भ्रम एव । न च शशशृङ्गादौ भ्रमात्मकमपि तन्नास्तीति वाच्यम्—शशशिरस्संपृक्तशाखासलग्नशोणप्रसूनदर्शिना शशशृङ्गं शोणितं स्रावयतीति बुद्धेस्सम्भवेनार्थक्रियाकारित्वज्ञानस्याक्षतेः ।

तस्माच्छास्त्रस्यासत्यत्वे तज्जन्यं ज्ञानं, तद्विषयीभूतं ब्रह्म चासत्यमेव स्यात् । न च विषयासत्यत्वेऽपि ज्ञानस्य सत्यत्वं प्रागुपवर्ण्य सम्प्रति शास्त्रजन्यं ज्ञानं मिथ्येति कथमुच्यत इति वाच्यम्—वैषम्यात् । विषयत्वमसत्यस्याप्यभ्युपगम्य ज्ञानसत्यत्वं प्रागुक्तम् । असत्यात्सत्योत्पत्तिश्च खण्डिता । एवं च शास्त्रस्य ज्ञानस्य च जन्यजनकभावस्य स्वदुक्तत्वेन जनकासत्ये जन्यमसत्यमेवेति निरूप्यते । तत्रापि यदि विषयजन्यत्वं ज्ञानस्य स्वीक्रियेत, तर्हि विषयासत्यत्वे ज्ञानासत्यत्वमेव स्यात् । अतो ज्ञाने विषयस्य जनकत्वाभावादेव तत्सत्यं सिद्धमिति ।

इदं तु पुनः शङ्कितुम्—शास्त्रज्ञानस्यैवार्थज्ञानजनकत्वात् शास्त्रमिथ्यात्वेऽपि तद्ज्ञानस्य सत्यत्वसम्भवात् नार्थज्ञानमसत्यमिति—अत्रेदं समाधानम्—शास्त्रजन्यस्य श्रोत्रेन्द्रियजन्यशब्दश्रवणरूपतया प्रत्यक्षे च विषयस्य कारणत्वेन शास्त्रज्ञानमिदं शास्त्रजन्यमित्येव वक्तव्यमिति सिद्धं ज्ञानस्याप्यसत्यत्वमिति । न चैवमपि ब्रह्मणो निर्विशेषत्वात् कथमतद्विषयत्वेन मिथ्यात्वमिति चेत्—हन्त भवान् ब्रह्म प्रमेयं तत्र शास्त्रं प्रमाणम् शास्त्रादसत्यात्

ात्याद्वा सत्यमूतं सत्यब्रह्मज्ञानमुत्पत्तुमर्हतीति निरूपणप्रकरण एव ब्रह्मणो वेपयत्वाभावमुपकल्पयन् अभिमतमर्थमतिरमणीय माधयति ।

न च शास्त्रस्य प्रामाण्य सोपाधिकब्रह्मज्ञानमुखेनैव । शास्त्र तज्ज न्यब्रह्मज्ञान च मि॰यामूतमपि मिथ्याभूताविद्यानिरासकम् । कण्टकमिव कण्टकोद्धारकम् । एतावतैव शास्त्रस्य प्रमाणत्वमिति वाच्यम्–विप्रतिषेधात् । प्रथमतोऽसत्यात्सत्योत्पत्तिरित्युपक्रान्तम् । तस्य खण्डने कृते शास्त्र सत्यमेवेत्युक्तम् । तदसत्यत्व च स्थाप्यते संप्रति असत्यादसत्यमेवो त्पद्यत । असत्यमव सोपाधिक ब्रह्म प्रतिपद्यते इत्युदार्यत इति ।

नन्वस्तु, मिथ्यात्वेऽपि कार्यसिद्धेरिति चत्र–असिद्ध । कण्टकोन्मूलन प्रति तीक्ष्णाग्र वस्तु कारणमिति कण्टकेनापि तद्भवति । न हि तदेव मिथ्याभूत पादप्रविष्टकण्टकोद्धारकम् । स्वाप्नकण्टकेन जागरित कण्टकोन्मूलनादर्शनात् । अतो न मिथ्याभूतात्कण्टकनिरसनम् । न च स्वाप्नकण्टक स्वाप्नकण्टकान्तरनिरासक एवेति वाच्यम्–निरासकत्वाभावात् । तत्र हि निरस्तत्वेन प्रतीतिमात्रम् । कण्टकतोदनस्यैव वस्तुतोऽसत्त्वेन निरसनासक्ते । तद्वदेवेहापि वस्तुतोऽविद्याया अभावात् । ब्रह्मज्ञानेनाविद्यानिरासबुद्धिमात्रमिति चेत्–एवमविद्यातत्कार्यमुक्तदु खादितन्निरासतद्बुद्ध्युपायादेर्मिथ्यात्व विविच्य विद्वान् कुतोऽनुमननश्रवणपरोपदेशप्रबन्ध निर्माणादौ प्रवर्तत इति पर्यालोचयतु भवान् । अन्येऽप्येव जानन्त्विति करुणया प्रयतत इति चेत् एव खलु विवेकिन , केऽन्ये , किं तेषा कष्टम् , कस्तस्य परिहार , किञ्च ज्ञानम् । न हि किञ्चित्सत्यमस्ति । एव यद्ब्रह्मशास्त्रप्रमाणक तन्मिथ्यासोपाधिकब्रह्म वादिति मवतैव स्वीकृतमिति 'तद्विषयस्यापि ब्रह्मणो मिथ्यात्व मिति भाष्यमवतरणीयमेव भवत । अथापि स्वयप्रकाश किञ्चिन्निर्विशेष ब्रह्म से स्तीति चेत तत् कि सर्वेषा स्वयप्रकाशमुत भवन्मात्रस्य उत स्वमात्रस्य । आद्ये त्वया वक्तव्य न

विशिष्टत् । द्वितीये तु निर्मूलम् । तृतीये त्वया मया च प्रमाणैकविज्ञयम् । प्रमाण तु सविशेषमेव प्रदर्शयतीति किं तेन ।

एव तावत् सर्वमिथ्यात्वे शास्त्रस्य तद्ज्ञानस्य च मिथ्यात्वात् तज्जन्य ब्रह्मज्ञानमपि मिथ्येति तद्विषयीभूत ब्रह्मापि मिथ्येतीममर्थं 'मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वे तद्विषयस्यापि ब्रह्मण मिथ्यात्व'मिति भाष्यात्प्रत्यपीपदाम। वस्तुतोऽयमर्थोऽत्र विवक्षित । ज्ञानस्य स्वरूपतो मिथ्यात्वमस्ति न वेत्यय विचार आस्ताम्। तथाऽपि शास्त्रस्य मिथ्यात्वे तद्विषयकज्ञानस्य मिथ्याविषयकत्वरूपमिथ्यात्वस्याक्षतत्वात् तज्जन्यस्य ब्रह्मज्ञानस्यापि मिथ्याविषयकत्वमावश्यकमिति तेन ब्रह्म मिथ्येति सिद्ध्यतीति । अत्र मिथ्याशब्दो हि वस्तुनि ज्ञाने वाक्ये च प्रयुज्यते । तत्र ज्ञानवाक्ययो मिथ्यार्थविषयकत्वनिबन्धनो मिथ्येतिप्रयोग । तत्र लोकप्रसिद्धिमनुरुध्यात्र ज्ञानस्य मिथ्यात्वेनोति भाषतम् । तथा च 'विषयासत्यत्वेऽपि ज्ञानसत्यत्वस्य भास्माधिततया तद्विरुद्धमिद'मिति भवच्छङ्का लोकप्रसिद्धिपूर्वापरसन्दर्भापरामर्शमूला । अत्रानुरूप दृष्टान्तमुपरि दर्शयति, 'यथा धूमबुद्ध्या गृहीतस्य बाष्पस्य मिथ्यात्वात् तद्ज्ञानस्य मिथ्याविषयकत्वरूपमिथ्यात्वसत्त्वात् तज्जन्यस्याग्निज्ञानस्यापि मिथ्यार्थविषयकत्वरूपमिथ्यात्वस्यावश्यकत्वेनाग्नेरपि मिथ्यात्वमिति । अतो न ज्ञानमिथ्यात्वनिरूपणशङ्काप्रसङ्ग , लोकदृष्टान्तस्यात्र प्रदर्शनात् । लोके वस्तुमिथ्यात्वातिरिक्तज्ञानासत्यत्वरूपमिथ्यात्वस्याप्रसिद्ध ।

एतेन इदमपि निरस्तम्—(पु १०८) अग्नेर्मिथ्यात्वेनाग्निज्ञानस्य मिथ्याविषयकत्वरूप मिथ्यात्वमिति वक्तव्य 'अग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्व'मिति भाषणमयुक्तमिति—ज्ञानस्य मिथ्यापदवाच्यत्वे विषयमिथ्यात्व प्रयोजकम् । एवञ्च ज्ञानस्य मिथ्यात्वे प्रकारान्तरेणानुमिते तेन विषयमिथ्यात्वस्य प्रयोजकस्यानुमान हि युक्तमेव । यत्र विषय

मिथ्यात्वं प्रागेव सिद्धम्, तत्र तेन ज्ञानमिथ्यात्वं निरूप्येत । यत्र तु विषयमिथ्यात्वमेव सिषाधयिषितम्, तत्र कथं तथोक्तिः? कारणदोषज्ञानं हि स्वजन्यज्ञानस्य मिथ्यात्वमनुमाप्य तद्द्वारा विषयमिथ्यात्वमनुमापयति । अत एवमेव प्रकृते वक्तव्यम्, 'असद्विषयकज्ञानं स्वजन्यज्ञानस्य मिथ्यात्वमनुमाप्य विषयमिथ्यात्वं साधयती'ति । एवं ज्ञानमिथ्यात्वेन विषयमिथ्यात्वानुमाने च त्वदुक्त एव हेतुः-यत्, वस्तुनो ज्ञानस्य सत्यत्वात् तस्य मिथ्यात्वं विषयमादायैव निरूपणीयमिति । अत्र 'अनुमाया ज्ञायमानं लिङ्गं तु करणं न ही'ति नवीनतार्किकमतावलम्बनेन 'धूमबुद्ध्या गृहीतयाऽव्यजन्याग्नि-ज्ञानस्ये'ति भाष्यखण्डनमयुक्तम् । गृहीतव्याप्तिजन्येत्यस्य व्याप्तिग्रहजन्येति तात्पर्यसम्भवेनोत्तरीत्या भवन्मतदूषणस्य दृढमेव स्थितत्वात् । अतो न किञ्चिदसङ्गतम् ।

न च पश्चात्तनबाधेनैवाग्नेरसत्यत्वप्रतीतिरिति वाच्यम् । बाधज्ञानस्येव कारणदोषज्ञानस्यापि विषयमिथ्यात्वसाधकत्वात्, दुष्टेन्द्रियजन्यज्ञानस्य मिथ्याविषयकताया अनुभवसिद्धत्वात् । यद्यपि कश्चिद्धाष्ट्येनानुमीयमानोऽप्यग्निरबाधितो भवति । अथापि मिथ्याविषयकज्ञानमात्रजन्यं यद्विषयकं ज्ञानम्, न तु प्रमाणान्तराधीनं तद्ज्ञानं कदापि, तस्य मिथ्यात्वं निर्णीयत एवेति प्रकृतस्य ब्रह्मणो मिथ्याभूतशास्त्रैकावमेयस्य मिथ्यात्वं निराबाधम् ।

उपरि च 'पश्चात्तनबाधादर्शनं चासिद्धम्,-शून्यमेव तत्त्वमिति वचनेन बाधदर्शना'दित्यप्ययुक्तम् । ननु इदं वाक्यं नापौरुषेयम् । पौरुषेयं तु श्रुतिमूलकमेव प्रमाणमिति जैमिनिः । तत्कथमप्रमाणेन वाक्येन बाध इति चेत्--श्रूयताम् । सत्यं जैमिनिः श्रुतिमूलमेव पौरुषेयं प्रमाणमाह । तच्च प्रमाणान्तराप्राप्तविषये ; न सर्वत्र । किं च श्रुतेः प्रमाणत्वं येन स्वीक्रियते तेन हि श्रुतिमूलकतयाऽन्यस्य प्रामाण्यं सुवचम्, यथा जैमिनिना । भवन्मते तु श्रुतिरेवाप्रमाणम् । अतश्चाप्रमाणत्वाविशेषे उभयमबाधकम् ।

अथापि श्रुते बाधकत्वे शून्यवाक्यमपि बाधकमेव। अपि च त्वया कण्टकेन कण्टकनिरसनवत् मिथ्याभूतेन मिथ्यानिवृत्तिरुक्ता। तथा च शून्यवाक्यार्थज्ञानेन ब्रह्मास्तित्वज्ञाननिवृत्तिरेवेति। न च शून्यमिति विशेषरूप सामान्यरूप वा ? आद्ये विशेषस्य सामान्यपूर्वकत्वात् सामान्यभूतब्रह्मवस्तुसिद्धिरप्रकम्प्या। नान्त्य, तस्यैव ब्रह्मत्वात्। नाममात्रे विवादादिति विकल्पम्—एकमभावमात्मसात्कुर्वत मति सामान्य वा विशेषो वेति प्रश्नस्यैवायुक्तत्वात्। विशेष सामान्यमिति हि अनेकपदार्थाभ्युपगन्तृमतेऽस्ति। तन्मते तु न किञ्चिदिति। किन्त्वभाव एव विविधजगद्रूपेण सवृतो भवतीति बौद्धाना मतम्। तथा च यदि सामान्यरूपत्व तत्र पर्यालोच्य नाममात्र एव विवाद इत्युच्यते, तर्हि बौद्धमतमेव मायिमतमिति भवतैव भङ्ग्यन्तरेणोक्त भवति। यत्त्वीदृश वाक्यत्व मास्त्विति भिया भवता पश्चादुक्तम्, नाभावस्तत्त्वम्, यदस्ति तत्रैव तत्त्वशब्दप्रयोगौचित्यात्। शून्य अस्तीत्युच्यते चेत्—भावरूपत्वमेवेति तत् न वाक्तव मायिमत विवेचितवद्भिर्वक्तु शक्यम्। 'सत्य ज्ञानमनन्त ब्रह्म' त्यत्र हि निर्विशेषे भावरूपोऽभावरूपो वा धर्मो मा भूदिति अनृतजडपरिच्छिन्नाभाव एव ब्रह्मेति वर्णितम्। एवमभावस्य ब्रह्मण कथ तत्त्वपदवाच्यतेति। न च सत्ता नाम काचित् तत्रास्ति। आरोपितव्यवहारस्तु शून्येऽप्यक्षत। एव नित्य वज्ञानत्वानन्दत्वादिभि बौद्धमतवैलक्षण्यवर्णनमपि स्युदस्त वेदितव्यम्। कालपरिच्छिन्नत्वाभावरूप नित्यत्व, परप्रकाश्यत्वाभावरूप स्वप्रकाशत्वात्मकज्ञानत्व, दुःखाभावात्मकमानन्दत्वमित्येव सर्वस्याभावरूपताया ब्रह्मरूपतायाश्च स्वीकारात्। तस्मात् कथमभावस्तत्त्वं इति भवता प्रष्टु न शक्यम्। परान्ते च भवतो बौद्धस्य च मते विशेष कोऽपि नास्तीति विशद वर्णयद्भि श्रीभास्कराचार्यप्रभृतिभि सर्वैरप्युक्तेति अलमधिकेन।

किञ्च यथा भवता सर्वं ब्रह्मेतिवाक्यस्य बाधार्थसामानाधिकरण्यग्रहेण निर्वाह तथा शून्यमेव तत्त्वमिति वाक्यस्यापि यत्तत्त्वं ब्रह्मादि तच्छून्यमेवेति तथैव निर्वाह इत्यपि सुवचम् । न च भवद्भिरपि भावरूपत्वं किञ्चिदधिकमिष्यते , न च तैरभावरूपत्व किञ्चिदिति वस्तुतो निर्विशेष वस्त्विदुभयमपि मत निर्विशेषमेव । न च शून्यमेव तत्त्वमिति वाक्यं स्वेनैव स्वय बाधितमिति वाच्यम्--'सर्वं मिथ्या,' 'सर्वं खल्विद ब्रह्मे'ति वाक्यस्यापि स्वेनैव स्वय बाधितत्वात् । यथा 'सर्वं खल्विदं ब्रह्मे'ति वाक्यस्य ज्ञानजननकाले बाधाभाव , तथा शून्यवाक्यस्यापि शाब्दबोधोपजननकाले बाधाभाव एव । अतस्तत्कालेऽपि तद्बाधितमिति कथनमसङ्गतमेव । यदि च शून्यमेव तत्त्वमिति वाक्यस्य स्वबाधकत्वादप्रमाणत्वम् , तर्हि 'नेह नानाऽस्ति किञ्चने'ति वाक्यमपि स्वबाधकत्वादप्रमाणमेव भवेत् । न चेद वाक्यं कस्यचिदपि न बाधकम् , किं तु यद्दृश्यते, तत् आत्मभिन्न नास्ति आत्मन्येव प्रतिभासत इति प्रातिभासिकत्वबोधकमिति (पु. १०९) वाच्यम्--नञ्घटितवाक्यस्यास्य नास्तीति बोधकस्याबाधकत्वासम्भवात् । आत्मनि सर्वं प्रतीयत इत्यस्य विषयस्य एतद्वाक्यशब्दार्थत्वाभावाच । यत् स्वबाधकस्याप्यस्य 'नेह नाने'ति वाक्यस्य इतरबाधकत्वमपि सम्भवतीत्युच्यते तत् शून्यवाक्येऽपि तुल्यमेव । यत्तु भवता शून्यवाक्यस्य स्वबाधकत्वस्वीकारे आत्माश्रयदोष इत्याशक्य सरम्भेण तदभावोपपादनम् , तत् आत्माश्रयदोषस्यास्माभिरनुद्भावितत्वात् अनुक्तोपालम्भमात्रम् ।

यत्तु विवेचित--यत्र वाक्यार्थोपयोगिनी वाक्यप्रवृत्ति तत्रात्माश्रय । यथा 'अणुदित्सवर्णस्य चाप्रत्यय ' इति सूत्रे । यत्र त्वन्यत् किञ्चिद्बोधयितु प्रवृत्ति । न तु वाक्यार्थोपयोगिनी । तत्रात्मग्रहणेऽप्यात्माश्रयो न भवति । यथा 'ससजुषो रु ' इत्यादाविति । तत्र किञ्चित् सूक्ष्म

विवेचनीयम्—सर्वत्र वाक्यप्रवृत्तिः वाक्यार्थोपयोगिन्येव भवतीति कचिद्-न्यर्थप्रवृत्तिवर्णनं तावदशक्यम्। तस्मान्नायं विवक्षितार्थाविष्करणप्रकारः। तदेवमुच्यताम् । उद्देश्यविधेयभावेनार्थप्रतिपादके वाक्ये प्रकृतवाक्यार्थ-ज्ञानात् पूर्वं उद्देश्यवाचकपदेन यावत् ग्रहीतुं शक्यते , तावदुद्देशेनैव प्रकृतवाक्येन किञ्चिद्विधातुं शक्यते । न त्वज्ञातोद्देशेन । अतश्चाणुदित्सूत्रे अण् इत्यस्य सवर्णग्राहकत्वविधानात् एतद्विधे प्राक् सवर्णग्राहकत्वस्यासिद्धत्वात् अण् इत्युद्देश्यवाचकं पदम् । 'आदिरन्त्येन सहेता' इति प्रत्याहारकार्यविधिबलेन अक्षरसमाम्नायश्रुतवर्णमात्रग्राहकं भवतीति तावदुद्देशेनैव सवर्णग्राहकत्वविधानात् आकारादीनां सवर्णग्राहकत्व ग्रहणकशास्त्रतो न सिद्ध्यति । तत्सिध्यङ्गीकारे चात्माश्रय । 'ससजुषोरु' इत्यत्र तु वाक्यार्थज्ञानात्प्रागेव 'रुस्' इति पदान्तसकारस्य सकारत्वेन ग्रहणसम्भवात् तत्रापि रुस्घटकसकारे रुत्वविधिर्भवितुमर्हतीति नात्माश्रय इति ।

एवमेव स्वाध्यायोऽध्येतव्य इत्यत्र स्वाध्यायत्वेन रूपेण प्रकृतवाक्यमपि गृह्यते । सामान्यरूपेण विशेषग्रहणकाले चाविशेषात् स्वस्वरूपमपि गृह्यत एव । यथा शब्द इति शब्देन इतरशब्दग्रहणवत् स्वात्मनोऽपि ग्रहणम् । अतः सर्वशून्यमित्युक्तौ सर्वत्वेन प्रकृतवाक्यमपि सुग्रहमेवेति न वयं तं निषेधाम । नन्वेवं सर्वं शून्यमिति वाक्येन सर्वत्वेन शून्यतत्त्वस्यापि गृहीतत्वात् तस्य शून्यत्वकथनेन तदभावसिद्धौ अन्यस्य सत्त्वप्रसङ्ग इति कथमिदं जगद्बाधकमिति चेत्—तर्हि 'नेह नानास्ति किञ्चने'ति वाक्यस्य किञ्चित्त्वेन स्वात्मग्राहित्वात् वाक्यस्यैवाभावे सिद्धे तन्मिथ्यात्वे प्रमाणस्य कस्यचिदभावात् सर्वाभावो न प्रामाणिक इत्यपि वक्तुं शक्यम् । अन्यश्च विशेषः—सर्वं शून्य इति वाक्यार्थज्ञानात् प्राक् शून्यतत्त्वस्यागृहीतत्वात् सर्वपदेन शून्यतत्त्वग्रहणं श्रोतुर्न भवितुमर्हति । 'नेह नानास्ति किञ्चने'ति वाक्यश्रवणसमनन्तरं किञ्चन पदेन तद्वाक्यस्यापि ग्रहणं तु सुतरां भवत्येव ।

एवंरीत्या सर्वं शून्यमिति वाक्येऽपि सर्वं शून्यमिति वाक्यस्यापि सर्वपदेन ग्रहणसम्भवात् तस्यापि निषेधे कृते प्रमाणाभावात् शून्यतत्त्वासिद्धिरितीदं नु शक्यं वक्तुम् । तथा च 'नेह नाने'ति वाक्यमपि अप्रमाणं न जगदभावं साधयेत् । अतो नेहेति वाक्यस्येव शून्यमेव तत्त्वमिति वाक्यस्यापि 'जगदस्ति । अस्ति ब्रह्म'इति वाक्यार्थनिषेधकत्वात् प्रामाण्यस्य चाविशिष्टत्वात् शास्त्रमिथ्यात्वे ब्रह्मणोऽप्यसिद्धिरेव स्यादिति ॥

---

सर्वथा श्रुतयः सर्वाः सविशेषे परे स्थिताः ।
सामानाधिकरण्यं च न निमित्तभिदां विना ॥

'सदेव सोम्येदम्' 'अथ परा यया' 'सत्यं ज्ञान' इत्यादिश्रुतीनां निर्विशेषपरत्वं न सम्भवतीति विशदमभापि । तत्र यदुच्यते सदित्यनेन सत्तामात्रं निर्विशेषं किञ्चिदुच्यते (पृ. ११०) इति तन्न । सच्छब्दस्य सत्ताविशिष्टवाचितया सत्तामात्रार्थकत्वासम्भवात् । एवमग्रे आसीदिति कालविशेषसम्बन्धबोधनात् न निर्विशेषसिद्धिः । अत्र आसीदिति सृष्टिप्रागवस्थोच्यत इति लिखता भवतैव अवस्थाविशिष्टपरत्वमुक्तमिति कथं निर्विशेषसिद्धिः । एवं ब्रह्मणः साक्षात् जगदुपादानत्वाङ्गीकारे निर्विकारत्वश्रुतिविरोध इति तच्छ्रुतिबलात् साक्षादुपादानकारणमेकं प्रधानाख्यमाक्षिप्यते । तद्विशिष्टमेव तु ब्रह्म उपादानकारणमिति अस्मत्पक्षं निरसितुं यद्भवतोक्तम् (पृ. १११)–'परिणाम्युपादानत्वे निर्विकारत्वश्रुतिविरोधेऽपि विवर्तोपादानत्वे दोषाभावात् सदादिशब्दानां प्रधानविशिष्टपरतया गौणोपादानत्वकल्पनं न युक्त'मिति–तत्र–विवर्तोपादानत्वे हि किं वृश्चिकं प्रति गोमयस्येव जगत्प्रति ब्रह्मणः ; किं वा रज्ज्वाः प्रातिभासिकसर्पं प्रतीवेति । नाद्यः ; तर्हि गोमयस्येव वृश्चिकत्वरूपविषमावस्थापत्त्वेन तद्वदिह स्वीकारे निर्विकारत्वश्रुतिविरोधापरिहारात् । न च विकाराणां अपारमार्थिक-

स्वात् न दोष इति शङ्क्यम् । तर्हि परिणाम्युपादानत्वस्यैव ब्रह्मणि स्वीकारसम्भवेन तन्निषेधायोगात् ; अपसिद्धान्ताच्च । नान्त्यः ; प्रातिभासिकपदार्थस्य प्रागेव निरासेन तादृशविवर्तोपादानत्वासिद्धेः । न च अस्मन्मते गौणं ब्रह्मण्युपादानत्वम् ; प्रागवस्थाविशिष्टत्वस्यैव उपादानपदार्थतया तस्य विशेषण इव विशेष्येऽपि निराबाधं स्थितेः भाष्य एव प्रपञ्चितत्वात् ।

यत्तु सदेवेति वाक्ये सच्छब्देन प्रकृतिविशिष्टस्य ग्रहणात् 'आत्मा वा इद'मित्यादौ आत्मादिशब्देन विशेष्यमात्रकथनात् कारणवाक्यानामैकार्थ्यं नास्तीति—तत्र—सदात्मशब्दयोः सामान्यविशेषरूपेण एकार्थबोधकतया दूषणानवकाशात् । न हि विष्णुः कारणम्, रमापतिः कारणं इति वाक्ययोः विष्णुरमापतिशब्दयोः प्रवृत्तिनिमित्तभेदेऽपि ऐकार्थ्यभङ्गोऽस्ति । न च सच्छब्दस्य प्रकृतिविशिष्ट इति शक्यार्थः । अपि [illegible] सत्ताविशिष्ट इत्येव । एवमात्मशब्दोऽपि न शरीरविशिष्टार्थकः । वस्तुतः शरीरमतिसम्बन्धिभूतं यत् तत्पर एव । एवं च यद्यप्यात्मशब्दस्य चिदचिद्विशिष्टवाचित्वाभावात् शुद्धात्ममात्रपरत्वात् तद्ज्ञानेऽपि चिदचिद्रूपविशेषणज्ञानाभावात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा नोपपद्यत इति शङ्का भवितुमर्हति ; अथापि इत्थमवधेयम्—घटज्ञाने सति गन्धरूपादिकं ज्ञातं भवतीति कश्चिदाह । तत्र को भावः । यावत् घटगतान् गन्धरूपादीन् अगृहीत्वा केवलं घटत्वविशिष्टधर्मिमात्रग्रहणम् । तन्न सम्यक् घटज्ञानम् । तथा च घटो यथा ज्ञातव्यः तथा ज्ञाने चेत्—विशिष्टतदन्तर्गतत्वात् विशेषणीभूतान्यपि ज्ञातानि भवन्तीति । एवमेव सर्वस्यापि ब्रह्मप्रकारत्वात् आत्मनि यथावत् ज्ञाते सति तत्प्रकारत्वात् सर्वमिदं ज्ञातं भवतीत्यपि शक्यं वक्तुम् । 'आत्मनि ज्ञाते' इति वाक्येन हि भगवद्दोषादविशेषेण सर्वप्रकारेणात्मज्ञानमेव विवक्षितुं युक्तम् । अतः स्वरसप्रतीतत्वादस्यार्थस्यात्मशब्दस्य शुद्धात्ममात्रवाचिनः चिदचिद्विशिष्टात्मपरत्वे लक्षणेति दोषो नोद्भावनीयः ।

वस्तुतस्तु प्रकृतसद्विद्यायां 'उत तमादेशमप्राक्ष्यः ; येनाश्रुतं श्रुतं भवति अमतं मतं भवती'ति उपक्रमे सामान्यतः यच्छब्दाविव श्रूयेते। उपरि च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्' इति कारणज्ञानेन कार्यज्ञानस्य वर्णनात् दार्ष्टान्तिकेऽपि कारणविज्ञानात् कार्यविज्ञानमेव विवक्षितम्। तत्र च येनाश्रुतं श्रुतं भवतीत्यत्र यच्छब्दः सूक्ष्मचिदचिद्विशिष्टपरः स्थूलचिदचिद्विशिष्टस्य सूक्ष्मचिदचिद्विशिष्टं कारणमित्यस्यार्थस्य सुष्ठु स्थापनात्। एवं च येन सूक्ष्मचिदचिद्विशिष्टेन श्रुतेन प्रागश्रुतं सर्वमपि कार्यभूतं श्रुतं भवति तं सूक्ष्मचिदचिद्विशिष्टं आदेष्टारं किमप्राक्षीः इति श्रुत्यर्थ इति उपक्रमे विशिष्टलाभो निराबाधः। तदनु 'सति कार्यकारणभावे मृन्मयन्यायेन सर्वं विज्ञातं भवेत्; तदेव कथं' इत्याशङ्कायां इहापि कार्यकारणभावोपपादनाय 'सदेव सोम्येदमग्र आसी'दित्यादिवाक्यारम्भ इतीह सच्छब्देनापि प्रमाणप्रतिपन्नत्वरूपसत्ताश्रयत्वेन विशिष्टमेव गृह्यत इति सुज्ञानम्।

एवं श्रुत्यन्तरे 'तम आसीत्तमसा गूढमग्रे प्रकेत'मिति सृष्टेः प्राक् तमोविशिष्टवस्तुसत्ताया प्रतिपन्नत्वात्, तमःशब्दस्य च, 'अक्षरं तमसि लीयते' इत्यादिपर्यालोचनया चिन्मिश्राचित्परतया प्रकृते सच्छब्दः विशिष्टमेव वदति। एवञ्च 'आत्मा वा इदमग्र आसीत्' इत्यादिचेतनविशेषसत्तामात्रबोधिनीनां श्रुतीनामपि गतिसामान्यन्यायेन सर्वशाखाप्रत्ययन्यायेन च सर्वविशेषणोपसंहारेण चिदचिद्रूपविशेषणविशिष्टत्वं स्वयमेव प्रतिपत्स्यत इति न आत्मादिशब्दानां विशिष्टपरत्वलक्षणाक्लेशः।

किञ्च 'आत्मा वा इदमग्र आसीत् स ईक्षत लोकान्नु सृजा इति' इत्यत्र स इत्यनेन शुद्धं ब्रह्म गृह्यते, उत विशिष्टम्; नाद्यः, अविद्याशबलितस्यैव आत्मनः ईक्षणकर्तृत्वसम्भवेन शुद्धे तत्कथनायोगात्। अतस्तस्य विशिष्टपरत्वे आत्मशब्दोऽपि विशिष्टपर एव अन्यथा तच्छब्देन विशिष्ट-

ग्रहणासम्भवात् तस्य पूर्वोक्तपरामर्शित्वात् । अत कारणवाक्ये सर्वत्र विशिष्टमेव भवन्मतेऽपि गृह्यत इति कारणज्ञानादेव कार्यज्ञानस्य सर्वस्योपपादनात् 'आत्मनि खल्वरे दृष्टे' इति श्रुतावात्मशब्दोऽपि विशिष्टपर एव ।

अपि च सदेवेत्यादिवाक्ये सच्छब्देनात्ममात्रग्रहणे तद्व्यतिरिक्तस्य सर्वस्य एवकारेण निषेधस्य भवतोक्तत्वात् अविद्याऽपि निषिद्धेति सूत्रे प्रागविद्यारूपदोषासिद्धौ जगदेव नोत्पद्येत । अतस्त्वन्मतेऽपि सदात्मादिशब्दा विशिष्टपरा । न च पारमार्थिकवस्त्वन्तरनिषेध एवात्र क्रियत इति अपारमार्थिकाविद्यासत्त्वमक्षतमिति वाच्यम् । तथा सति अपारमार्थिकस्य जगत तदा निषेधस्य वाक्यात् प्रतीतस्यासिद्धिप्रसङ्गात् , अविद्यावदपारमार्थिकसर्वसद्भावेऽपि वाक्यार्थोक्षते । ब्रह्मण इवाविद्यादीनामपि कारणवाक्यान्तरप्रतिपन्नतया प्रामाणिकत्वाविशेषेणापारमार्थिकत्वासिद्धेश्च । न च तत्त्वमसीत्यादिना तदपारमार्थ्यनिश्चय , सदेवेति वाक्यार्थादिनिर्णयानन्तरमेव तदुपजीवितत्वमसिवाक्यार्थस्य निर्णेयत्वात् । अत आत्म ब्रह्म नारायणादिवाक्येषु प्रकृतसद्विद्याया च चिदचिद्विशिष्टस्यैव कारणत्वेन निर्देश इति ।

एव च चिदचितो शुद्धात्मपरिणामत्वाभावात् मृद्दृष्टान्तानुरूप्य न भवतीतीदमपि निरस्तम् । विशिष्टस्य विशिष्टपरिणामरूपत्वात् । भवन्मत एव मृद्दृष्टान्तासङ्गति , विवर्तवादस्य भवदिष्टत्वात् दृष्टान्तत्वेन च परिणामवादस्य दर्शितत्वात् । मृदो घटादिप्रकृतित्व परिणाम्युपादानत्वरूपमिति भवताऽप्युक्तम् । न च रज्जुसर्पादिदृष्टान्ता श्रुत्या कुत्रापि दर्श्यन्ते । न च रज्जुसर्प इति कश्चिद्वक्ति । अत एव मृद्दृष्टान्तत्वेन प्रकृतित्व ब्रह्मण इति कथनात् भगवतो बादरायणस्यापि 'प्रकृतिश्चे'ति सूत्रे परिणाम्युपादानत्वमभिप्रेतम् । कण्ठोक्त च 'परिणामादि'ति । न च सूक्ष्मचिदचिद्विशिष्टस्य स्थूलचिदचिद्विशिष्ट प्रति उपादानत्वमित्युक्तौ अन्ततो

विशेषणस्य विशेष्यं उपादानमित्येव पर्यवस्यति । न खलु सूक्ष्मान्तरस्थत्वमात्रेण ब्रह्मणः प्रकृतित्वम्, तथा सति मृदन्तरस्थाकाशस्य घटप्रकृतित्वप्रसङ्गादिति वाच्यम्; वैषम्यात् । आकाशे अन्तरस्थित्यतिरिक्तस्यावस्थाविशेषस्याभावात् मृच्छब्दस्याकाशपर्यन्तार्थकत्वाभावाच्च न घटं प्रति प्रकृतित्वम् । इह तु यथा 'न जायते म्रियते' इति प्रतिपन्नस्य जीवात्मनः, 'आत्मा देवो जातः मनुष्यो जातः' इत्याद्यनुभवबलेन देवादिशरीरविशिष्टत्वरूपस्य देवादिशरीरनियन्तृत्वात्मकावस्थाविशेषस्य सत्त्वाधेन रूपेण कार्यत्वम्, तत्प्राक्तनावस्थाविशेषरूपेण च कारणत्वम्, तथा ब्रह्मणोऽपि सूक्ष्मचिदचिन्नियन्तृत्वावस्थाविशिष्टस्य स्थूलचिदचिन्नियन्तृत्वरूपावस्थापन्नं प्रति कारणत्वमिति साक्षादेवोपादानत्वसिद्धिरिति । शरीरवाचिनां च तद्विशिष्टात्मपर्यन्तवाचित्वात् कारणवाचिशब्दो विशिष्टपरः स्वरसत एव ब्रह्मणः कारणत्वं ब्रवीतीति । एवं सदात्मादिशब्दोक्तस्य ब्रह्मणः इदंशब्देनापि स्थूलान्तर्यामिपर्यन्तार्थकेनोक्तत्वात् इदंपदसामानाधिकरण्यमुपपन्नम् । न च तत्र लक्षणा (पु. ११२); विशिष्टवाचितायाः विस्तरेण भाष्यादौ स्थापनात् । सामानाधिकरण्योपपत्तये सच्छब्दस्य ब्रह्मशरीररूपार्थलाक्षणिकत्वं नैव स्वीकुर्म इति तथा दूषणमनुक्तोपालम्भः ।

यत्तु (पु. ११३) 'तमादेशमप्राक्ष्य' इत्यत्रादेशशब्दः उपदिश्यमानार्थक इति तत् आदेशोपदेशयोः विभिन्नार्थकत्वस्य लोकवेदव्याकरणप्रसिद्धस्यापरामर्शनिबन्धनम् । पराकान्तं चेह सूरिभिः । 'आत्मनि खल्वरे दृष्टे श्रुते मते ज्ञाते इदं सर्वं विदितं भवती'ति वाक्यान्तरानुसारात् उपदिश्यमानार्थवाचीति कथनं तु पृष्ठताडनेन दन्तभङ्ग एव । तत्र वाक्ये तत्साधकलेशाभावात् । येनाश्रुतं श्रुतं भवतीति प्रकृतवाक्यमपर्यालोच्य वा तस्य । यत्तु उपदिश्यमानात्मवस्तुज्ञानजन्यं सर्ववेदनमिति ज्ञानयोर्जन्यजनकभावकथनम्, तत् यथावस्थितवाक्यार्थापरिज्ञानादित्यलमितराधिक्येन ।

यदपि घटस्य कम्बुग्रीवादिमत्त्वस्वरूपं न परमार्थतः सत्यम्; किं तु सत्यं घटस्वरूपं मृदेवेति मृदादिदृष्टान्तेन सम्भवदुक्तिकतां प्रदर्श्य ब्रह्मातिरिक्तमिथ्यात्वं येनाश्रुतमिति वाक्येन बुबोधयिषितमिति—तदसत्। कम्बुग्रीवादिमत्त्वादीनामबाधितत्वेन सत्यत्वेनैव लोके ग्रहणात्; रज्जुसर्पदृष्टान्ताकथनेन त्वदभिमतार्थस्य श्रुत्यनभिमततायाः स्पष्टत्वात्। रज्जुज्ञाने सति सर्पज्ञानाविनिवृत्तिवद्ब्रह्मज्ञानेन मिथ्याभूतसर्पज्ञाननिवृत्तेरेव वर्णनीयत्वेन येनाश्रुतमपि श्रुतं भवतीति सर्वं विज्ञातं भवतीति श्रुतार्थस्य त्वन्मतेऽसम्भवाच्च।

न च मृद्घटस्थले शरीरशरीरिभावाभावेन 'यथा सोम्यैकेन मृत्पिण्डेने'ति दृष्टान्तवर्णनं कथमिति शङ्क्यम्—'न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशेन साम्यमपेक्ष्यत' इति वदता भवतैवास्य समाहितत्वात्। भवन्मते 'मृत्तिकेत्येव सत्यं' इत्यत्र इतिकरणादेः वैयर्थ्यमित्यादयो दोषाः सन्तीत्यन्यत्र विस्तरः। सच्छब्दस्याविभक्तनामरूपावस्थार्थकत्वं तु न वयं क्षमः। किन्तु 'अग्र आसीदेकमेवे'त्यत्र एकशब्दस्य 'बहु स्यां प्रजायेये'ति बहुशब्दप्रतिनिर्देशरूपत्वात् तत्र विभक्तनामरूपावस्थावत्त्वं बहुत्वोक्त्येवात्र एकत्वोक्त्याऽविभक्तनामरूपकत्वं सिद्ध्यतीति। एवं च सदेवेत्यनेन 'असत्' इति एकमेवेत्यनेन 'अनेकं विभक्तनामरूपं न' इति अद्वितीयमित्यनेन निमित्तकारणान्तरयुक्तं नेत्यर्थलाभः। अस्य वाक्यस्य भवदभिमतार्थासम्भवश्च प्रागुपक्रम एव विस्तृत इत्यलमधिकेन।

'अथ परा यया तदक्षरमधिगम्यत' इति अक्षरविद्याऽपि सविशेषपरैव; नित्यं विभुं सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः इति तस्य नित्यत्वविभुत्वसर्वगतत्वसुसूक्ष्मत्वजगत्कारणत्वविशिष्टतया यथावस्थितज्ञानजनकत्वस्यानन्तरोक्तत्वात्। यत्तदद्रेश्यमित्यत्युक्ताद्रश्यत्वाग्राह्यत्वादिवत् नित्यत्वादिधर्माणां कालपरिच्छेदराहित्यादिरूपाणामभावात्मकत्वेऽपि ब्रह्मधर्मत्वं दुरपह्नवम्। अन्यथा तस्य धर्मिस्वरूपत्वे धर्मिसिद्धयैव तत्सिद्धया

धर्मविषये विवादस्य तत्साधनस्य चायोगात्। दृश्यत्वाद्यभावानां तुच्छसाधारण्येन ब्रह्मणस्तुच्छत्वापत्तिपरिहाराय कस्यचिद्भावरूपधर्मस्य संकीर्तनीयत्वाच्च। न च (पृ. ११६) तुच्छत्वव्यावृत्तये सुसूक्ष्ममित्युक्तमेवेति वाच्यम्। तस्यापि स्थूलत्वाभावरूपत्वे तुच्छत्वापत्तेरवारणात्। न हि तुच्छं स्थूलम्। सुसूक्ष्मत्वस्य भावरूपत्वे तु सिद्धं सविशेषत्वम्। एवंभूतयोनित्वस्य नित्यत्वाद्यविशेषेण निर्दिष्टस्यारोपितत्वाङ्गीकारे प्रमाणाभावादपि सविशेषत्वसिद्धिः। धीराः परिपश्यन्तीति स्थाने यदि मूढाः भ्राम्यन्ति भ्रमज्ञानेन गृह्णन्तीति स्यात्–तदैव तेऽर्थः शोभेत। धीरशब्दार्थो धैर्यक्रमेण निर्विशेषवस्तुसाक्षात्कारो भविष्यतीति बुद्धिदार्ढ्यमित्युक्तिस्तु तस्यैव गगनकुसुमायमानतया निर्विषया। एवं परिपश्यन्तीत्युक्त्या तत्र परिशब्देन च विविधविशेषणविशिष्टार्थविषयकधीरकर्तृकसाक्षात्कारसिद्धौ अद्रेश्यमिति प्रागुक्तं विहितदर्शनव्यतिरिक्तविषयमिति न्यायसिद्धम्। एवं वस्तुनः सविशेषत्वे, 'अक्षरं यत्तदद्रेश्य' मित्येवं निषेधमुखेन निरूपणोपक्रम कुत इति चेत्–तावता न सविशेषत्वमवास्तवमिति श्रुतेरभिसन्धिः; किन्तु सविशेषवस्त्वन्तरसाजात्येन चिदचिद्रूपजगतो ब्रह्मैक्यभ्रमो मा भूदिति वस्त्वन्तरविसजातीयत्वव्युत्पादनायैव तथाऽऽरम्भ इति। उपरि 'यस्मात् परं नापरमस्ति किञ्चित्, यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' इति वाक्येऽपि परं, अपरमिति पदद्वयं एकमेव नञ्पद च पश्यता, यदपेक्षयाऽन्यद्वर्तमान यदपेक्षया स्वरूपत उत्कृष्टं न भवति यदपेक्षया सूक्ष्मं न भवति; यदपेक्षया गुणतोऽप्युत्कृष्टं विभु च न भवति। किन्तु सर्वं तद्भिन्न स्वरूपतो गुणतश्च निकृष्टं स्थूलं चेति वास्तवार्थज्ञानं सुलभमिति न तत्र निर्विशेषसिद्धिः। तत्रैव च 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व' मिति तस्य वृक्षवत् अविचाल्यत्वं श्रीमति परमे व्योम्नि विद्योतमानत्वं सर्वजगद्व्यापित्वं, विलक्षणदिव्यमङ्गलविग्रहविशिष्टत्वादि च मुक्तकण्ठं श्रुतिराहेति

नियेयं सविशेषपरत्वैवाक्षरविदा निष्कर्षः ।

एवं 'सत्यं ज्ञान'मिति वाक्यमपि सविशेषपरम् । अस्य कारणवाक्योक्तब्रह्मलक्षणपरत्वात् कारणवाक्येषु च सविशेषस्यैवोक्तत्वात् । ब्रह्मशब्दो हि बृहत्त्वात् बृंहणत्वाच्चेत्यादिना निरतिशयगुणगणार्थवाचक इति प्रागभ्यधाम । आत्मशब्दोऽपि शरीरप्रतिसम्बन्धिनि लोके प्रयुज्यमानः वस्तुतः शरीरादीनामभावे न घटत इति सविशेषपर एव । एवं कारणवाक्यानां चिदचिद्विशिष्टपरत्वं प्रागेवोक्तम् । न च सत्यत्वादेः विशिष्टलक्षणत्वे विशेषणस्यापि लक्षणमिति शङ्कनीयम्–न हि पृथिवीत्वविशिष्टस्य किञ्चिल्लक्षणं गन्धवत्त्वं कथ्यमानं पृथिवीत्वस्यापि भवेदिति कश्चिच्छङ्केत । विशेष्यलक्षणस्यैव विवक्षितत्वात् । तावता वस्तुनो न निर्विशेषत्वम् । न च (पु. ११७) विशेषाणां सामान्यपूर्वकत्वात् जगत्कारणस्य सविशेषत्वे तस्यापि सामान्यपूर्वकत्वमावश्यकमिति तस्य न सर्वजगत्कारणत्वमिति वाच्यम्–प्रागेव दूषितत्वात् । सविशेषं सर्वं कार्यमेवेति व्याप्तेः सविशेषनित्यत्वबोधकश्रुत्यैव निरासात् । परैरपि परमाण्वादीनां सविशेषाणामेव नित्यत्वस्वीकाराच्च । निर्विशेषं न सामान्यमिति न्यायेन सामान्यस्थले किञ्चिद्विशेषस्यावश्यकत्वाच्च । सविशेषत्वे विशेषाणां व्यावर्तमानत्वात् मिथ्यात्वं स्यादिति चेन्न–तस्य मिथ्यात्वसाधकताया अपि प्रागेव निरासात् । सत्यमिति कस्य विशेषः इति चेत् वस्तुविशेषः । निर्विकारं सविकारमिति वस्तु द्विविधम्, तत्र निर्विकारं सत्यं वस्तुविशेष इति । सर्वमिथ्यात्वं ‖ मिथ्यैव । यस्मात् सदा 'अस्ती'ति केवलं वक्तुं शक्यते, न तु विकारान्तरवत्तया ; तस्मात् ब्रह्म सत् सत्यमिति वदद्भिरस्माभिः सच्छब्दपर्यायः सत्यशब्दो निर्विकारपर इति निरूप्यत इति किं तत्र बाधकम् । एवं सत्यं ज्ञानमित्यत्र ज्ञानशब्देनापि सविशेषसिद्धिः ; निर्विशेषनिराश्रयानुभूतेः निरस्तत्वात् । तादृशानुभूतिमतस्तेन शब्देनोक्तत्वात् । यत्तु अर्थाभावजन्यो ज्ञानशब्द इति

विषयवाक्यदीपिकोक्ति श्रुत्यक्षराननुगुणेति—तत्र तस्या एव सत्यार्थं यक्षरा-नुगुणत्वात् त्वदभिमतेश्च स्वराननुगुणत्वादुपेक्ष्यमेव । अतो ज्ञानविशिष्टपर-त्वात् ज्ञानशब्दस्यास्मदिष्टलाभः ।

किञ्च भवन्मते एतल्लक्षणवाक्यं किमर्थं प्रवृत्तम्, पूर्वं जगत्कारणत्वेन प्रमिते वस्तुनि वस्तुतो निर्विशेषत्वे जगत्कारणत्वराहित्यं बोधयितुमिति चेन्न—उक्तस्य निषेधायोगात् । अत्र तद्राहित्यबोधकपदाभावाच्च । अनृतजड-परिच्छिन्नव्यावृत्तिबोधकत्वपक्षेऽपि जगत्कारणत्वाभावस्यासिद्धेः । व्यावृत्ति-श्चेयं ब्रह्मैव वा ? अन्या वा ? नाद्यः, तर्हि पूर्वमेव व्यावृत्त्या ज्ञातया भाव्यमिति वाक्यारम्भो व्यर्थः । अन्याऽपि चेत्—सिद्धं सविशेषत्वम् । अभा-वरूपधर्म इष्यत इति चेत्—'एकमेवाद्वितीयम्' इति श्रुतिव्याकोपः । भाव-रूपधर्मनिषेधपरतया सङ्कोचश्चेत्—भावमपि प्रामाणिकं धर्मं स्वीकृत्य निमित्त-कारणादिनिषेधपरतया सङ्कोचवर्णनेन किमपराद्धम् ।

अपि चास्य समानाधिकरणवाक्यत्वात् प्रवृत्तिनिमित्तभेदेन एकार्थ-वृत्तित्वस्य सामानाधिकरण्यपदार्थत्वात् प्रवृत्तिनिमित्तभेदोऽवर्जनीयः । यत्तु (पृ. ११९) भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन् वृत्तिः सामानाधिक-रण्यमिति महनीयकैयटव्याहृतस्य अद्वैतपक्षपात्यर्वाचीननागोजिभट्टवाक्येन 'सामानाधिकरण्यं च एकार्थविशेष्यकबोधजनकत्वमेव, न [illegible] प्रवृत्तिनिमित्त-भेदगर्भम्' इति शब्देन्दुशेखरस्थेन बाधवर्णनम्—तदत्यन्तदुःस्थम् । नागो-जिभट्टोऽपि हि नैव वक्तुं पारयति, यतः 'अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते' इति न्यायेन ज्ञानसामान्ये विशिष्य च शाब्दबोधे तत्तदर्थानां तत्तच्छब्दप्रकारतयैव भानात् अन्ततः शब्दरूपप्रकारभेदस्यावर्जनीयत्वात् समानाधिकरणवाक्ये नानाविशेषणविशिष्टैकविशेष्यकबोधो वैयाकरणमते दुरपह्नवः । एतावता शब्दरूपविशेषणसिद्धावपि शब्दप्रवृत्तिनिमित्तभूत-विशेष्यनिष्ठं किञ्चित् सिध्यतीत्येव तु शक्यमालोचयितुम् । तत्रेदं समाधानम्—

अवश्य तु केनचित् प्रकारेण भाव्यम् । तत्र शब्दस्य अर्थप्रकारतया सर्वत्र भानस्य वैयाकरणैरेव स्फुट निरासात् शब्दातिरिक्तमेव किञ्चित्प्रकारी-भवतीत्यास्थीयते । तच्च यदि किमप्यन्यन्न भवति । तर्हि अन्ततो गत्वा तत्पदवाच्यत्वस्वरूप सुवच भविष्यति । अत एव कोकिल पिक इत्यादौ पिकशब्दस्य पिकपदवाच्ये लक्षणा । एवमन्यत्र द्रष्टव्यम् । पिकपदवाच्यत्व वा वाच्यतासम्बन्धेन पिकपदमेव वा प्रकार । ततश्च वाच्यत्वस्वरूपविशेषो-ऽपरिहार्य । इय च लक्षणा, यत्र वाच्यार्थस्वीकारेण प्रवृत्तिनिमित्तभेदो रक्षितु न शक्यते, तत्र । न च प्रकृते एवमगति । सर्वथा तु सविशेषत्व सिद्धमेव ।

यद्यपि, 'नामन्त्रिते समानाधिकरणे सामान्यवचन'मिति सूत्रे सा-मान्यवचनमित्यस्य महाभाष्ये 'अघ्न्ये देवि सरस्वति . एतानि ते अघ्न्ये नामानि' इति प्रत्युदाहरणदानात्, तत्रैव कैयटे पर्यायशब्दानामपि सामा-नाधिकरण्यात् अविद्यमानवत्त्वनिषेधात् निघातप्रसङ्ग इत्युक्तत्वाच्च पर्याय-शब्दानामपि सामानाधिकरण्यमस्तीति प्रवृत्तिनिमित्तभेदोऽनावश्यक इति नागोजिभट्टानुसारेणोक्तम् । तदिद यथावस्थितभाष्यकैयटार्थप्रतिरोधेन परास्तम् ।

तत्र सूत्रस्य ह्ययमर्थ — सामान्यवचन विशेष्यवाचक पद समा-नाधिकरण विशेषणवाचके आमन्त्रिते पदे परे नाविद्यमानवद्भवति । अतो निघातो भवतीति । यथा 'अग्ने तेजस्विन्' इत्यत्र तेजस्विन्निति निघात । निघातोऽनुदात्तत्वम् । आमन्त्रितमित्यस्य सम्बोधनप्रथमान्तमित्यर्थ, 'साम न्त्रित'मिति सूत्रात् । अत्र सामान्य साधारणधर्म जातिरखण्डोपाधिर्वा । अतो जातितद्भिन्नप्रवृत्तिनिमित्तकाना पदाना मध्ये जातिप्रवृत्तिनिमित्तक पद विशेष्यमिति न्यायपर्यालोचनया सामान्यवचनपदस्य विशेष्यवाचिपदमित्यर्थ इति तावन्नास्ति । माणवकजटिलकाध्यापकेत्यत्र अध्यापकपदापेक्षया जटि

लकपदस्यापि सामान्यवचनत्वस्य काशिकादिसिद्धतया जात्यखण्डोपाधि भिन्नप्रवृत्तिनिमित्तकस्यापि विशेष्यपदस्य मासत्वा । । अतो लोके साम।न्याकारेण पूर्वं ज्ञात पश्चाद्विशेषाकारेण गृह्यते इति पूर्वज्ञात विशेष्य, पश्चात् ज्ञात विशेषणमित्यनुभवानुसारात् सामान्यवचनपद विशेष्यवाचकार्थकमित्युक्तम् । एव सामान्यवचनमिति निर्देशात् एतत्समानाधिकरणमामन्त्रित विशेषवचनमित्यर्थसिद्धम् । अत एव 'विभाषित विशेषवचने' इत्युत्तर सूत्रे 'सामान्यवचनपदवत्तेनैव सिद्धत्वात् विशेषवचन इति पद स्पष्टार्थ'मित्युक्त काशिकायाम् । विशेषवचनत्व नाम विशेषाकारवाचित्व भेदकत्व विशेषणपदत्वमिति यावत् ।

एवमन्ततो विशेष्यवाचकपदमित्यर्थाङ्गीकारे लोके विशेष्यविशेषण भावस्य विवक्षाधीनत्वात्, नीलमुत्पलमित्यादौ उत्पलपदेन रक्तोत्पलादिग्रह णप्रसक्तौ नीलमिति विशेषण, नीलपदेनातसीकुसुमादिग्रहणपरिहाराय उत्पलमिति विशेषणमित्युभयथाऽप्युक्तिसम्भवात् सर्वमेव विशेष्य विशेषण चेति विशेष्यविशेषणभावानापन्नसमानाधिकरणपदद्वयाभावात्, 'सुसमाना धिकरणे आमन्त्रिते पदे परे सु (किञ्चित्पद) अविद्यमानवत् भवतीत्येव वाक्यार्थस्य सूत्राभिमतत्व निष्कृष्यत इति अस्यांशस्य सामान्यवचनपदा भावेऽपि सिद्धया तत्पद व्यर्थमित्याशङ्का परि तु, 'अघ्न्ये दवि सरस्वति' इति प्रत्युदाहरण दत्त भाष्ये । अयमत्र भाष्याशय – प्रयत्नाधिक्येन सामान्यवचनमिति प्रयुञ्जान पाणिनिर्न व्यर्थप्रयोक्ता भवति । अतो यथा पदयोर्विशेष्यविशेषणभाव भेद्यभेदकभावापन्नार्थकत्व सामान्याकारविशेषा कारवाचित्वम् , तत्रैव नामन्त्रिते इति सूत्रस्य प्रवृत्ति , यत्र तु तन्न, यथा पर्यायप्रयोगे , तत्र नास्य प्रवृत्तिरिति सूत्रकृन्मन्यते । तथा च प्रत्युदाहरणम्–'अघ्न्ये देवि सरस्वति' इति । उपरि 'एतानि ते अघ्न्ये नामानि' इति सर्वेषा नामधेयत्वकथन त् नाम्ना च विशेषपरत्वेन एकनाम

*धेयान्यावर्तितव्यक्तिव्यावर्तकत्वसाम्यस्य नामधेयेऽभावेन निरुक्तविशेष्यविशे-*
षणभावाभावात् इदं प्रत्युदाहरणमिति । ईदृशप्रत्युदाहरणस्थलसद्भावा-
देव, सामान्यवचनमिति पदस्य स्वरसतो विशेषवचन इति पदघटितोत्तर-
*सूत्रान्तर्गतत्वस्वीकारेऽपि योगविभागेन पूर्वसूत्रेऽपि सम्बन्धो भाष्यकृदिष्टः ।*
यद्यपि 'हरे दयालो नः पाहि' इत्युदाहरणे हरिपदान्यावर्तितव्यक्तिव्यावर्त-
क*त्व दयालुपदस्य नास्ति ; अथापि अदयालुत्वदशायामपि हरित्वमिति*
स सामान्याकार इति भावः ।

ननु घटो घट इति पर्यायपदप्रयोगाभावात्, अघ्न्ये देवीत्यादेरवि-
शेषेण नामत्वे कथं सह प्रयोगः । अतः समानाधिकरणपदोक्तं सामाना-
*धिकरण्यमेवात्र दुरुपपादमित्याशङ्कामपाकर्तुं कैयटेनोक्तम्, 'पर्यायशब्दाना-*
मपि सामानाधिकरण्यात् अविद्यमानत्वनिषेधात् निघातप्रसङ्गः' इति ।
शब्दानां पर्यायत्वं तावदास्ताम् । अथापि भिन्नप्रवृत्तिनिमित्तकानामेकार्थनि-
ष्ठत्वे *वृत्ति* सामानाधिकरण्यमिति *निरुक्तं सामानाधिकरण्यमक्षतमिति तदा-*
*शय* । *इदमत्राकूतम्—पर्यायशब्दो द्विविधः । प्रवृत्तिनिमित्ततोऽपि*
भेदरहितः, भिन्नप्रवृत्तिनिमित्तकश्चेति । आद्यविषये तु न सह प्रयोगः।
अतो घटो घट इति नापत्तिः । एकार्थविशेष्यकत्वमात्रस्य सामानाधि-
करण्यलक्षणत्वे तु एतत्प्रयोगापत्तिर्दुर्वारैव । *अन्त्यविषये तु सहप्रयोग इष्टः ।*
प्रवृत्तिनिमित्तभेदसत्त्वात् । कथं नामसु प्रवृत्तिनिमित्तभेद इति चेत्—एक-
स्या एव व्यक्तेरनेकानि नामानि नूनमर्थविशेषावबोधनायैव क्रियन्ते । तत्र
अघ्न्याशब्देन हन्तव्यत्वविरोध्याकारविशेषः, देवीत्यनेन द्योतमानत्वाकारो
वाच्यत इत्येवंरीत्या भाव्यम् । न चैवमतिप्रसक्तत्वात् कथमेतत्पुरस्कारे-
णैव नामत्वमिति मन्तव्यम्, हन्तव्यत्वानाश्रयवस्त्वन्तरे यत्रातिप्रसक्तिस-
म्भावना तद्व्यावृत्त एतन्मात्रवृत्ति-हन्तव्यत्वविरोध्याकारस्यैव विशिष्य प्रवृ-
त्तिनिमित्त्वेन यागविशेषे उद्भिदादिशब्दवत्प्रवृत्तिसम्भवेनादोषात् । एवं

देवीत्यादावेतन्मात्रनिष्ठयोतमानत्वविशेषादिकमेव प्रवृत्तिनिमित्तम् । ते च धर्मा मिथो भिन्नाः । सम्भवन्त्येव व्यक्त्यामेकस्यामप्यनेके इतरावृत्तयो धर्माः । परं [illegible] तेषामेकमात्रनिष्ठत्वात् एकधर्मान्यावर्तितव्यक्तिव्यावर्तकत्वमन्यस्य धर्मस्य नास्ति । अथाप्युपपन्नं सामानाधिकरण्यमिति । नामधेयस्थले च प्रवृत्तिनिमित्तानां सांसिद्धिकत्वे यावदाश्रयमावृत्तितया एकनामाव्यावर्तितदशाव्यावर्तकत्वमन्यस्य नास्तीति स्पष्टम् । तेषां कादाचित्कत्वेऽपि उपलक्षणविधयैव शक्यतावच्छेदकत्वात् अन्यथा सार्वकालिकनामत्वानिर्वाहात् , हरे दयालो इतिवदपि न विशेष्यविशेषणभावः । भिन्नप्रवृत्तिनिमित्तकत्वं स्वरूपतम् । सूत्रकारेणापि सामान्यवचनविशेषवचनपदं प्रयुञ्जानेन प्रत्युदाहरणस्थले प्रवृत्तिनिमित्तयोः सामान्यविशेषरूपत्वं नास्तीत्येवमेव सूच्यते ; न पुनः सर्वात्मना तत्र प्रवृत्तिनिमित्तस्यैवाभावः ।

एवं च सूत्रे भाष्ये कैयटे वा प्रवृत्तिनिमित्तभेदो नास्तीत्यनुक्ततया नागोजिभट्टकल्पनमद्वैताभिमानमूलमेव । ये पुनरेतावत् परिशीलयितुं न पारयन्ति, तैरप्यनन्ततत्तत्पदवाच्यस्वरूपं प्रवृत्तिनिमित्तं सुबोधमपरिहार्यम् । स्वीकृतं च यदृच्छाशब्दानां शब्दस्वरूपप्रवृत्तिनिमित्तकत्वमिति कथङ्कारं भाष्ये इत्यादौ प्रवृत्तिनिमित्तभेदाभावः । अतः शेखरवाक्यमनादरणीयमेव । आद्रियतां वा कथञ्चिदनुकूलार्थवर्णनेन । यथा—एकार्थविशेष्यकत्वयुक्तत्वात् विशेष्यताया प्रकारतानिरूपितत्वाद्विशेष्यसहचरितप्रकारप्रवृत्तिनिमित्तं तेनापीष्यत एव । एवं च 'न तु प्रवृत्तिनिमित्तभेदगर्भं' मिति वाक्यस्य भेदभेदकभावापन्नतादृशप्रवृत्तिनिमित्तगर्भं नेत्यर्थ इति । नास्माकं निर्भरः । अवर्जनीयः प्रवृत्तिनिमित्तभेदः समानाधिकरणवाक्यसामान्ये इत्येतत्तु स्थापयाम ।

अतः सत्यं ज्ञानमित्यत्र विनैव लक्षणां सत्यत्वज्ञानत्वादिधर्माः प्रतीताः परित्यक्तुमशक्याः । न च ते न प्रतीयन्ते । तथा सति एकेना-

नूनव्यावृत्तिः, अन्येन जडव्यावृत्तिः, अपरेण परिच्छिन्नत्वव्यावृत्तिः क्रियत इति भवदीयव्यवस्थाया एवासम्भवापातात् । एतादृशव्यावृत्तिप्रतीतिबलादपि न सत्यादिपदवाच्यत्वं सत्यादिपदप्रवृत्तिनिमित्तम्, तथा ज्ञानस्येदृशव्यावृत्त्य-प्रत्यायकत्वात् । अतो भिन्नाभिन्नत्वावद्धमेवत्त्वमवर्जनीयं ब्रह्मण इति ।

यत्पुन (पु. १२०) सदेवेति वाक्य पुनर्गृहीत्वा अद्वितीयश्रुतिः स्वगतविशेषमपि न सहत इत्युक्त्वा, 'जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठानान्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्ये' ति श्रीभाष्यार्थनिर्वेचनम्—तत् शाङ्करोपनिषद्भाष्यविरुद्धमित्यारम्भ एवास्माभिरदर्शि । सत्पदेन च 'येनाश्रुत'मिति वाक्ये यत्पदेन गृहीतमेव गृह्यते । [पु. १२१] इति स्वीक्रियत एव । तत्र च यच्छब्दश्चिदचिद्विशिष्टपर इति प्रागेव समर्थितम् । अत्र सत्पदार्थं एकपदार्थमद्वितीयपदार्थं च प्रति इदंपदार्थस्योद्देश्यत्वम्, न तु एकपदार्थादेः सत्पदार्थेऽन्वयः—इति यदुक्तं तन्न हृद्यम्—तथा सति एकोद्देशेनानेकविधाने वाक्यभेदात् । अत एकत्वाद्वितीयत्वविशिष्टसद्रूपत्वमिदंपदार्थोद्देशेन विधीयते । विशिष्टविधाने तु न वाक्यभेदः । अत्र वेदान्तिसम्मतो वैशिष्ट्यवर्णनप्रकारो विस्तरभियेह न प्रदर्श्यते ।

सदेवेत्येवकारेण शून्यव्यावृत्तिर्भवन्मते न सिद्ध्यति, सच्छब्दस्यासच्छब्दस्य च धर्ममात्रपरत्वे एकेनान्यव्यावृत्त्यसम्भवात् । सत्ताविशिष्टवाचित्वं तु सच्छब्दस्य सविशेषभीरुणा भवता दुर्वचम् । अद्वितीयमित्यत्र द्वितीयपदेन, 'असिद्वितीयोऽनुससार पाण्डवम्', 'तातेन चापद्वितीये वहति रणधुरां' इत्यादाविव साजात्यविवक्षणात् सर्वनिषेध (पु. १२२) इति न शस्य वक्तुं, दृष्टान्तेऽपि पाण्डवानुसारित्व रणधूर्वहत्वरूपसाजात्यस्थितेर्निर्वचनपूर्वं सुवचत्वात् । तेजोबिन्दूपनिषत्तु न सर्वप्रामाणिकपरिगृहीता । तत्र तत्त्वं, 'सजातीयं न मे किञ्चिद्विजातीयं न मे क्वचित् ।

स्वगतं च 'न मे किञ्चित् न मे भेदस्य भेवत्' ३. ४७ इति वाक्य न प्रकृतश्रुत्युपन्यूहणं भवितुमर्हति । किं च तत्र, 'मे' इत्येन भवन्मतसिद्धोऽहमर्थस्तदवच्छिन्नात्मा वा गृह्यते चेत्—तत्र भेदस्य भवद्भिरेव स्वीकृतमिति तद्विरोधः । शुद्धचैतन्य तु न 'मे' इत्यस्यार्थ , अपसिद्धान्तात् । अतस्तद्वाधिनार्थकमपि । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अस्मत्पक्षे सम्यगुपपत्तिः प्रागेवोक्ता । त्वन्मत एव तदनुपपत्ति । एकमित्युच्यमानं निर्विशेषं सविशेषं वा । नाद्य ; तस्याज्ञेयत्वेन तद्ज्ञानेन सर्वविज्ञानप्रतिज्ञाया असम्भवात् । नान्त्य ; सविशेषत्वे एकत्वं नास्तीति भवतैवोक्तत्वात् तद्विरोधात्, निर्विशेषपरत्वनिरूपणभङ्गाच ।

ननु सविशेषकारणवादे सर्वविज्ञानं कथम् ; विशेषाणां कार्यत्वावश्यकत्वेन तत्कारणस्य विशेषज्ञानेनाज्ञातत्वात् इति चेन्न-विशेषश्चेत् स कार्य एवेति नियमाभावात् । कार्याकार्यत्वयो शास्त्रैकनिर्णेयत्वात् । किंच इदमित्यस्य उपरि सृष्टिवाक्येषु निरूप्यमाणसृज्यवस्तुमात्रपरत्वस्य प्रकरणबलसिद्धत्वात्, तावन्मात्रस्य सविशेषज्ञानेन ज्ञेयता घटत एव । अविशेषेण इदमित्यनेन सर्वग्रहणमिति च प्रकरणविरुद्धम् । भवन्मते इदमित्यनेनानाद्यविद्या गृह्यते, न वा ? गृह्यते चेत् अस्य तदभाव सिद्ध इति कथमनादिता ? कथ च सृष्टि ? न चेत् अविशेषेण सर्वग्रहणमिति कथम् ? अद्वितीयमित्यस्याभिप्राय-स्तदवारकत्वे सर्वविज्ञानप्रतिज्ञोपपादनार्थत्वे तस्य पदस्य कथमिति न शक्यम्—अन्यस्याधिष्ठातु सत्त्वे तस्यैव सृष्टिस्थितिसंहारकर्तृत्वेन ब्रह्मरुद्रादीनां इदमित्यनेन कार्यतया गृहीतानां तद्ज्ञानज्ञेयत्वेऽपि केवलोपादानभूतप्रकृतसद्वस्तुज्ञानज्ञेयत्वाभावात् सर्वविज्ञानप्रतिज्ञा नोपपद्यत इति शङ्कापरिहारार्थत्वेन प्रकृतोपयोगात् । 'तदैक्षत बहु स्या'मिति उपादानस्यैव सङ्कल्पाश्रयत्वस्यापि वक्ष्यमाणतया कथमुपादानकारणस्य सङ्कल्पाश्रयत्वमिति शङ्काप्रसक्तिवारणायाद्वितीयमिति निमित्तान्तरनिषेधस्या-

वश्यकत्वाच्च । अन्यथा अचेतनोपादानपक्षपरिहारासम्भवेन चेतनाचेतनात्मकसर्वप्रपञ्चविज्ञानासिद्धेः । एवं विविधगुणविशेषाभिधायिकारणवाक्यान्तरानुरोधेनापि सद्विद्यावाक्यस्य निर्विशेषपरत्वं निरसनीयम् । न च सर्वशाखाप्रत्ययन्यायेन कारणवाक्यान्तरेष्वपीदं निर्विशेषत्वमुपसंह्रियते । एवं च गुणानां मिथ्यात्वेन निर्वाहः (पु. १२३) इति वाच्यम्—तदनुक्तगुणानामिवास्य तेन न्यायेन उपसंहारेण निर्विशेषत्वबाधात् । सर्वशाखाप्रत्ययन्यायो हि धर्मोपसंहारार्थः । न च निर्विशेषत्वं धर्मः, तस्य धर्म्यभिन्नत्वात् । सर्वज्ञत्वादिस्तु तद्धर्मः ।

*किञ्च सिद्धे निर्विशेषत्वे सविशेषत्वं मिथ्येति निर्वाहशङ्का । तदेव न सिद्ध्यति । किं सगुणवाक्यानन्तरश्रुतत्वात् निर्गुणशब्दान्निर्विशेषलाभः,* किं वा पूर्वश्रुतत्वात् ? नाद्यः, पूर्वप्रतिपन्नसगुण अविरोधेनासञ्जातविरोधि वन्यायेन निर्गुणपदस्य तद्विरुद्धार्थविषयकशाब्दबोधजनकत्वस्यैवासम्भवेन स्वत एव उक्तव्यतिरिक्तविषयकतया सङ्कुचितत्वसिद्धेः । नान्त्यः, परमात्मगतानां सर्वज्ञत्वादीनां सावकाशानां पूर्वप्रतिपन्नत्वाभावे निर्गुणपदस्य लोकावगतचिदचिद्गुणमात्रोपस्थापकतया तदभावस्यैव ब्रह्मणि प्रतीत्या विरोधाभावेन पश्चात्सगुणवाक्यैरपूर्वगुणानां वास्तवानामेव बोधनसम्भवात् । तथा च सर्वविशेषाभावबोधनं क्वापि न सम्भवतीति तस्यासिद्धत्वात् कथं गुणानां मिथ्यात्वम् ।

यत्तु—[पु. १२४] निर्गुणश्रुतेः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' इत्युक्तहेयगुणनिषेधपरत्वमिति न युक्तम्—पातकजरामरणादीनां गुणत्वस्य काप्यप्रसिद्धत्वादिति—तदसत्—पाप्मनोऽधर्मस्य शोकजिघत्सापिपासानां च गुणत्वं न्यायमते स्पष्टम् । जराऽपि शरीरस्थावयवविशेषः अवयवसंयोगविशेषरूपत्वात् गुणः । मरणमपि समुत्क्रमणमिति निर्दिष्टं देहात्मनोर्विभागविशेष इति सोऽपि गुण इति कथमप्रसिद्धिः ?

किं चास्मन्मते आश्रितत्वेन सर्वदा प्रतीयमानत्वमेव गुणत्वमिति तदेव्य-क्षतमेव ।

एवमपि गुणसामान्यपरवाक्यानां सत्यकामः सत्यसङ्कल्प इत्युक्त-गुणविशेषपरत्वकथनं न सङ्गच्छत एव ; कुत्रापि गुणसामान्यबोधकवाक्या-दर्शनात् । यः सर्वज्ञः सर्वविदिति विशेषस्यैव दर्शनादिति चेत्—तदप्य-युक्तम्—

'कोऽन्वस्मिन् साम्प्रतं लोके गुणवान्'

'समस्तकल्याणगुणात्मकोऽसौ'

'न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ।

वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥'

'नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते ॥'

'तवानन्तगुणस्यापि षडेव प्रथमे गुणाः'

'वर्षायुतैर्यस्य गुणा न शक्या वक्तुम्'

'चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः ।

स ते गुणानामयुतैकदेशं वदेन्न वा ; देववर प्रसीद ।'

इत्येवं गुणसामान्यपरशतवाक्यदर्शनात् । किञ्च सर्वज्ञत्वादिगुणाना-मपि सत्यत्वरूपविशेषणविशिष्टतया विशेषरूपेण कथनात् सत्यकामादि-पदस्य गुणविशेषपरत्वमक्षतम् ।

न च, 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धी-र्भीरित्येतत्सर्वं मन एव,' इति श्रुत्या कामादेर्मानसत्वनिर्देशात् सत्यकामा-दिपदमारोपितमानसगुणवत्तापरम् । निर्गुणवाक्यं वस्तुतः साक्षात्तदना-श्रयत्वपरमिति विवेचनीयम्—भवन्मतेमन सृष्टेर्भूतानन्तरभावित्वेन ततः प्रागेवेश्वरं कामसङ्कल्पादिवर्णनान्मानसव्यापारत्वासम्भवात् । 'शीत एवे'-

त्यादिना ज्ञानस्य चेतनगुणतास्थापनात् धीकामादेर्मनोगतत्वासम्भवेन मन एवेति श्रुतेर्मनोव्यापाराधीनत्वेनौपचारिकत्वाच्च । 'मनसैवैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' इत्यादावपि मनश्शब्दस्य धर्मभूतज्ञानपरत्वाश्रयणेन काम सङ्कल्प इत्यादि श्रुतिनिर्वाहस्य सुकरत्वाच्च । अप्राकृते ब्रह्मलोके आहङ्कारिकस्य मनसोऽसम्भवात् । भवन्मतेऽपि मनसि कामाद्यभेदस्य बाधितत्वेन मनश्शब्दे लक्षणाया आवश्यकतया मानान्तरानुरोधिलक्षणाया एवोचितत्वाच्च । अतो मनश्शब्दस्य मनोऽधीनपरत्वे धर्मभूतज्ञानपरत्वे वा कामाद्यभेदवर्णनं सुकरम् । 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यपि श्रुति निर्विशेषपक्षं ज्ञानादेरौपाधिकत्वपक्षं च परास्यति ।

एवं 'आनन्दं ब्रह्मणो विद्वान्' इति आनन्दगुणानन्त्यस्य (अपरिच्छिन्नानन्दस्य) अत्यादरेण कथनादपि सगुणं ब्रह्म । न च (पृ १२५)पुरुषेण स्त्रीवेषे धृते प्रेक्षकैरत्यादरेण तदवलोकनेऽपि तस्यौपाधिकत्वमेव यथा, तथाऽत्रेति वाच्यम्—वैषम्यात्, तत्र पूर्वं पुरुषत्वेन ज्ञाते स्त्रीत्वबाधात् वेषत्वनिश्चय । न त्विह तथा निर्विशेषत्वं श्रुतिप्रतिपन्नम् । इयं हि परविद्या । तत्र चोपासनार्थतयाऽपि गुणकथनस्य न प्रसक्तिः । अतः कथमौपाधिको गुणोऽत्र कथ्यते ।

किं चेह 'आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचन [कुतश्चन]' इति भयाभाव ब्रह्मनिष्ठतया आनन्दगुणज्ञानजन्य इति बुध्यते । न खल्वौपाधिकज्ञानं भयनिवर्तकं भवदिष्टम् । अतस्तस्य वास्तवत्वादेव तथा ज्ञाने भयाभाव । अत परिच्छिन्नतयाऽऽनन्दज्ञाने वा सर्वथाऽऽनन्दरहिततया ज्ञाने वा भयमेवेति, भयाभावहेतुतया तत्रात्यादरप्रदर्शनात् तस्य औपाधिकत्वं असम्भवदुक्तिकम् । अत एव 'उदरमन्तरं कुरुते, अथ तस्य भयं भवति' इति श्रुतावपीदृशपरिपूर्णानन्दब्रह्मवेदनविच्छेदे भयमुक्तम् । आनन्दमीमांसाऽपि श्रुतिरारभ्य उपर्युपरि शतगुणितानन्दधारावर्णनेन परिच्छेदने प्रयतमाना

तत्रासामर्थ्येनापरिच्छिन्नानन्दता ब्रवीति। आनन्दस्य वस्तुत अभाव एव चेदविवक्षिष्यत, तर्हि श्रुत्या ह्रासक्रममादृत्य चतुर्मुखानन्दक्रमण मनुष्यादि कीटाद्यानन्दह्रासमुपवर्ण्य ब्रह्मणि कार्त्स्न्येनाभाव उपपादयिष्यत, आनन्द ब्रह्मण इत्येवरूपव्यतिरेकनिर्देशोऽपि नाकरिष्यतेत्यलम्।

यदपि परिमितेऽन्ने पूर्णत्वमाण्डपिशनम्। 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति वाक्येन निर्विशेषब्रह्मपरिशेष क्रियते इति—तस्याशयस्त्व आत्महृदयमेव सम्यग्वेत्तीति किमनेन। न च काम शब्दस्य गुणे रूढत्वाभावान्न गुणसिद्धिरिति वाच्यम्— कामशब्दस्य गुणत्वेन रूपेण तद्वाचित्वाभावेऽपि कामनाविषयत्वेन रूपेण तद्वाचित्व सम्भवात्। गुणानिति निर्देशे हयत्याद्युक्तिर्न झटिति भवतीति काम शब्देन सन्निर्देश, हयानामकाम्यत्वाच्च सुरत वारणमिति। न च भाग्य वस्तूनामपि काम्यत्वात् कल्याणगुणमात्रग्रहण कथमिति शङ्कयम्—तावताऽपि गुणपारसख्यानामावात्। वस्तुतस्त्वत कामनाविषयत्व सुखस्य, तत्सम्बन्धादेवान्येषा कामनाविषयता। एव च कामानिति सुखभेदाना ग्रहणम्। तेषा च भोग्यवस्तुवैचित्र्यायत्तत्वेन भोग्यवस्तुलाभ आर्थिक। सर्वानिति विशेषणाच्च मुमुक्षो काम्यमाना य ये भवितुमर्हन्ति सुखभेदास्ते सर्वे गृह्यन्त इति कामशब्दस्य कल्याणगुणपरत्व स्वरसमेव। वस्तुतस्तु दहरविद्याया 'अथ इहात्मानमनुविद्य व्रजन्ति एताश्च सत्यान् कामान्' इति परमात्मना सह वेद्यतया कामाना कथनात् 'तस्मिन् यदन्तस्तदन्वेष्टव्य मिति तत्रत्यवाक्येनैव तेषा परमात्मनिष्ठत्वाभिधानाच्च द्रव्याश्रितत्वरूप गुणत्वस्य कामेषु लाभात् तदैकार्थ्येन इहापि कामपद तत्परमिति निश्चीयते। एतेन कामशब्दस्य गुणपरत्वेऽपि तेषा ब्रह्मनिष्ठत्वमसिद्धम्, तद्बोधकशब्दा भावादिति निरस्तम्—वाक्यान्तरेण तत्सिद्धरुपपादितत्वात्।

न च सर्वकामपदस्य ब्रह्मनिष्ठगुणपरत्वे जीवस्य तदाश्रयत्व न सुव

चम्-जीवब्रह्मणोर्भेदात् । ब्रह्मगुणसजातीयगुणपरत्ववर्णनं च स्वरसतो जीवगुणग्रहणेनैव निर्वाहे क्लिष्टमिति वाच्यम्-अश्नुते इत्यनेनानुभवस्यैव ब्रह्मणासहेत्येतदन्वयानुरोधेनोक्ततया ब्रह्मगुणानामपि जीवकाम्यमानताया जीवानुभाव्यतायाश्च सम्भवेनक्लिष्टनिर्वाहाभावात् । एतेन-जीवब्रह्मैक्य-स्वीकारेण जीवस्य ब्रह्मगुणप्राप्तिकथनेऽस्मन्मार्गसमागम इत्यप्यपास्तम् । तथा स्वीकाराभावात् । एवमपि युष्मन्मतप्रवेशाभावाच्च । न हि भवन्मते ब्रह्मणि गुणगन्धोऽप्यस्ति । यस्य जीवे ब्रह्माभेदबलात् प्राप्तिर्भवतोच्येत । किञ्च भवन्मते निर्गुणब्रह्मपरिशेषे सर्वकामानुभवोक्तिः कथं घटते ? लौकिकानां कामानामानन्दविशेषाणां ब्रह्मानन्दमात्रारूपत्वात् आनन्दरूपब्रह्मताप्राप्तिरेव सर्वकामावाप्तिरिति चेन्न-ब्रह्मण आनन्दरूपता नाम दुःखाभावरूपतेति प्रागुक्तत्वात् मुक्तिदशायामवेद्यस्य तस्यानन्दरूपत्वासम्भवाच्च लौकिकसुख-विशेषाणां ब्रह्मानन्दमात्रारूपत्वस्यासम्भवदुक्तिकत्वात् । न हि लौकिकं सुखं दुःखाभावमात्रम् । अन्तःकरणपरिणामः सुखमिति च भवन्मतम् । एवं 'सह' इत्यस्य युगपदित्यर्थस्वीकारेण युगपदेव सर्वानन्दमाप्नुवतीत्यर्थवर्णनं तृतीयान्तसहचरितस्य सहशब्दस्य साहित्यार्थकत्वस्वारस्यविरुद्धम् । एवं ब्रह्मणा इत्यत्राभेदे तृतीयत्यापि सहशब्दसमभिव्याहारविरुद्धत्वादभेदे तृतीया-नुशासनाभावाच्च हेयम् । तत्र विपश्चितेति विशेषणेन सर्वज्ञत्वकथनात् मोक्षे सर्वापलापः ब्रह्मनिर्गुणत्वकल्पनं च सर्वात्मना न सम्भवति । अतो ऽनया श्रुत्या मोक्षे जीवः, तन्निष्ठोऽनुभवः, तद्विषयाः कामाः, साहित्यप्र-तियोगिब्रह्म, तन्निष्ठगुणविशेष इत्येतावद्वस्तुसिद्धिरेव । विस्तरोऽस्मदाचार्यग्रन्थे द्रष्टव्यः ।

(पृ. १२६) 'यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥

इति श्रुतिं गृहीत्वा, 'यस्य ब्रह्म ज्ञानाविषय इति निश्चयः' तेन सम्यगवगतम् ।

यस्य तु ब्रह्म मतं ज्ञानविषयत्वेनाभिमतम्, स न वेद । यतोऽस्माभिर्नेत्र ज्ञात अस्मन्निष्ठज्ञानविषयभूतमित्येव विजानता ब्रह्माविज्ञातमेव । अद्वैते ब्रह्मणि विषयविषयिभावासम्भवात् । 'अविजानता—ब्रह्म न ज्ञानविषय इति विजानता ब्रह्म विज्ञात'मित्यर्थवर्णनं प्रकृतविरुद्धं न दुरवगतत्वाच्चेदं यत्नेन । तथा हि—तत्र

'यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् ।
यदस्य त्वं यदस्य देवेष्वथनु मीमांस्यमेव ते मन्ये विदितम् (कन २.१)

इति मन्त्रेण 'अहं सुवेद सम्यग्वेदेति मत्वा त्वया अदृगव ब्रह्म स्वरूप विदितं भवति, न कृत्स्नम् । परिच्छिन्ने हि वस्तुनि कृत्स्नोऽशो ज्ञातुं शक्यते, अहं सुवेदेति च ज्ञस्य यत्नुत् । अनन्त च ब्रह्मरूप तत्र सुवेदेति मत्यर्हम् । तथा चान्याशग्रहणे सतोदमेव कृत्स्नमिति भ्रान्त्या एव मन्यसे 'सुवेदे'ति । यत् अस्य ब्रह्मणो रूपं त्वं वेत्थ, यच्चास्य रूपं देवेष्वस्ति, सर्वमिदं पुनरपि मीमांस्यमेव । अल्पाशस्यैव गृहीतत्वात् । 'एवं मदुक्त त्वया विदितं मन्ये' इत्युक्तम् । अत्र च अहं 'सम्यग्वेदेति ज्ञानमयुक्तम्—ब्रह्मण्यद्वज्ञानबुद्ध्यावादित्यर्थेनिष्कर्षे । एवं गुरूपदिष्ट श्रुत्वा शिष्य आह—

'नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ इति ।

अस्यायमर्थः—अहं ब्रह्म सुवेद सम्यग्वेदेति न मन्ये । तावता ज्ञानविषयतया नष्टं तदिति वा, सर्वथा ब्रह्म न जानामीति न मन्तव्यम् । अहं 'न वेदे'-त्यपि नो वेद । सम्यङ्न जानामि, किञ्चित्तु जानामीति यावत् । ॥ एवं न अस्माकं भवन्ति यथा मन्ये तद्वद मीमांसामिति भवदुक्तं वेद । ॥ तत् ब्रह्म वेद । एवं विवेकी, नाहं ब्रह्म वेदेत्यपि नो वेद । कृत्स्नज्ञानाभावेऽप्येवंरूपेण जानात्येवेति यावत् ।

एवं मन्त्रद्वयेन ब्रह्मण. सम्पूर्णतया दुर्महत्वं ज्ञेयत्व चैव निरूपित-मिति कथमनेन तृतीयेन मन्त्रेण तद्विरुद्ध सर्वथा ज्ञानविषयत्वानर्हत्वं ब्रह्मण्युच्येत । प्रथमपादस्य, यस्यामतमिति निश्चयस्तस्य मतमित्यर्थकत्वे 'इति निश्चय' इत्यस्य श्रुतेरलाभादुदक्षरत्वमपि ।

अतो मीमांस्यतया अविदितत्वाभाववत्त्वेन तदुपवर्ण्य, 'सु' इति निर्देशपूर्वक सम्यग्विदितत्वाभाव एव प्रागुक्त इति तदविरोधेनैवमर्थो वर्णनीय —यस्य ब्रह्म सुविदितमिति न मतम् । तस्य तत् यथावन्मतम् । यस्य सुविदितमिति मत, स न वेद । सुविदितमिति विजानतामविज्ञात, सुविदितमित्यविजानता विज्ञातमिति पूर्वमन्त्रे ब्रह्मविषयकश्रवणस्यात्र मन्त्र तद्विषयकमनननिदिध्यासनयोश्चाल्पविषयक बमुक्तमिति विवेक । एव न ब्रह्मैतावदिति परिच्छिन्नत्वेन ज्ञाने यथावस्थिततत्स्वरूपाज्ञानम्, परिच्छिन्नत्वेन ज्ञाने च यथावस्थितज्ञानमित्येव निष्कृष्ट भवतीति ।

सर्वथा ज्ञानाविषयत्वे च 'अमतमविज्ञात'मिति निर्देशोऽप्यनुपपन्न एव । शास्त्रवैयर्थ्यं च । ब्रह्मज्ञानान्मोक्ष इत्यादेरसिद्धिश्च । न च साधकावस्थायां ज्ञेयत्वेऽपि मुक्तावज्ञेयत्वमेव विवक्षितमिति शङ्क्यम्—तर्हि यस्यामत तस्य मतमित्यत्र मुक्तेर्भावितया भविष्यन्निर्देशो युक्त । न तु अमतमिति क्तप्रत्यय । यस्य मुक्तावमत तस्य सृष्टिकाल मतम् । यस्य मुक्तौ मत, स सृष्टिकाले न वेद इत्यर्थवर्णनेऽनुपस्थितमुक्त्यादिपदाध्याहार, तदा मुक्तौ जीवस्याभावात् यस्येति निर्देशायोग । द्वितीयपादे च मुक्तौ यच्छब्दार्थस्य मतत्वस्य चाप्रसिद्ध्याऽर्थस्य विघटमानता चेत्यादिदूषणमित्यल प्रक्रमविरुद्धार्थदूषणविस्तरेण । यतो वाच इति वाक्यार्थ प्रागेव विचारित ।

'न दृष्टेर्द्रष्टार पश्ये'रित्यत्र द्रष्टारमात्मानं दृष्टिव्यतिरिक्तं न पश्येरित्यर्थवर्णने जडत्वनिषेध सिद्ध्यत्येव। एवं 'व्यतिरिक्त'पदाध्याहारेणार्थवर्णनं च

भवत्पक्षे दृष्टितोऽधिकस्य द्रष्टुरभावस्थापनायाध्याहारस्वीकार इतिमभिप्रेत्य । तथा चाध्याहारे सम्मते द्रष्टृत्वनिषेध एव क्रियत इत्यत्र न नियामकं किञ्चिदस्ति । जडत्वनिषेधपरतयैवोपपत्ते । दृष्टिव्यतिरिक्ततायाः जडस्वरूपतया तदुक्तो जडत्वानिर्देशासम्भवात् । भाष्यस्थाज्ञानपदस्य जडस्यार्थमाकलयन् कथं श्रुतौ दृष्टिव्यतिरिक्तेति पदेन तमर्थं न गृह्णासि । द्रष्टृनिषेधपरत्वेन च दृष्टिमिति द्वितीयान्तं युक्तम् । वस्तुतस्तदा 'न द्रष्टारं पश्ये'रित्येतावदप्यलम् । अतो द्रष्टरि दृष्टिव्यतिरिक्तनिषेध एवाध्याहृत्य योजनापक्षे क्रियते । अनध्याहारेण योजनाऽपि भाष्ये दर्शिताऽस्ति । पाकं पचनीतिवत् प्रयोगस्वीकारेण दृष्टे कर्तारं जीवात्मानमित्यर्थ इष्यते। पूर्वोक्तमात्मानमीदृशजीवात्मस्वरूपं न पश्येरिति वाक्यार्थ इति ।

वस्तुतः शाङ्करोपनिषद्भाष्ये श्रुतिरियं ज्ञातृत्वनिषेधपरतया न व्याख्याता, अपि तु ज्ञेयत्वनिषेधपरतया । अत एवाविषयत्वनिराकरणपरत्वं श्रुतेरस्याः कल्पतरग्रन्थेऽप्युक्तम् । अतो भवत्सम्मतं व्यतिरिक्तपदाध्याहरणमद्विरुद्धं । दृष्टेर्द्रष्टारमित्यस्य दृष्टिकर्तारमित्यर्थवर्णनं भर्तृप्रपञ्चकृतमपि, द्रष्टारमित्यनेनैव तल्लाभात् दृष्टेरिति पदं व्यर्थं स्यादित्युपपादनेन शाङ्करभाष्य एव दूषितम् । तथा च दृष्टिद्रष्टारं न पश्येरिति नत्सम्मतोऽर्थः । तदिदं विविच्यते–दृष्टिरन्तःकरणवृत्तिविशेषः, तद्द्रष्टृत्वं च तद्भासकत्वं तत्साक्षित्वम् । तथात्मन इति, तमात्मानं, न पश्य नान्तःकरणवृत्त्या विषयीकुर्या इति । अत्र यथा गौरयमिति प्रदर्श्यते तथा शृङ्गग्राहिकयाऽऽत्मानमप्रदर्श्य प्राणनादिव्यापारेणात्मसाधनं कुत इत्याशङ्क्य, अविषयत्वादात्मनो गवादिवत् प्रदर्शयितुं न सम्भवतीत्युच्यते, 'न दृष्टेर्द्रष्टार'मित्यादिना । तत्र दृष्टेरित्यन्तःकरणवृत्त्युक्तिः । द्रष्टारमिति धातुना तद्विषयकभानं आत्मस्वरूपभूतं चैतन्यमुक्तमिति न पौनरुक्त्यम् । केवलं द्रष्टारमित्युक्तौ अन्तःकरणस्य घटादिद्रष्टृत्वात्तद्ग्रहणमापद्यत इति दृष्टेर्द्रष्टार-

मित्युक्तम् । यथा घटादिः कदाचित् दृश्यते, न दृश्यते च । न तथा दृष्टिः । साऽस्ति चेत्, भासत एव । अतो घटादिदृष्टिः कादाचित्की, घटे सत्यपि ज्ञानाभावात् । दृष्टिविषयप्रकाशरूपा तु दृष्टिर्नित्या, दृष्टौ सत्यामेतदभावाभावात् । अतो नित्ययाऽऽत्मस्वरूपभूतया दृष्ट्या अन्तःकरणवृत्तिरूपा दृष्टिः स्वतो जडभूता प्रकाश्यत इत्यादिदृष्टिद्रष्टृत्वमात्मन एव, नान्तःकरणस्य ; अन्यथाऽन्तःकरणवृत्त्यन्तरे सति प्रकाशः, न चेन्नेति दृष्टिप्रकाशस्य कादाचित्कत्वप्रसङ्गात् । एवं दृष्टिसाक्षित्वादात्मनो न दृष्टिविषयत्वम् । न खलु प्रदीपप्रकाश्यो घटः प्रदीपं प्रकाशयतीति ।

अयमर्थश्च श्रीभाष्ये पूर्वपक्षतयाऽपि नादृतः । एतदव्यवहितपूर्वमेव 'यस्यामतं तस्य मतम्' इति श्रुतिमुपादायात्मनोऽविषयत्वासम्भवस्योपपादितत्वात् तद्दूषणदूषितं, अविषयत्वार्थकत्वस्यायोगेन, 'न दृष्टेः' इति वाक्यस्य स्वपक्षस्थापनोपयोगि अद्वैतानुयायिसमादृतमर्थवर्णनप्रकारान्तरमुद्भाव्य दूषितम् । वस्तुतः प्रकृतश्रुतेरविषयत्वपरत्वं दुर्वचमित्यप्यभिसन्धिः । तथा हि— यद्यविषयत्वमात्मनो बुबोधयिषितम् । प्राणनादिलिङ्गेन प्राक् तत्साधनमपि तु शकम् ; अविषयत्वात् । यदि मननविषयत्वमिष्यते—तर्हि 'न मतेर्मन्तारं मन्वीथाः' इति वाक्यमनन्वितम् । अतो दृष्टेरित्यस्य पञ्चम्यन्तत्वस्वीकारेण व्यतिरिक्तपदाध्याहारेणार्थवर्णनं वरमिति । एवंयोजनायामपि द्रष्टृत्वनिषेधे न तात्पर्यम् । किं तज्ज्ञानस्वरूपत्वनिषेध इति श्रुत्याशयो दर्शितः ।

परं स्वत्र योजनायां न केवलं व्यतिरिक्तपदाध्याहारक्लेशः, किंतु दृष्टिमतिश्रुतिविज्ञातिशब्दैरवस्थाविशेषापन्नधर्मभूतज्ञानवाचिभिरात्मस्वरूपभूतज्ञानस्य ग्रहणेऽपि क्लेशोऽस्ति । अथापि शाङ्करभाष्यादृतव्याख्यायामपि द्रष्टारं मन्तारमित्यादौ धातुनाऽऽत्मस्वरूपभूतज्ञानस्य नित्यस्य वृत्तिविलक्षणस्य ग्रहणे स क्लेशोऽस्त्येवेति तादृशक्लेशसहमेव व्युत्पादनं प्रागादृतम् । स्वपक्षे त्वमूनक्लेशपरिहारायैव मतपरापरदर्शिना योजनैव पश्चात् भाषिता, 'दृष्टेः

कर्तारं न पश्ये'रिति ।

यद्यपि योजनेयं शाङ्करभाष्ये दूषिता ; तथापि अर्थान्तरस्यानुपपन्नत्वात् पाकं पचतीतिवत् प्रयोगमभ्युपगच्छेयमेवादृता । यथा दृष्टेर्मतेरित्यत्र वैयर्थ्यम् , तथा शाङ्करयोजनायां तृच्प्रत्ययो व्यर्थ एव ; दृष्टेर्दृष्टिं न पश्येरित्येव पर्याप्तत्वात् । द्वितीयदृष्टिपदस्यात्मभूतचैतन्यपरत्वात् । तृच्प्रत्यय एवार्थे क्लेश ; स्वस्मिन् स्वकर्तृत्वाभावात् । अतोऽन्तःकरणगतं कर्तृत्वं वृत्तिगतं धर्मित्वं च चैतन्यस्वरूप आरोप्य द्रष्टारमिति वाचोयुक्तिरिति वक्तव्यम् । अतो धातुना स्वरूपचैतन्यमङ्गीकृत्य तद्गतधर्मित्वतृजर्थकर्तृत्वयोरुपपादने क्लेश ; तृजैयर्थ्यं ; धर्मभूतज्ञानातिरिक्तान्तःकरणवृत्तिरूपदृष्ट्यनङ्गीकारात् आत्मस्वरूपज्ञानस्य च दृष्ट्यादिभासकत्वास्वीकारात् आत्मस्वविषयत्वाभ्युपगमाच्चार्थबाधोऽपीत्यतदपेक्षया पाकं पचतीतिवद्धातुवैयर्थ्यपरिहारो युक्ततर इति भाष्याशय ।

अत्र दृष्टेरित्यादेः पञ्चम्यन्ततास्वीकारेणान्यथाहारेण मुमुक्षुकर्तव्याभिः दृष्टिश्रुतिमतिविज्ञातिभि द्रष्टादिरूपो जीवात्मा न विषयीकर्तव्य किन्तु तदन्य परमात्मेति प्रकृतश्रुत्योच्यत इत्यपि सुवचम् । एव दृष्टेरिति पञ्चम्यन्तत्वादेव पश्यारित्येवं तदनुसारेण तद्धातुप्रयोग । 'अन्यथा न गृह्णीया' इत्येकरूपप्रयोगौचित्यात् । तथा च दृष्टश्रुत्यादिषु जीवात्मा कर्ता, न तु स एव कर्म ; किं त्वन्य परमात्मा कर्मेति श्रुत्या प्रोच्यत इति ।
, अथ वेत्यादिश्रीभाष्यसूक्त्याऽयमर्थोऽप्युच्यते । तत्रापि दृष्टेरिति पञ्चमी 'प्रतिपिद्धये'त्यत्रान्वेति । द्रष्टार दृष्टेत प्रतिपिद्धय दृष्टिविषयमकृत्वा परमात्मैव प्रधानतयोपास्य इति श्रुत्यर्थ इति । न च 'विभाषा गुणेऽस्त्रिया' इति स्त्रीलिङ्गे हेतुपञ्चमी न सम्मतेति वाच्यम्–'नास्ति घटोऽनुपलब्धे', 'अनुपपत्तेस्तु न शारीर' इत्यादिप्रयोगबलेन तत्सम्भवस्य वैयाकरणसम्मतत्वात् ।

अथापि न पश्येः, न शृणुया इत्यादिभिरेव मुमुक्षुकर्तव्यदृष्टिश्रुतिमतिविज्ञातीर्भिर्न विषयीकुर्या इति विवक्षितार्थलाभात् भर्तृप्रपञ्चादृतमेव भाष्यार्थतया श्रुतप्रकाशिकादावादृतम्। दृष्टेरिति पञ्चम्यन्तं च नातिव्यर्थम्। या दृष्टिः द्रष्टव्य इति वाक्यविवक्षिता तां प्रति यो द्रष्टा भवति तं द्रष्टं न जानीया इत्युपपादनशैल्या शोभनत्वादिति। एवं 'दृष्टेः श्रुते'रित्यादेः पञ्चम्यन्तत्वे चक्षुरादिकरणवाचित्वे च स्वीकृत्य दृष्टेर्द्रष्टारं करणायत्तदर्शीनत्वेन न पश्येरित्यर्थपरत्वमपि 'अथ वे'त्यादिश्रीभाष्यसूक्तेर्युज्यते। अत एव अन्तराभूतग्रामाधिकरणे श्रुतिमेनामुपादाय 'इन्द्रियाधीनानां दर्शनश्रवणमननविज्ञानानां कर्तार'मिति भाषितम्। एवं च करणायत्तत्वप्रतिपादनेन जीवात्मनो द्रष्टारमित्यनेन ग्रहणाय दृष्टेरिति पदमपि सार्थकम्। यत्किञ्चिदवाचि समुचितोऽर्थोऽस्तु सर्वथाऽत्र द्रष्टृत्वाद्यनिषेधात् आत्मनो ज्ञातृत्वमबाध्यमिति।

'विज्ञातारमरे केन विजानीयात्' इति श्रुत्यन्तरेणाप्यात्मनो ज्ञातृत्वं स्पष्टम्। पूर्वं आत्मा वा अरे द्रष्टव्य इत्युक्तमात्मानं, 'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय' इति मध्ये विज्ञानघनशब्देन, अन्ते 'विज्ञातारमरे केन विजानीया'दिति विज्ञातृशब्देन च निर्दिशन्तीयं श्रुतिरात्मनो विज्ञातृत्वं स्वाभाविकं दर्शयति। यत्त्विह 'केन विजानीया'दिति न केनापि विजानीयादित्यर्थस्योक्तत्वात् ज्ञेयत्वनिषेधः सिद्ध्यतीति तन्न—उपक्रमे 'आत्मा वा अरे द्रष्टव्य' इत्यादिनाऽवश्यज्ञेयत्वमुपपाद्य तस्य ज्ञेयत्वं कथं भवे-दित्युपसंहारे वचनं हि दुर्ग्रहत्वात्सावधानमुपास्यत्वमेवाभिप्रयात्, न तु सर्वात्मना ज्ञेयत्वाभावम्। न च निर्गुणस्य ज्ञेयत्वं न भवतीति वाच्यम् निर्गुणत्वासिद्धेः। विज्ञातारमिति सगुणत्वस्यैवोक्तत्वात्। न च सगुणयुग्मनेऽप्यज्ञेयम्। अतः यदि परमात्मनि प्रीतिर्न स्यात्, यदि च परमात्मा स्वयमात्मानं न ज्ञापयति, तर्हि न केनाप्युपायेनैव विज्ञातुं शक्य

इति प्रकृतश्रुतेर्भाव, 'नायमात्मा प्रवचनेन लभ्य' इति श्रुतिविषये श्रीभाष्यदर्शितया दिशा मन्तव्य इति।

यदपि (पृ १२७) ब्रह्मणि न लेशोऽपि भेदस्यावसर, नेह नानास्तीत्यादिश्रुतिभिर्भेदनिषेधदर्शनात्। भिन्न इति व्यवहारो द्विविध — यथा–पृथिवी जलाद्भिन्ना, पृथिवी घटपटादिभेदेन भिन्नेति च। तत्र द्वितीय अवान्तरभेदविशिष्टरूपो भिन्नपदार्थ 'नाना'शब्दवाच्य। तथा मोक्षार्थे नानादर्शने मृत्युप्राप्तिवचनात् इह जगतीदृशनानात्वनिषेधोऽत्र क्रियते। तस्य चैकत्वेन दर्शनविधाने तात्पर्यम्। नानाभूताना च पदार्थानामेकत्वेन दर्शनमेकोपादानकत्वेन दर्शनरूपम्, कारणात्मकैकोपादानकत्वमन्योन्यत्वात्—इत्युक्तम्–तत्र विचित्रो विरोध। तथा हि–यदि जगति नानात्वनावलोकननिषेध श्रुत्यर्थ, तर्हि ब्रह्मणि भेदनिषेध कथमत्र सिद्ध्यति? एव नानात्वेनावलोकनमेव निषिद्धम् न तु नाना त निषिद्धमिति कथ भेदाभाव। कथ च प्रत्यक्षादिप्रमाणैरन्यथासिद्धस्य नानात्वदर्शनस्य निषेध। घटशरावादित्वेनावान्तरभेददर्शनस्य मृद्रूपैकोपादानकत्वज्ञानस्य च यथा न मिथो विरोध, तथा जगत्यवान्तरभेदरूपनानात्वस्य एकब्रह्मोपादानकत्वस्य च नास्ति विरोध इति एकोपादानकत्वविज्ञाने सति नानात्वदर्शन कथ न भविष्यति। अवान्तरभेददर्शनानिषेधे एकोपादानकत्वदर्शन वा कथ लभ्यते। एकोपादानकत्वविधिना नानोपादानकत्वनिषेधस्तु शक्य कर्तुम्। ईदृशैकोपादानकत्वस्यास्माकमपि सम्मतत्वात् कथमनया श्रुत्याऽस्मत्पक्षदूषणमिति। किं चेहेत्यनेन जगद्ग्रहणे 'तत्रावान्तरभेदो नास्ती'त्युक्तौ जगदस्ति, तत्रावान्तरभेदो नास्तीति सिद्ध्यति। न च दृश्यमाना भेदा अपलपितु शक्यन्ते। अत एव हि भेदनिषेधायोगात् तद्दर्शननिषेधादौ तात्पर्यमिति त्वया कष्ट सम्पादित। अतोऽद्वैतेन ब्रह्मात्मत्वाब्रह्मात्मकत्वरूपोऽवान्तरभेदो जगति नास्तीत्युक्तौ न कश्चिद्दोष। एतेन

नानाशब्दस्य ब्रह्माभिन्नमित्यर्थस्वीकारे ; लक्षणा स्यादिति निरस्तम् अवान्तर-भेदस्यैव नानापदार्थत्वोक्तेः ।

एवं 'इहेत्यनेन ब्रह्मग्रहणमेव' इत्यपि सुवचम् , तस्य प्रस्तुतत्वात् तथा च कठवल्ल्यां शाङ्करभाष्यम्–[२. ११] 'इह ब्रह्मणि नाना नास्ति , किञ्चन, अणुमात्रमपि । यस्तु–इह ब्रह्मणि नानेव पश्यति....' इत्यादि । नानाशब्दस्य नानात्वमवान्तरभेदोऽर्थ इति च भवतोक्तम् । तथा च ब्रह्मण्यवान्तरभेदो नास्तीति श्रुत्यर्थे सिद्धे अनेकब्रह्मनिषेध एव कृतो भवति, न जगत्प्रतिषेध इति ।

एतदुक्तं भवति–कठवल्ल्यां बृहदारण्यके चायं मन्त्रः पठ्यते । पूर्वत्र [२. ४. ११] 'मनसैवेदमाप्तव्य'मिति, द्वितीये [४.४. १९] 'मनसैवानुद्रष्टव्य'मिति च भेदः । तत्र कठवल्ल्यां तदव्यवहितपूर्वं, *यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥'* इति मन्त्रेण इहामुत्र च स्थितं ब्रह्मैकमित्युक्त्वा तत्र भेदबुद्धिर्निषिद्ध्यत इति स्पष्टम् । तथा च तदव्यवहितोत्तरमन्त्रेऽस्मिन्, यथापूर्वमन्त्रोक्तरीत्या इहामुत्र च ब्रह्म नानेति बुद्धिर्न युक्ता ; तथा इहैव ब्रह्म नाना सृष्टिस्थित्यादि-कार्यभेदेन वा प्रकारान्तरेण वेति नानात्वबुद्धिर्न युक्तेत्युच्यत इति वा, यद्वा न केवलमिहामुत्र च ब्रह्मणि भेदो नास्तीति, 'किं तु *सम्भावितप्रकारान्तरे*-णापि ब्रह्मणि भेदो नास्तीत्युच्यत इति स्वीकार्यम् । अतस्तदैकार्थ्यात् बृहदारण्यकेऽप्येवम् । तत्र तदुत्तरमन्त्रपर्यालोचनयाऽपि निषिद्ध्यमानं *नानात्वमेतादृशमिति निश्चेतुं शक्यते । तथा हि*—'एकधैवानुद्रष्टव्य-मेतदप्रमेयं ध्रुवम् । विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥' इत्य-यमुत्तरो मन्त्रः । ब्रह्म तदेकप्रकारेणैव द्रष्टव्यम् । स च प्रकारः अप्र-मेयत्वविरजस्त्वादिः । तथाचाप्रमेयमपरिच्छिन्नमेकं ब्रह्म परिच्छिन्नमन्यत्, विरज एकम् । सरजोऽन्यत् इत्येवं ब्रह्म नानाविधं न मन्तव्यमित्युच्यते ।

अत्र आकाशात्पर इति सर्वकार्यनिरूपितसर्वविधकारणत्वस्य आत्मन आकाशः सम्भूत इत्यादावगतस्य ज्ञापनात् किञ्चित्प्रति कारणमकारणं चेति द्वैविध्यनिषेधात् सृष्टिस्थितिसंहारादिसर्वकारणत्वैश्वर्यलाभः; अजो ध्रुवः इति सर्वकालसत्त्वज्ञापनात् कालभेदेन ब्रह्मभेदपरिहारः; महानिति सर्वव्यापित्व-कथनात् देशभेदेन तद्भेदपरिहारः; आत्मेति सर्वनिरूपितनिरुपाधिकात्मत्व-स्यैवम्भूते वचनात् किञ्चित्प्रत्यात्मा ऽनात्मा चेति वैविध्यनिरासः; एवमात्म-त्वात् स्वामिभूतस्य विरजस्त्ववर्णनात् स्वामिना विभूतिषु सर्वत्राभिमानस्य सहजतया वैषम्यराहित्यावगमात् सर्वत्रैकरूपता लाभश्चेत्येवमनुदृष्टव्ये ब्रह्मणि एतद्विरुद्धं नानात्वं न द्रष्टव्यमिति पूर्वमन्त्रेण वर्ण्यत इति । अत शास्त्र-प्रत्यक्षसिद्धस्य भेदस्य नास्तीत्यपलापायोगादेवमेवार्थः । वस्तुगत्या भेदा-भावे च सति भेदबुद्धिरपि न निषेद्धव्या, वस्तुगत्या मृत्युप्राप्तिरसम्भवेन च निन्दाया अपि नावसरः । तत्सर्वसत्त्वे च भेदापलापोऽपि दुष्कर इत्यलम् ।

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति श्रुतौ द्वैतशब्द-स्यावान्तरभेदमूलकं द्वित्वं प्रवृत्तिनिमित्तमिति यदुक्तं तन्नावान्तरेति व्यर्थम् लाघवात् । इतर इतरमित्यनुवादाच्च सामान्यतो भेदस्य सुग्रहत्वात् । अस्मन्मते श्रुत्यर्थस्तु—सर्वान्तर्यामिभूतपरमात्माज्ञाने पुरुष इतरो भवन्नितर पश्यति । इन्द्रियादिना पदार्थं गृह्णन् भोक्ताऽन्यः, भोग्यमन्यत्, भक्ष-णसाधनमन्यदिति मन्यते । सर्वात्मभूतवस्तुज्ञाने तु भक्षणकर्तृकर्मसाध-नानां ब्रह्मरूपेण ग्रहणात् भेदबुद्धिर्नास्तीति संक्षेपः ।

यत्तु—'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इति वाक्ये नानात्वानुसन्धानस्य शान्तिहेतुत्वलाभः कथम्? ब्रह्मैकत्वरूपैक्य-ज्ञानस्यैव तद्धेतुत्वादिति तत्र वक्तव्यं सर्वमुपपादितमेव भाष्ये । ब्रह्मात्म-कत्वज्ञानं हि किञ्चिदुद्देश्यकं किञ्चिद्विधेयकम् । तत्र ब्रह्मात्मकत्वं विधे-यम्, उद्देश्यं तु सर्वम् । देवतिर्यङ्मनुष्यस्थावररूपनानात्वमुद्देश्यतावच्छे-

दकम् । ईदृशदेवादिभेदरूपनानात्वाविषयकस्य ज्ञानस्य शान्तिहेतुत्वाभावान्नानात्वानुसन्धानं शान्तिहेतु । तच्च नानात्वानुसन्धानं तत्त्वज्ञानरूपम्; न त्वाहार्यमिति तेन ज्ञानेन नानात्वाश्रये निर्विकारनिरतिशयकल्याणगुणगणब्रह्माभेदग्रहणासम्भवादसत्सिद्धान्तसिद्ध ब्रह्मात्मकत्वमेव गृह्यते । तथा च देवादिचेतनान्तरकार्याणां स्वप्रतिकूलानां कर्मफलप्रदतदन्तर्याम्यधीनत्वनिश्चयात् तेषु न द्वेष इति शान्तिरप्रकम्प्या । एवं तत्तत्सम्बन्धिनामनुकूलाशानामपि भगवत्स्वामिकत्वानुसन्धाने सति स्वकीयत्वबुद्धिनिवृत्त्या तादृशानुकूलान्शार्थेनेषु फलेषु स्वगतभगवच्छेषत्वबुद्ध्यापादितया स्वार्थत्वबुद्धिनिवृत्त्या ईश्वर स्वार्थे स्वाभिमतौ सत्यां तत्तद्घटयति । न मदर्थमिति बुद्ध्या च स्वस्य तेषु रागोऽपि न भवतीति शान्तिरभ्यूह्या । अस्मदभिमतशरीरात्मभावरूपसम्बन्धेन च नियन्तृनियाम्यभावस्य स्वस्वामिभावस्य च लाभात् सर्वसिद्धि । एतेन नानात्वानुसन्धाने सति जातुचित् द्वेषक्षयेऽपि रागवृद्धिरेवेत्येतदपास्तम् ।

भवन्मत एव शान्तिर्दु साधा, ऐक्यबुद्ध्या स्वात्मनीव परमात्मन्यपि रागस्य सम्भवेन तस्य वृद्धे । एवं जडजीवात्मकप्रपञ्चरूपसर्वपदार्थान्तर्गत जड ब्रह्मैक्यस्यासम्भवात् बाधार्थसामानाधिकरण्यस्यैव वाच्यतया जगन्मिथ्यात्वज्ञाने सति अनुकूलप्रतिकूलवस्त्वभावादेव रागद्वेषाभावावुपपादनीयौ । तत्र मिथ्यात्वज्ञानेऽपि व्यावहारिकसत्यत्वेन आमुक्ति अनुकूलप्रतिकूलसद्भावेन तदधीनानां कार्याणामपि भावात् रागद्वेषावपरिहार्यौ , वस्तुबाधात्प्राक् तत्सम्बन्धिकार्यबाधाभावात् । अतस्तावद्वस्तुविषयवृत्तिज्ञानवानहमर्थ स्वसत्तावधि रागद्वेषभागेव भवेत् । तथा च मिथ्याभूतवस्त्वधीनमिथ्याभूतरागद्वेषकल्लोलक्षोभितस्य कथं शान्ति ? अन्यथा सर्वोऽपि शान्त एवेति किमिति मत्तज्ञानम् । आत्मा तु निर्विशेष सर्वदैव शान्त । अन्त करण तु यावत्स्वसत्त्व चाञ्चल्यसत्त्वादशान्तमेव । अपि च वस्तुषु सत्सु रागद्वेषा-

भाव शान्ति न तु वस्तुप्रळय एव शान्तिरिति । अतो नानात्वानुसन्धा नमेव शान्तिहेतुरिति ॥

यदपि [पु १२९] 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते' इत्यत्र अन्तरशब्दो भेदपर , न तु अवकाशपर । न हि ब्रह्मणोऽवकाश छिद्र वा कर्तुं कश्चि समर्थ । प्रतिष्ठाया विच्छेद कुरुत इत्युक्तौ एतस्मिन्नन्त रमिति एतत्सम्बन्धि वेन ज्ञायमानस्यान्तरस्य प्रतिष्ठासबन्धित्वकल्पनस्यैवायु क्तत्वापत्ति । श्रुतानुमितयो श्रुतसम्बन्धो बलीयानिति न्यायादित— तत्र —अच्छेद्य इवाभेद्ये ब्रह्मणि भेदमपि कर्तुं क समर्थ इति । भेद ज्ञा नातीन्यर्थस्वीकारे च लक्षणा , न च प्रतिष्ठापदाध्याहारोऽस्माकम् । ब्रह्मणि प्रतिष्ठा हि तत्रैव स्थिति , निरन्तरतत्सम्बन्ध सर्वदा तदनुभवशा लित्वम् । तस्मिन्नन्तर च स्वस्य ब्रह्मणश्च मध्ये अवकाश । विन्ध्यहिमव तोरन्तरमिति यथा । अवकाशश्चासम्बन्ध ब्रह्मणयसम्बन्धश्च ब्रह्मविषयक ज्ञानाभाव । स एव च प्रतिष्ठाविच्छेद इत्यप्युच्यत इति । अवश्य च पूर्वं अभय प्रतिष्ठा विन्दते' इति प्रतिष्ठाया निर्देशात् तत्प्रतिकोटिनिर्देश स्थलेऽत्र अन्तरशब्देनाप्रतिष्ठाया वक्तव्यत्वात् प्रतिष्ठापदस्याध्याहार्यत्वेऽपि ॥ एवार्थो वर्णनीय , ॥ भेदरूपोऽर्थ । वस्तुगतिस्तावत् प्रकरणवशादित्थम् । भेदार्थकत्वस्वीकारेऽपि न न क्षति , नानात्वनिषेधश्रुतिवदुपपत्त । भवद भिमतभेदानर्थधरीतो स्वारस्य बाहुल्य श्रुतप्रकाशिकायां द्रष्टव्यम् ।

---

यच्च निर्गुणतात्पर्यं स्मृतिवाक्येषु दृश्यते ।
पुराणेऽपि च जागर्तीत्येतदित्थ परास्यते ॥

निर्विशेषे ब्रह्मणि प्रमाणतया सूत्रमन्वेषयता भवता 'न स्थानतोऽ पि परस्योभयलिङ्ग सर्वत्र हि' इति सूत्रमुपादाय तस्य व्याख्यान यत् कृतम्— परस्य ब्रह्मण उभयलिङ्ग सविशेषनिर्विशेषलिङ्गम्, स्वभावतस्तु नास्त्येव ,

स्थानतोऽपि नास्ति, यत सर्वत्र निरस्तसमस्तविशेषमेव श्रूयत इति–व्याहृतम्। न हि ब्रह्म सविशेषमपि न भवति, निर्विशेषमपि न भवति, निर्विशेषतया श्रुत्युक्तत्वादिति वाक्यमन्वितार्थं; निर्विशेषतया श्रुत्युक्तत्वे निर्विशेषत्वनिषेधासम्भवात्; श्रुत्युक्तस्वरूपविशेषवत्तया सविशेषतया सविशेषत्वे सविशेषत्वनिषेधायोगाच्च । एतेन–पृथङ्निर्विशेषत्वनिषेधो नोच्यते । सविशेषत्वविशिष्टनिर्विशेषत्वमेव निषिध्यते । निर्विशेषत्वस्वीकार एव तात्पर्यम्–इत्यपि निरस्तम् । एकतरमात्रनिषेधस्य सूत्रकृदभिमतत्वे सविशेषमिति सूत्रणस्यैव युक्तत्वात्; उभयलिङ्गमिति व्यर्थनिर्देशायोगात् । उभयं लिङ्गमिति व्यस्यानुक्त्वा समासकरणेन भवद्व्याख्य इव सूत्रेऽपि बहुव्रीहिरेव स्वरस इति 'परमुभयलिङ्गमिति वक्तव्ये परस्येति षष्ठीनिर्देशोऽप्यधिकः, अनन्वितश्च । अत उभयलिङ्गमित्युत्तरान्वयि । स्वप्नादिजीवावस्थानामेव प्रकृतस्तुतत्वात्, 'न स्थानतोऽपि परस्य ता; यस्मात्सर्वत्राखिलहेयप्रत्यनीकत्वकल्याणगुणाकरत्वात्मकोभयलिङ्गकं तदुच्यते' इति सूत्रार्थ इति सूत्रमिदं सविशेषपरमेव । एतेन 'न स्थानतः' इति वक्तव्येऽवस्थावत्त्वस्य प्रतियोगिनोऽध्याहारकल्पनमन्याय्यमिति निरस्तम्—यथा स्वप्नसुषुप्तिमरणाद्यवस्थावत्तया जीवस्य, न परस्येति वाक्ये निषेध्यानुक्तिरूपदोषो न प्रसजति, तथैव प्रकृतेऽपीति हि पूर्वसूत्रगणपरामर्शिना सुगममित्यलं बहुना ।

'न द्वैतं नापि चाद्वैतमित्येतत्पारमार्थिकम्' इति दक्षस्मृतिश्चेत् [७. ४. ६] तत्प्रमाणम् । किमित्यद्वैतामोदो विधीयते । किमनोद आमोदो वा स्यादितोऽद्वैतिनामिति विभाव्यमेतत् । निषिध्यते ह्यद्वैतमपि । द्वैतस्याद्वैतस्योभयस्याप्यपारमार्थिकत्वाविशेषे द्वैतस्थापनमयुक्तमाकृत्याद्वैतस्थापनाय क्रियमाणः सर्वः प्रयासो हि व्यर्थ एव । सर्वथा शब्दावाच्यस्य च शब्दतः स्थापनं दुष्करम् ।

'यो मामजमनादिं च वेत्ति लोकमहेश्वरम्' इति गीतायामपि भगवा-

नादित्वयोरभावरूपत्वान्न ब्रह्मण सविशेषत्वमिति वचनम्—'मां' 'लोकमहेश्वर'मित्युक्त अभावातिरिक्त अहमर्थत्व-सर्वविशेषणमलोकमहेश्वरत्वरूपविशेषद्वयानवधानमूलकम् । 'मत्स्थानि सर्वभूतानी'त्युक्त भूताधारत्वादि न वास्तवम्, किं तु प्रकृतिसम्बन्धमूलकम्, अनादित्वान्निर्गुणत्वादिति निर्गुणत्वकथनं तु इत्यपि न युक्तम्—गाथाया प्रयुक्तस्य गुणशब्दस्य सत्त्वरजस्तमोरूपप्राकृतगुणपरत्वात् तन्निषेधस्य च स्वाकर्माधीनत्वात् तावता भूताधारत्वाद्यप्राकृतस्वाभाविकगुणसद्भावे विरोधाभावात् ।

श्रीविष्णुपुराणेऽप्युपदिष्टाना गुणविशेषाणामौपाधिकत्वकल्पने प्रमाणमेव न लभ्यते । अप्रमेयोऽक्षयत्वोक्तिरात्मनि नीलपीताद्यभावात् । पाणिपादाद्यप्रयुतत्वोक्तिर्निष्कलस्य तत्स्वरूपस्य पुरुषविषयत्वाभावात् । ज्ञानस्वरूपमखिलं जगदेतदबुद्धय । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे' इति वचनं लोकसिद्ध देहात्मभ्रम दर्शयति । तत्र ज्ञानस्वरूपे 'अखिल जगदि'ति प्रयोगादेकैकस्मिन्नपि व्यष्टिपदार्थे चिदनुप्रवेश इति जीवनानात्व स्पष्टमुच्यते । देवाद्यर्थस्वरूपतामात्र इह भ्रमत्व ज्ञानस्योच्यते । न जगद्ग्रहणांशेऽपि भ्रमत्वम् । 'विज्ञान परमार्थो हि द्वैतमिथ्यात्वदर्शिन' इत्यत्र द्वैतमिथ्यात्वदर्शन नाम सर्वेषा सत्त्वाविशेषेण सर्वदा ज्ञानस्वरूपपु कश्चिदात्मा ज्ञानस्वरूप, कश्चिज्जडस्वरूप , आत्मा देवमनुष्यादिशरीरपरिमितेः ज्ञानस्वरूप, शिलादिस्थावररूपत्वे जडस्वरूप इत्यीदृशद्वैतमिथ्यात्वदर्शनमिति न तत् जगदपलापाय भवति । 'त्यज भेदमोहम्' इति वाक्य च, एकं निरात्मकम् अन्यत् सात्मकम् , एक आत्मा यादृशो न तादृशोऽपर आत्मा, देवादिदेहस्यैवात्मत्वादस्त्येव वैषम्यमित्यत्र भेदमोह त्यजेत्याह । 'भूतयोनिमकारण'मित्यत्राकारणपदेन भूतयोनित्वनिषेध इति च न युक्तम् , भूतयोनिपदप्रमितार्थनिषेधस्यासम्भवात् । अतो बहुव्रीहिवृत्तमिदं भगवत कारणमुत्पादकं किञ्चिन्नास्तीति प्रतीति, 'न चास्य कश्चिज्जनिते'तिवत् ।

लो पृथेव लाक्षणिकप्रयोगेन दृष्टान्तोपन्यासनम् ।

पा॰-(पृ. १९२) 'अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज । पूजायां भगवच्छब्दः क्रियते ह्यौपचारिकः ॥' (६.५.७१वि) इति वचनाद्भगवच्छब्दो ऽयं ब्रह्मण्यौपचारिकः । तथा च 'शुद्धे महाविभूत्याख्ये' इत्यादीनुत्तरश्लोकान् सर्वेऽपि तथा रूपयन्ति पूर्वश्लोके एवैतासां मा भूदिति महदाश्चर्यम् — इति - मायावादमतनिर्दिष्टवचनस्याभ्युपगमवचनम् — एवं हि वदन्तो मत पूर्वश्लोके पूर्वोक्तस्य शब्दगोचरत्वे च इष्टवाते न मायावादप्रसङ्गादिति विशेषतो नयेत । तथा हि । अत्र 'द्वे ब्रह्मणी वेदितव्ये' इति श्लोकेनादिष्टं शब्दब्रह्म, परं विष्णुस्वरूपमिति ब्रह्मद्वयं प्रकृत्य, 'तदेव भगवद्वाच्यं स्वरूपं परमात्मनः । वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥' इति तस्य वाच्यस्याभिधानं भगवच्छब्दवाच्यत्वमभिधाय, 'एवं निगदितार्थस्य सत्तत्त्वं तस्य तत्त्वतः । ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् ॥' इति श्लोकेन उक्तभगवच्छब्दवाच्यस्वरूपाधिगमकं शब्दब्रह्म गृहीत्वा, तस्मिन् शब्दब्रह्मणि भगवच्छब्दप्रयोग औपचारिक इति 'अशब्दगोचरस्यापी'ति श्लोकेनोच्यते — अशब्दगोचरस्य प्रकृतभगवच्छब्दवाच्यस्य परब्रह्मगोचरप्रमाणभूतस्य तस्य शब्दरूपस्य तदधीनस्य ब्रह्मणो भगवच्छब्दः अर्थप्रतिपादकत्वरूपगौरवपुरस्कारेण उपचरितो भवति, भगवान् वेदः, भगवती श्रुतिरित्येवमिति । तस्यायमेकोऽन्वयार्थः । उपरि च, 'एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥' इति विस्पष्टवचने, लक्षणां विना तस्य शब्दस्य ब्रह्मणि वर्तमानत्वं तथापि यौगिकत्वं रूढत्वं च वस्त्वन्तरे तत्प्रयोगस्यौपचारिकत्वं लाक्षणिकत्वात्मकं कण्ठोक्तम् । अतः पूर्वोक्तव्याख्यार्थानिपुणमूलं ते वचनमिति प्रकरणमिदं ब्रह्मणो भगवच्छब्दवाच्यत्वमिव

सर्वशब्दब्रह्मगम्यत्वं निरूपयत् सविशेषत्वमेव द्रढयतीति ।

यदपि— (पृ. १३३) 'ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्' इत्यत्रार्थपदेन देवमनुष्यादिमात्रग्रहणेन सङ्कोचकल्पनमयुक्तम्—न हि 'रज्जुः सर्पस्वरूपेण भ्रान्तिदर्शनतः स्थिता' इत्युक्तौ सर्पपदेन कृष्णसर्पमात्रग्रहणं भवतीति—तदपि न—ज्ञानस्याप्यर्थपदार्थत्वेन तद्व्यतिरिक्तग्रहणेन त्वदुक्तसङ्कोचस्य त्वयाप्यावश्यकत्वात् । अस्मन्मते देवमनुष्यादिमात्रे सङ्कोचाभावाच्च । भ्रान्तिदर्शनं येषां सम्भावितम्, तादृशाः सर्वेऽर्था अर्थपदेन गृह्यन्त एव । सर्वस्यापि पदार्थस्य सजीवत्वेन सर्वत्र भ्रान्तिदर्शनसम्भवेन देवमनुष्यादिमात्रसङ्कोचस्यानवसरत्वात् ॥ 'जगद्ब्रह्मणोः सामानाधिकरण्यैक्यप्रतीतेर्ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते जगन्मिथ्यात्वसिद्धिः' इत्युक्तमप्ययुक्तम्—अर्थाकारताया भ्रान्तिसिद्धत्वे सामानाधिकरण्यैक्यप्रतिपादनायोगात् । तदा बाधार्थं हि सामानाधिकरण्यम् । न हि सत्यमिथ्यावस्तुनोरैक्यसम्भवः । अतः सामानाधिकरण्यैक्यप्रतीतिः । ज्ञानस्वरूपस्यार्थाकारताभ्रान्तिरित्यंशद्वयेऽन्यतरस्य परित्याग एव भवन्मते । अस्मन्मते पुनरुभयमपि सुस्थम् ।

अत एव (पृ. १३४) 'जगच्च सः' इति सामानाधिकरण्यबलात् जगन्मिथ्यात्वसिद्धिरित्यपि निरस्तम्—सामानाधिकरण्येनैक्यसिद्धौ ब्रह्मण इव जगतोऽपि सत्यत्वस्यैव सिद्धेः । किं च 'जगच्च सः' इति वाक्यं न विष्णुजगतोः उपादानोपादेयभावपरम्; किन्तु शरीरात्मभावपरम् । 'यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम्' इति मैत्रेयप्रश्नस्य यन्मयं च जगदित्यंशस्योत्तररूपत्वादुक्तवाक्यस्य । न च तत्रापि मयटो विकारार्थत्वात् 'यद्विकारभूतं जगद्ब्रह्मन्नित्युपादानप्रश्न एवेति शङ्क्यम्—'यतश्चैतच्चराचरम्' इत्यनेनोपादानस्य पृष्टत्वात् । न च तत्र निमित्तकारणमात्रप्रश्नः, सङ्कोचे प्रमाणाभावात् उभयसिद्धेः । एवमेतदुत्तरवाक्ये 'विष्णोः सकाशादुद्भूतं जग-

यत्रैव च स्थितम् । स्थितिसंयमकर्ताऽसौ जगतोऽस्य 'जगच्च सः' इत्यत्र प्रथमपादेन निमित्तोपादानकारणत्वस्य विष्णावुक्तत्वात्—'जगच्च सः' इति नोपादानोपादेयभावपरम् ।

अथ उद्भूतमिति श्रवणात् 'भुवः प्रभव' इत्यनुशासितपञ्चमीस्वीकारे उपादानकारणोक्तिर्न भवति ; किन्तु निमित्तोक्तिरेव । 'जनिकर्तुः प्रकृति'-रित्यनुशासितपञ्चमीस्वीकारे चोपादानमेवोच्येत ; न निमित्तम् । अतः कथ-मुभयसिद्धिः । अतो यतश्चराचरमित्यत्र पञ्चमी निमित्ते ; मयट् च विकार इति चेत्—जन्माद्यधिकरणे हि 'यतो वा इमानि भूतानि जायन्ते' इति वाक्ये एकपञ्चमीश्रवणेऽपि निमित्तोपादानोभयविधकारणत्वसिद्धिः सर्वा-भिमता । अत एव प्रकाशात्मादिभिर्विवरणकारैरन्यैश्च व्याख्यातृभिर्भामत्याम-दर्शि । शाङ्करभाष्ये च यथावत् पश्यतां निमित्तोपादानोभयविधत्वस्वीकारः स्पष्टः । एवं च श्रुत्यनुसारेण 'यतश्चैतच्चराचर'मिति वाक्येऽपि तदेव 'यत'पदं तदर्थकमवसीयते ।

कथमनुशासनविरोधपरिहार इति चेदित्थम्—नात्र 'भुव प्रभव' इत्यस्य प्रसक्तिः । जनिकर्तुरिति सूत्रमपि न गृह्यते ; किन्तु 'अइउण्' इति सूत्रे 'विकारभेदात्' इति भाष्यनिर्देशात्, धूमादग्निमानिति प्रयोगबलाच्च 'विभाषा गुणेऽस्त्रियाम्' इति सूत्रे विभाषेति योगविभागं विधाय, अगुणेऽपि हेतौ पञ्चम्यनुशासनस्याभिमतत्वादिहापि हेतुपञ्चमीस्वीकारेण द्विविधहेतुत्वलाभ इति । अत श्रुत्यनुसारेणोपबृंहणमेतदर्थकम् ।

एवं जनिकर्तुः प्रकृतिरिति सूत्रे प्रकृतिपदस्य हेतुमात्रपरत्वं वृत्तिकाराभिमतम् । प्रयोगानुसाराच्च, भाट्टरहस्यादिग्रन्थेष्वपि सैव सरणिरादृता । प्रकृतिशब्द इहोपादानपर इत्येव भाष्यपक्षश्चेत् पुत्रात् प्रमोदो जायत इत्या-दौ निर्वाहो न भवति । 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वार्तिकबलात् ल्यब्लोपे पञ्चमी च, यत्र साक्षात्सम्बन्ध क्रियया सह पञ्चम्यन्तार्थस्य न

भवति तत्रैव युक्ता, यथा प्रासादादीक्षत इत्यादौ । तत्र जननार्थकधा-त्वयोगात् एतत्सूत्रप्रसक्तिरपि नास्ति । अतोऽपि तत्र ल्यब्लोपे पञ्चमी । अन्यथा सर्वत्र ल्यब्लोपपरत्वेनैव निर्वाहे 'जनिकर्तुः ०' इति सूत्रमेव व्यर्थम् । पुत्रात् प्रमोदो जायत इत्यत्र ल्यब्लोपेन निर्वाहोऽपि दुष्करः ; जायत इति समानकर्तृकत्वाभावेन पुत्रमालोक्येति ल्यबन्तवर्णनस्यानुपपन्नत्वात् । अतः प्रकृतिपदमिदं हेतुमात्रार्थकम् ।

इदमपि वक्तुं शक्यम् । अस्तु प्रकृतिपदमुपादानपरमेव । अथापि न दोषः, सूत्रे प्रकृतिरिति निर्देशस्याप्रकृतिवाचकात् पञ्चमी न भवतीत्येतावन्मात्रार्थकत्वात् ; प्रकृतित्वं विशिष्य पञ्चम्यर्थ इति सूत्रादलाभात् । अत्र प्रकृतिवाचकात् पञ्चमीविधानेऽपि हेतुत्वमात्रस्य पञ्चम्यर्थत्वेऽपि न दोषः । यतश्चैतच्चराचरमित्यत्र च यच्छब्दार्थस्य ब्रह्मणः प्रकृतित्वस्याक्षतत्वात् पञ्चमी उपपन्ना । कारणवाक्येषु सर्वत्र निमित्तत्वोपादानत्वरूपद्विविधकारणत्वकथनात् अविशेषेण हेतुत्वमुभयरूपं पर्यवस्यति ।

अतश्च च विष्णोः सकाशादुद्भूतमित्यस्य यतश्चैतच्चराचरमित्येतत्प्रश्नोत्तरत्वात् तत्र 'जनिकर्तुः प्रकृतिः' इति प्रकृतिपञ्चम्या वक्तव्यतया प्रश्नवाक्येऽपि यत इति प्रकृतिपञ्चमीति स्वीकर्तव्यम् । यतो वा इमानीति श्रुत्यनुसाराच्च । न च सकाशादुद्भूतमित्यत्र 'भुवः प्रभवः' इति पञ्चमी, हिमवतो गङ्गा प्रभवतीत्यत्र हिमवति गङ्गायाः प्रथमप्रकाशवत् अतीन्द्रिय विष्णुरूपाधिकरणे जगतः प्रथमप्रकाशस्य दुर्वचत्वात् । तत्र द्वितीयप्रकाशस्याधिकरणान्तरे इवेह जगतः विष्णुभिन्ने द्वितीयप्रकाशाभावाच्च । पूर्वसिद्धविषय एव प्रकाशस्य वक्तव्यतया पूर्वसिद्धिः कुत इति जिज्ञासायां शान्त्यभावाच्च । तावताऽप्युत्पत्तिं प्रति सङ्कल्पाश्रयत्वरूपकर्तृत्वापरपर्यायनिमित्तत्वालाभाच्च । स्थितिलयसमभिव्याहारात् उत्पत्तेरेवात्र विवक्षणीयत्वात् अन्यत उत्पन्नस्यान्यत्र प्रकाशरूपस्य प्रभवनस्यात्र ग्रहणासम्भवाच्च । प्रभवति-

जगद्भ्रमो ब्रह्मणि येन तस्मिन् दोषेऽप्यमीषामनुपपत्तिरेषाम् ।
ये ह्याश्रयाच्छादनतत्स्वरूपानिर्वाच्यतामानविरोधिबाधा ॥

अविद्याकार्यं जगद्भ्रम इत्युच्यते (पु १३६) तत्रानुपपत्तय. एतद्दुर्धर्षाः तथा हि—

तस्यास्तिमिरस्य तेजोगतत्ववत् स्वप्रकाशब्रह्माश्रयत्वं तावदसम्भवीत्याश्रयानुपपत्तिः । त्वयाऽपि ब्रह्माश्रय न नेष्टम् । यदपि .. सोऽपि तस्या आश्रय' इति त्वदुक्तिश्च, 'अविद्याया ब्रह्माश्रयत्वस्यास्माभिरनभ्युपगमा'दिति वचनेनैव हता । जीवाश्रयत्वं च न भवति—जीवभावस्याविद्याऽधीनत्वेनान्योन्याश्रयात् । असन्मते कर्मप्रवाहवत् बीजाङ्कुरन्यायादुपपत्तिरिति चेत्—तर्ह्यनेकाविद्यास्वीकारप्रसङ्ग । तत्र च पूर्वपूर्वाविद्यानिवृत्तिः कथम्? तत्त्वज्ञानाभावे मिथ्याभूतस्य निवृत्त्ययोगात् । अनिवृत्तौ किमि त्यविद्यान्तरकल्पनम् । कथं च कल्पनात प्राक् मिथ्याभूताविद्यासद्भाव ? यद्बुद्ध्या याऽविद्या कल्पिता सा तस्यैव कथञ्चित् कार्यकरा, रज्जुसर्पवत् । न हि प्रळये शरीरी कश्चित् प्रथमतोऽविद्या परिकल्प्य तदाश्रय स्वात्मान कृत्वा स्वयमविद्याभाक् भवति । अत आश्रयानुपपत्ति ।

तिरोधानानुपपत्तिश्च । मेघे सूर्यप्रकाशस्य तिरोधानं नाम तस्य प्रकाशस्य ज्ञानरूपत्वाभावात् मेघैस्तत्प्रसरप्रतिबन्धाच्चास्माकं तदग्रहणम्, तथा व्यवहितदेशे तदसम्बन्धश्च । ब्रह्मप्रकाशस्य ज्ञानरूपतया तद्विनाशाभावे ब्रह्मग्रहणमस्त्येवेति कथं तिरोधानम् ।

स्वरूपानुपपत्तिश्च । भावरूपाज्ञानस्य ब्रह्मशक्तित्वे किं तदभिन्नता, भिन्नता वा । आद्ये सत्यत्वापत्ति । अन्त्ये द्वैतापत्ति । अविद्याया प्रातिभासिकत्वेनासत्यत्वान्न द्वैतापत्तिरिति चेत्—कस्याविद्या प्रतिभासते ? न च प्रातिभासिक प्रतिभासमात्रमपि स्थातुमलम् । एवमविद्यापरिणामे समष्टिबुद्धौ प्रतिबिम्बितचैतन्यमीश्वर इत्युच्यते । तथा च प्रळये ईश्वराद्यभावा-

पत्ति । एवं च कस्य कल्पनावशादविद्यातत्परिणामारम्भादयः । एवं व्यष्टिबुद्धौ प्रतिबिम्बितं चैतन्यं जीव इति पक्षे अन्तःकरणावच्छिन्नं चैतन्यं जीव इत्यादिपक्ष इव प्रतिसर्गं जीवभेदादकृताभ्यागमकृतविप्रणाशादिदूषणं प्राक् भवताऽपि दृष्टमवर्जनीयम् । प्रतिबिम्बस्याचेतनस्यानुभवितृत्वमेव न सम्भवतीति कथमनन्ताश्रयमनन्तविषयमात्मानमनुभवतीति सुवचम् ।

कल्पकाभावादविद्या न सिद्ध्यतीति च प्रागेवोक्तम् । न च दीपस्य घटादिपरप्रकाशकस्य स्वप्रकाशकत्ववत् अज्ञानस्यापि जगत्कल्पकस्य स्वकल्पकत्वमिति वाच्यम्—वैषम्यात् । दीपो हि स्वयं विद्यमानः दीपान्तराभावेऽपि सन्निकर्षबलात् ज्ञानं स्वविषयकं जनयतीति स्वप्रकाशकः । अज्ञानं तु जगत्कल्पनात् पूर्वं जगदिव स्वकल्पनात् प्राक् स्वयमविद्यमानं कथं स्वकल्पकम् । न हि कल्पकत्वं स्वविषयकज्ञानजनकत्वमात्रम्, तथा सति घटो घटकल्पक इति प्रयोगः स्यात् । तथा च सति तत्तद्वस्तु स्वयमेव स्वकल्पकमिति अविद्यैव न सिद्ध्येत् । शुक्तिरजतस्वप्नपदार्थादौ कल्पकान्तरकल्पनापरिश्रमोऽपि च व्यर्थः स्यात् । अत उत्पादकत्वं वा, अनुमापकत्वं वा, अस्थितस्य पदार्थस्य स्थितत्वेन बुद्धिजनकत्वं वा किमपि भवतु कल्पकत्वम्; तत् स्वस्मिन् स्वं प्रति न भवति । अनादिरयमज्ञानरूपो मिथ्यापदार्थ इति चेत्—अनादित्वमिथ्यात्वे मिथो विरुद्धे इति प्रागेवोक्तम् ।

भावरूपाज्ञानं चासिद्धम्, मानाभावात् । अहमज्ञ इत्यादेरनुभवस्य ज्ञानाभावविषयताया आपण्डितपामरप्रसिद्धत्वात्, न च प्रागभावविषयोऽयं न भवति, प्रागभावस्य कालपरिच्छिन्नत्वात् इति वाच्यम् । अहमज्ञोऽस्मीत्यत्रापि अस्मीति वर्तमानकालावच्छिन्नत्वावगाहनेनाविरोधात् । प्राक्कालपरिच्छिन्नत्वं प्रागभावेऽस्ति, अत्र तु तस्याप्रतीतिरिति चेत्— तदपि न, वर्तमानकालस्यापि किञ्चित्पूर्वकालत्वात् । किञ्च प्राक्कालावच्छिन्नत्वेन रूपेण मा भासताम् । तावताऽपि स स्वाभावत्वेन रूपेण प्रतीयते ।

शोधने तु स प्रागभाव एवेत्युक्तौ को दोषः ? अथवाऽयमन्योन्याभाव एव वा सामयिकाभावो वा यः कश्चिदभावोऽस्तु ; न तु भावरूप इति। नन्वस्माभिरभावपदार्थस्यापि व्यावहारिकस्यैव स्वीकारात् व्यावहारिकतायाश्चाविद्याख्यमूलवस्त्वधीनत्वात् सिद्धमेवमपि भावरूपाज्ञानमिति चेन्न—कथमभावस्य भावस्य वा जगत्यनुभूयमानस्य केवलं व्यावहारिकसत्यत्वं मिथ्यात्वमिति प्रश्ने अविद्याकार्यत्वान्मिथ्येति समाधानस्येदानीमावश्यकतया तत्राविद्याया असिद्धावाशङ्कितायामेव व्यावहारिकसत्यत्वेन तत्साधनेऽन्योन्याश्रयापत्तेः ।

नन्वहमज्ञ इत्यस्य ज्ञानाभावविषयत्वे ज्ञानाभावः किं सामान्याभावः, उत विशेषाभावः । नाद्यः ; सामान्याभावग्रहणे विशेषाभावग्रहणात् विशेषसिद्धौ सामान्यमन्तरेण विशेषस्यायोगात् सामान्यमावश्यकमिति सामान्यनिषेधासम्भवात् । नान्त्यः ; अहं परमात्मानं न जानामीत्येवं कश्चिद्विशेषविषयकज्ञानाभावस्यानुभवेऽभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् अहं च ज्ञानस्यैव प्रतियोगितया ज्ञानस्य च विषयरूपाकारमन्तरा ग्रहणासम्भवेन प्रतियोगिज्ञानकाले विषयेऽपि गृहीत इति कथं तदभावरूपाज्ञानाभावः उपलभ्यत इति—अत्रोच्यते—प्रथमशिरोदूषणं तावदयुक्तम्। सामान्यनिषेधस्य विशेषनिषेधनान्तरीयकत्वेन विशेषनिषेधस्यापि कृतप्रायतया विशेषासिद्ध्यसम्भवात् । न हि घटो नास्तीति सामान्यनिषेधे क्रियमाणे एवं कश्चिदनुयुङ्क्ते तद्घटविशेषानिषेधात् तत्सिद्धौ घटसामान्यमपि न निषेध्यमिति । द्वितीयस्मिन्नपि शिरसि श्रूयताम्—भावरूपाज्ञानमस्तु मा वा । भवतोऽपि अहं परमात्मानं न जानामि अहं परमात्मज्ञानाभाववान् इति अभावविषयकप्रत्ययस्यानुभवसिद्धतया तत्र प्रतियोगिग्रहणमस्ति नवेति विकल्पस्य सुकरत्वात्। तथा च 'यश्चोभयोः समो दोषः, परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे' इति ।

तत्रापि भावरूपाज्ञानमेव विषय इति यदि हठात्कारः; तदाऽऽ
श्रूयताम् । अस्याज्ञानस्य परमात्मज्ञानेन हि निवृत्तिर्वक्तव्या, तद्ज्ञा
किं शाब्दबोधात्मकं निवर्तकम्, उत निदिध्यासनानन्तरं चरमभावी साक्षा
त्कारः । नाद्यः; तर्हि अज्ञानस्य भावरूपस्य सर्वमूलस्य निवृत्तौ तदै
जगदुच्छेदः स्यात्; मननादिकं च न स्यात् । नान्त्यः; शाब्दबोधात्प
श्चात्, साक्षात्कारात्प्रागपि अहं परमात्मानं न जानामि अज्ञ इति व्यवहारा-
पत्तेः । तथा चाचार्यस्याप्यज्ञत्वात् अन्तेवासी न प्रवर्तेत । किञ्चाज्ञात-
तत्त्वयोः शिष्ययोर्मध्ये कश्चिदन्यं प्रत्याह-'अहं परमात्मानं न जानामी'
ति । तत्र श्रोतुर्बोधस्तु जायते । तत्र बोधे यदि परमात्मा विषयः स
नाचार्यमुपसीदेत् । यदि न विषयः, तर्हि वाक्यार्थं न जानामीति ब्रूयात् ।
अतो भावरूपाज्ञानस्वीकारेऽपि दोषस्तुल्यः । वस्तुतः परिमलोक्तभावरूपा-
ज्ञानसाधनप्रकाराः एवास्माभिरन्यत्र खण्डिता इति यत्किञ्चिदेतत् । अहमज्ञो
न किञ्चित् जानामीति पुनः प्रयोगोऽज्ञशब्दार्थविवरणाभिप्रायेण । विवर-
णानपेक्षिणं प्रति पुनरित्थं न प्रयुज्यते ॥

एवमनिर्वचनीयत्वानुपपत्तिश्च । सर्वं हि वस्तु प्रतीत्या व्यवस्थाप्यते ।
प्रतीतिश्चास्तीति वा नास्तीति वा भवति; न पुनरनिर्वचनीयमिति । यत्त्विह
वर्णितम्—(पृ. १३९) अन्धकाररूपं हि प्रकाशं विना गृह्यते । तत्र
प्रकाशाभावस्यापेक्षितत्वात् प्रतियोगितया प्रकाशापेक्षाऽप्यस्ति । यथा च
यथान्धकाररूपं प्रकाशाविषयोऽपि प्रकाशव्यवस्थाप्यम्, तथा सदसद्रूप-
द्विविधप्रतीत्यविषयस्यापि भावरूपाज्ञानस्य स्वरूपमनिर्वचनीयमित्येवरूपेण
प्रतीतिव्यवस्थाप्यमिति-तस्यार्थं तथैव हृद्यः । न ह्यनिर्वचनीयमिति लोके
प्रतीतिरस्ति; येनाज्ञाने तथा स्यात् । न च सकलप्रतीत्यभावेऽपि अज्ञा-
नवस्तुसिद्धिः । एवं हि सति निर्विशेषं ब्रह्म प्रमाणं विना सिद्धमस्ति;
तत्र दोषोऽपि अनिर्वचनीयो मायाज्ञानात्मा प्रतीतिं विनैव सिद्धोऽस्तीत्येवं

सुष्ठु वः पदार्थव्यापनसरणिः । या च भ्रमहेतुदोषदोषाश्रयत्वदधिष्ठाना-पारमार्थ्येऽपि भ्रमोपपत्तेरिति भाष्यमनूद्य कथा काऽपि कथ्यते । तत्राप्येव किमुपजीव्य दोषकल्पितः ; किमुपजीव्य जीवसिद्धिः ; कुतो ब्रह्म ज्ञानम् ; कुतो जगत् इत्यादिः—सा दोषापारमार्थ्ये केन ब्रह्म आच्छाद्येत ; कथं च जीवः सिद्ध्येत् ; कथं च भ्रमः ; कथं च जगत् इति प्रतिरन्यैव पराहता । दोषापारमार्थ्येऽपि भ्रमोपपत्तौ अधिष्ठानापारमार्थ्येऽपि भ्रमोपपत्तिर्भविष्यतीति-ता किमिति न हृदयमारोहति ? यदपि सर्वापारमार्थ्येऽपि भ्रमोपपत्तिरिति सर्वशून्यत्वमेव स्यादिति भाष्यार्थखण्डनम् (पृ. १४०) तुच्छं हि सर्वशून्यत्वम्, न त्वपारमार्थ्यं । तुच्छत्वमिथ्यात्वयोर्भेदादिति —तदप्याशयापरिज्ञानमूलकम्—ब्रह्मातिरिक्तापारमार्थ्यं हि तथा कदाचिद्दृश्यत्वात् । एवं ब्रह्मणोऽप्यपारमार्थ्ये जातु शून्यमेव तत्त्वमिति ज्ञानेन सर्वस्य बाध्य ग्रन्थ-इयस्वीकार्यम् । एवं च सर्वाभावे तदा सर्वशून्यत्वमेव स्यात् क सन्देहः ?

एवं प्रमाणानुपपत्तिश्च—तत्र प्रत्यक्षं न प्रमाणमिति प्रागुक्तम् । एवं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्य-स्वदेशगतवस्त्वन्तर-पूर्वकम् । अप्रकाशितार्थप्रकाशकत्वादित्यनुमानेन सिद्धं भवति । विरुद्धत्वादिदोषेण जागरूकत्वादिति च भाष्यादिषु व्यक्तम् । कथं विरुद्धत्वमिति चेत्—प्रकृतमप्यनुमितिरूपं ज्ञानमपि प्रमाणज्ञानतया पक्षभूतं अप्रकाशितार्थप्रकाशकत्वरूपहेतुमत्त्वात् स्वविषयाज्ञानावारक ज्ञानान्तरपूर्वकं कल्पितव्यम् । तथा चानभिमतार्थसिद्धि । एवं चाज्ञानान्तराच्छादितस्याज्ञानस्य प्रतीत्यसम्भवात् अप्रतीयमानानां चापरमार्थानां कार्यकरत्वाभावात् ब्रह्मविरोधकत्वभङ्ग इति । न च तावताऽपि भाष्यभाव-व्यासत्वरूप विरुद्धहेत्वाभासत्वं कथम् ? अन्यत्र हि विरुद्धत्वस्य शिष्टत्वादिति वाच्यम् । 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' इति (१.२.४७) न्यायसूत्रे स्वाभिमतसिद्धान्तविरोधित्वप्रयुक्तस्य हेतौ विरुद्धत्वव्यवहारस्य

न्यायभाष्यादिषु कृतस्य प्राचीनग्रन्थेऽसिद्धक्लिष्टत्वात् । न चाप्रकाशितार्थप्रकाशकत्वमेव न स्तोतुम्, अहमज्ञ इति प्रत्यक्षसिद्धस्यैवानुमानेन प्रकाशनादिति वाच्यम् । तेनैव सिद्धौ विवादाभावेनानुमानस्यैव प्रयोगायोगात् प्रत्यक्षस्य ज्ञानाभावविषयकत्वेनैवोपपत्तिरित्याक्षेपे हि अनुमानप्रसरः । उक्तं च प्रत्यक्षस्याभावविषयकत्वं प्रागेव । तथा चाप्रकाशितार्थप्रकाशकत्वमक्षतमेव । न च प्रत्यक्षसिद्धेऽज्ञाने स्वप्रागभावव्यतिरिक्तत्वमात्रमत्र साधयितुमिष्टमिति वाच्यम्—तथा प्रयोगाभावात् । तदा ह्यज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वं साधनीयम् । अभावस्यैव प्रत्यक्षसिद्धतया अभावविषयकत्वेऽनुपपत्त्यभावस्य भाष्यादौ स्पष्टतया च तत्र स्वप्रागभावव्यतिरिक्तत्वस्थापनाया असम्भवेन विलक्षणस्य धर्मिण एवात्र साधनीयत्वं च । यद्वस्तु प्रमाणान्तरतो निश्चितम्, तत्र विशेषणान्तरसाधने विशिष्टसाधनमेष्यत इति युक्तम् । यत्र प्रमाणान्तरगृहीततया निश्चितादन्यत्रैव किञ्चिद्विशेषणान्तरमुच्यते । तत्र विशिष्टमेव साधनीयमिति । अतोऽस्य धर्मिणोऽप्यप्रकाशितार्थप्रकाशकत्वमस्त्येव ।

अत एवाज्ञानरूपधर्मिणोऽप्रकाशितार्थप्रकाशकत्वमनुमानस्य नेत्यद्वैतसिद्ध्युक्तमपास्तम् । तदिह । आत्मा न सर्वज्ञ इत्यनुमानस्य न्यायकुसुमाञ्जलिप्रकाशमकरन्ददूषणन्यायोऽत्रानुसन्धेयः । किं चाहमज्ञ इति प्रत्यक्षस्यैवाप्रकाशितार्थप्रकाशकत्वात् अज्ञानं वारकाज्ञानान्तरपूर्वकं नापादि । तत्र साध्याननङ्गीकारे चानैकान्त्यम् । न चाज्ञानावारकाज्ञानान्तरमिष्यत इति वाच्यम् । अपसिद्धान्तात् । अहमज्ञ इत्यस्य ब्रह्मच्छादकाज्ञानविषयत्वानुपपत्तेश्च । तस्यानृतत्वात्, तिरोधायकत्वाभावाच्च स्वयं सिद्ध एव मोक्षः स्यात् । न च ज्ञानस्याप्यपरमार्थस्य तिरोधानकर्तृत्वमस्ति । अपरमार्थस्यापि वह्न्यादेर्दाहजनकत्वादिति वाच्यम्—गुञ्जापुञ्जे वह्नित्वेन गृहीते दाहानुपपत्त्याऽपरमार्थस्य तत्कारित्वाभावात् । अन्यादृशस्तु वह्निर्न परमार्थ एव ।

किं च किमिदमर्थप्रकाशकत्वम्? किं तद्विषयकत्वं, किं वा तद्विषयकव्यवहारजनकत्वं, यद्वा तद्विषयकज्ञानजनकत्वम्। आद्ययो अज्ञानस्यापि परमात्मप्रकाशकत्वापत्तिः। अहं परमात्मानं न जानामीति व्यवहारात्। अतश्च तस्य प्रकाशितत्वात् प्रपञ्च एव न स्यात्। अन्त्यपक्षे च प्रमाणज्ञानस्यापि तदसिद्धिः, ज्ञानस्य ज्ञानजनकत्वाभावादेव। अन्यत्सर्वं साध्य एव निरस्तम्, वृथैव भवता पुनरुच्यत इति कृतं विस्तरेण।

यत्तु—(पु १४२) अज्ञानाश्रयत्वं न ब्रह्मणः, किं तु प्रतिबिम्बभूतस्य जीवस्यैति—तन्न—यतः व्यष्टिबुद्धिप्रतिबिम्बस्यैव जीवतायाः प्रागुक्तत्वात् व्यष्टिबुद्धेः प्राक् जीवाभावेनाज्ञानं किञ्चिदनाश्रितमिति किमीयाज्ञानविषयत्वं ब्रह्मणः, कथं च सृष्ट्यारम्भ इति किमपि न स्यात्। प्रतिबिम्बस्य बिम्बाभिन्नत्वे ब्रह्माश्रितत्वमज्ञानस्यानिवार्यम्। भिन्नत्वे 'तत्त्वमस्यादिवाक्यानिर्वाहः। ब्रह्मानाश्रितत्वे च तस्य कथं ब्रह्मशक्तित्वम्। यच्च यथा जलविनाश्यग्निर्जले प्रविश्य तद्गतं शैत्यमावृणोति। तथा ज्ञानरूपं ब्रह्माप्यज्ञानमन्तः प्रविश्य तदावृणोतीति—तदपि न—वैषम्यात्। अग्नेर्जलविनाश्यत्वं तावत् नाल्पपक्षया तस्य सूक्ष्मत्वात्, किं त्वधिके जले सूक्ष्मतयाऽग्निः कणीभूय प्रविशन् विशकलितत्वान्नोपलभ्यते, आकाशादिभूतानामुत्तरोत्तरं स्थूलत्वात्। कदाचित् पुनरल्पे जलेऽधिकोऽग्निर्विशकलितं प्रविशन्नपि आधिक्यात्सद्भावं स्वगतोष्ण्येन च शैत्यमावृणोति। न च तथा ज्ञानरूपं ब्रह्म, अज्ञानं च सावयवं विशरणार्हं च। अज्ञानरूपप्रकृत्यपेक्षया च सुसूक्ष्मता ब्रह्मणः श्रुतिसिद्धा। अतो ज्ञानतेजसो प्रकाशरूपत्वात् तेजसा तिमिरमिव ज्ञानेन सता निवर्त्यमेवाज्ञानमिति अज्ञानस्यात्मलाभ एव न भवतीति कथं तेन ज्ञानावरणम्।

यच्च ब्रह्मज्ञानस्य वस्तुविनाशकत्वं न वयं स्वीकुर्मः, प्रपञ्चस्यावस्तुत्वात् ज्ञानेन तद्विनाश इति—तच्च न युक्तम्—आद्यपाज्ञानात्। अपि

वैचनीयस्यैव कस्यचिदनङ्गीकारात्, शुक्तिज्ञानादेरपि रजतभ्रममात्रनिवर्तकत्वेन रजतनिवर्तकत्वाभावात् , 'अपरमार्थभूतं किञ्चिदस्ति, तज्ज्ञानविनाश्य'मिति कथाया असम्भवस्यैवात्र भावितत्वात् । अत एव रज्जुज्ञानेन सर्पविनाश इत्युक्तमपि निरस्तम् । यदपि महनीयपुरुषसङ्कल्पेन वस्तु विनश्यति ; तदपि शक्तिविशेषोपबृंहणबलात् । यदि ब्रह्मज्ञानमपि तदुपबृंहितमितीष्यते, तर्हि शुद्धज्ञाननिवर्त्यत्वाभावात् 'वस्तुसत्यत्वप्रसङ्ग' इति स्पष्टं भाष्ये । यद्भावरूपं तत्पारमार्थिकमिति नियमस्याकाशादौ व्यभिचारकथनमप्ययुक्तम्—आकाशादि सर्वं पक्षीकृत्य भावत्वेन अस्मत् परमार्थत्वसाधनात् पक्षे व्यभिचारवर्णनायोगात् । वस्तुतो रज्जुज्ञानमपि न सर्पज्ञाननिवर्तकम् ; तस्य क्षणिकत्वेन स्वयमेव विनाशात् । प्रतिबन्धकबलात् पुनरपि रज्जुज्ञानं नादेतीत्येतावदेव । न च (पृ. १४३) विषयसन्निधानपर्यन्तस्थायि ज्ञानं तदभावे नश्यतीति न क्षणिकमिति वाच्यम् । क्षणिकत्वेनैकक्षणस्थायित्वस्याविवक्षितत्वात् ; शीघ्रनाशित्वे तात्पर्यात् । ज्ञानस्य विषयसन्निधानपर्यन्तस्थायित्वमित्यपि न नियमः—सन्निहितेऽपि विषये तत् ज्ञात्वा विषयान्तरधावनात् । विषयासन्निधानेऽप्यनुमित्यादौ ज्ञाननाशस्यान्यथैव वक्तव्यत्वाच्च । अक्षणिकत्वे च, मर्यादरूत्पन्नस्याविनाशेन सर्पज्ञानसत्त्वतो सत्यामनकाभयप्रसङ्गश्च । न च ज्ञानमप्यक्षणिकमिति कथं ज्ञानसन्ततिस्वीकार इति वाच्यम्—छन्नं प्रकटं च दूरादागच्छति सर्पे कस्यचित्पुंसः निमीलनोन्मीलनादिना च सन्निकर्षभेदेन ज्ञानसन्ततेरवर्जनीयत्वात् । अज्ञानं न ब्रह्माश्रयं अज्ञानत्वात् ; ब्रह्म नाज्ञानास्पदं ज्ञातृत्वविरहात् इत्यनुमानयोः साध्यभेदाभावात् पुनरुक्तिरिति भवदुक्तं पण्डितलोकं विस्मयसागरे निमज्जयति ; अनुमानप्रकरणे यादृशं साध्यत्वं , तस्य परिशीलने भेदस्याक्षतेः । अनुमानद्वयस्य मिथोऽनपेक्षमेव प्रवृत्ततया एकोक्त्यान्येन साधनाभावाच्च ।

मिथ्याभूतस्य जगत उपादानं मिथ्यैव भवितुं युक्तमिति अनुमा-

नान्तरेणाज्ञानं साधयितुं (पृ. १४४) यदुच्यते, तत्, अविद्याकार्यत्वाज्जगन्मिथ्येति पूर्वोक्त च परस्पराश्रयदोषबलात् प्रक्षीणम् । एव सजातीयकारणकल्पन च विलक्षणत्वाधिकरणेन व्युदस्तम् । तदधिकरणस्य यथाकथञ्चित् सालक्षण्यावश्यकताबाधकत्व नास्ति ; तस्यावर्जनीयत्वात् । मिथ्याभूतस्य सत्योपादानकत्वेऽपि वस्तुत्वप्रतीयमानत्वादिसालक्षण्यसम्भवात् । किं च भ्रमस्थले अधिष्ठानसालक्षण्यस्यैव प्रातिभासिकेऽपेक्षिततया शुक्तिरूप्याद्युत्पादकतूलाविद्यादौ अधिष्ठानवत् तथा सालक्षण्याभावेऽप्युपादानत्वदर्शनात्, प्रातिभासिकरजत प्रति व्यावहारिकाविद्याया उपादानत्ववत् व्यावहारिकस्य जगत पारमार्थिकोपादानत्वस्यापि सम्भवाच्च न मिथ्याभूतस्य मिथ्योपादानमिति सालक्षण्यस्यावश्यकता । अस्माभि सूक्ष्मचिदचिद्विशिष्टं स्थूलतद्विशिष्टकारणमिति न कार्यकारणभावापेक्षितसालक्षण्यार्थमुच्यते ; किं तु ब्रह्मणो निर्दोषत्वरक्षणाय प्रमाणसिद्धापरित्यागाय च ।

किं च यथा शुक्त्यज्ञान वास्तवरजतादिसंस्कारसापेक्षमेव जनयति रूप्यादिकम्, तथा मूलाज्ञानमपि पारमार्थिकजगत्संस्कारसहकृतमेव जगज्जनयेत् । ब्रह्माश्रितत्वान्मूलाज्ञान न किञ्चिदपेक्षत इति चेत्—ब्रह्मणस्तादृश्ये मूलाज्ञानकल्पनैव मुधा तदभावेऽपि ब्रह्म मिथ्याभूत जनयेदिति सुवचत्वात् । अनादित्वात्संसारस्य, अस्त्येव प्राग्भवीयजगत्संस्कार सूक्ष्म प्रागिति चेन्न—तस्य पारमार्थिकजगत्संस्कारत्वाभावात् । तत्र वास्तवत्वस्याप्रयोजकत्वे प्रातिभासिकरजत प्रति वास्तवरजतसंस्कार कारणमिति न सिद्ध्येदिति सर्वथा अव्यावहारिकोऽपि कश्चिदर्थ प्रातिभासिको भवतु । अत सत्यवस्तुसंस्कार विना न मिथ्यावस्तुप्रतीतिरिति कस्यचिज्जगत सत्यत्वे, न तदुपादान मिथ्या भवितुमर्हति ।

एव प्रातिभासिकशुक्तिरूप्यकल्पनमपि निर्मूल बाधित च, पश्चात् शुक्तितत्त्वानुभवकाले 'प्रागपीद रजत नासी' दिति बाधस्य त्वयैवोक्तत्वात् ।

'तत्र पारमार्थिकतया व्यावहारिकतया च नासीदित्येव बाधेन गृह्यते । अत प्रातिभासिकसत्ता युक्ते'ति चेन्न— अविशेषेण नासीदिति सर्वविधसत्ताऽभावे गृह्यमाणे सङ्कोचकल्पनायोगात् । पूर्वं प्रतीतस्य कथं सर्वात्मना असत्त्वमिति चेत्—कथं तस्य पारमार्थिकव्यावहारिकसत्ताऽभावः ? पश्चाद्बाधादिति चेत्—किं 'पश्चान्नास्ती'ति बाधस्याकारः किं वा 'प्रागपि नासी'दिति । उत्तरमेवात्र तवोत्तरम् । तथा च (प्रागेव) असदेव प्रतीतमिति कथं सत्त्वम् ? तर्हि शशशृङ्गं प्रतीयतामिति चेन्न—कुत्राप्यसत्त्वेन तदनुभवाभावेन तत्संस्कारानुदयादेवाप्रतीतेः । अतोऽन्यत्र सतो रजतस्यान्यथाख्यातिरेव शुक्तिरूप्यप्रतीतिर्नाम । अन्यस्यान्यथा मानं न युज्यत इति चेन्न—मानाभावात् प्रातिभासिकस्यापि रजतस्य पारमार्थिकत्वेनैव तदा भानात् तथेष्टतया च तस्यावर्जनीयत्वाच्च । न च शुक्तिगतसत्यत्वस्य रजते मानात् रजतस्याज्ञानद्वारा शुक्तिकार्यतया रजते तत्सत्यत्वस्य सम्बद्धत्वेन नान्यथाख्यातिरिति वाच्यम्—शुक्तिगतं सत्यत्वं रजते परम्परया सम्बद्धमिति सदाऽननुभवात् साक्षात्सम्बन्धेनैव सत्यत्वानुभवात् । साक्षादपि सत्यत्वमस्तीति चेत्——कथं तर्हि रजतं प्रातिभासिकम् ? कथं च बाध्येत ? एवं हि सति जगदपि ब्रह्मगतसत्यत्वस्य साक्षादाश्रयभूतं न मिथ्या स्यात् । अतः साक्षात्सत्यत्वस्य भवन्मते तत्रासम्बद्धत्वात् अन्यथाख्यातिर्दुष्परिहरा ।

यत्तु—(पु १४५) भाष्ये 'रजतप्रतीते, इन्द्रियगतदोषस्य, इन्द्रियस्य, दुष्टेन्द्रियस्य वा प्रातिभासिकरजतकारणत्वं न भवती'ति दूषणं भाष्यमाणं मायावादिभिस्तथाऽनुक्तत्वादयुक्तमिति—तदपि न रम्यम्— दूषणावसरे सम्भावितसर्वविकल्पोद्भावनेन दूषणस्यैव समर्थकृत्यत्वात् तत्रानुक्तमुक्तवति विचारस्यायुक्तत्वात् । भाष्ये चात्र प्रातिभासिकरजतोपादानत्वमेवैषां निषिद्ध्यत इति न मन्तव्यम्—सामान्यतः कारणत्वं न भवतीत्येव भाष्यतात्पर्यात् । अस्य च कारणत्वस्य भवद्भिरनुक्तत्वाभावाच्च दोषः । भव-

दधिष्ठानादिमिथ्याज्ञानोपादानत्वं पुनः प्रागेव निरस्तमित्यप्यत्र भावितमेव। अतस्सम्भावितानामन्येषां पक्षाणामत्र प्रतिक्षेपः। अवश्यं चेन्द्रियादि मन्त्रत्वेऽपि अपेक्षितमङ्गीकार्यं च; अन्धस्यादुष्टचक्षुषश्च शुक्तौ रूप्योपलम्भाभावात्।

अस्तु सर्वमन्यत्। रजतप्रतीतिः रजतं प्रति कारणमिति कथं समाधेयम् इति चेत् न—शुक्तिरूप्यप्रतीतिकाले नियतभाविसर्ववस्तुग्रहणेनैव विचारस्य कार्यतया प्रतीतेरपि तदा सत्त्वेन तावतैव तस्या अपि विकल्पकोटौ निवेशात्। प्रतीतौ भवं प्रातीतिकम्; प्रतिभासे भवं प्रातिभासिकमिति शब्दव्युत्पत्तिसद्भावेन तत्र भवशब्दः। किमुत्पत्तिविशिष्टवचनः उत सत्ताविशिष्टवचनः, प्रतीतिश्च तत्र हेतुर्न वेति विमर्शस्यासङ्गतत्वाभावाच्च।

अपि च श्रूयतां रजतसादृश्यांशज्ञानाभावे इन्द्रियदोषशुक्तिज्ञानादिसत्त्वेऽपि शुक्तौ रजतबुद्धिर्नोत्पद्यते। यत्तु (पृ १४६) 'सादृश्यज्ञानस्य नात्रोपयोगः, किं तु वस्तुगतं सादृश्यं रजतसंस्कारमुद्बोध्यते। स च संस्कारः शुक्त्यविद्यां रजतरूपेणैव परिणमयतीति—तत्र—शुक्तौ बहुवस्तुसादृश्यसत्त्वेन रजतसंस्कार एवोद्बुध्यत इत्यत्र प्रमाणाभावात्। अतो यमंशमादाय शुक्तौ रजतसादृश्यम्, तदंशज्ञानाद्रजतसंस्कारोद्बोध इति वक्तव्यम्। तथा च तदेव ज्ञानं विपरीतासम्बन्धेन शुक्तौ स्थितं शुक्तिरजतकारणमिति अयं सम्भावित एवाक्षेपो निरस्यते। 'न तावत्प्रतीति'रिति भाष्येण। अयं भावः—अस्माभिस्सौसादृश्यातिरिक्तजात्यनङ्गीकारात् शुक्तौ रजतांशसद्भावाङ्गीकारेण सौसादृश्यप्रतीतिसामग्र्यां वर्तमानायामीषत्सादृश्यांशमात्रप्रतीतौ प्रमाणाभावात् रजतसौसादृश्यप्रतीतिरेव भवितुमर्हतीति तादृशसादृश्यप्रतीतिरेव रजतप्रतीतिरिति न तस्या रजतं प्रति कारणत्वम्—फलस्य प्रागेव सिद्धतया रजतोत्पत्तिवैयर्थ्यादिति। अनया च दिशा सर्वात्मना प्रातिभासिकरजतकल्पनाया अवकाश एव नास्तीति निरूपितं भवति।

यत्तु—इन्द्रियदोष एव कश्चित् प्रातिभासिकरजतहेतुर्भवितुमर्हति, तस्य किरणद्वाराऽर्थसम्बन्धित्वसम्भवादिति—तत्रोच्यते—तस्य किरणद्वाराऽर्थसम्बन्धित्वेऽपि स इन्द्रियस्यैव दोष इतीन्द्रियकार्ये किञ्चिदन्यथाकरणमेव ततो भवेत् ; न विषयान्यथाकरणमिति भ्रम एवोपपद्येत, न शुक्तिरूप्यम् । किञ्च शुक्तौ कल्पिते तत्र रजतबुद्धिः कथम् ? रजतसादृश्यप्रतीत्येति चेत् तर्हि रजतसदृशमिति बुद्धिर्युक्ता, न तु रजतमिति ; गवय इव गोसादृश्यबुद्धिरिति भाष्य एवोक्तम् । यत्तु शुक्तिरूप्ये रजतजातियोगः पारमार्थिक अपारमार्थिको वा मायावेदान्तिभिर्नैव स्वीकृत इति—किं तावता । अथापि कथं तत्र रजतबुद्धिः । रजतत्वानाश्रये रजतबुद्धिश्चेत्, 'अन्यथाख्याति सिद्धैवे'ति दूषणान्न मुच्येत ।

वस्तुतः शुक्तौ रजतांशसद्भावात्सत्ख्यातिरेव । यथा मरीचिकायां दोषवशात् पृथिवीतेजोंशाग्रहणेन जलांशग्रहणं । त्रिवृत्करणबलाच्चात्र जलसद्भावः । न च यथा त्रिवृत्करणं तथा सूक्ष्मत्वात् कथं दर्शनमिति शक्यम्—तर्हि मरीचिकाया अप्यदर्शनप्रसङ्गात्, तेजोंशस्यापि सूक्ष्मत्वात् । न च सिद्धे सत्ख्यातित्वे रजतांशकल्पना स्यात्, न त्वसिद्धे इति वाच्यम्—रजतज्ञानं शुक्तिगतरजतांशविषयकं शुक्तौ रजतांशनिषेधकप्रमाणाभावे सति शुक्तिविशेष्यकरजतज्ञानत्वात् मरीचिकाविशेष्यकजलज्ञानवदिति सामान्यमुखव्याप्तिमूलकप्रयोगेणेष्टसिद्धेः । मरीचिकायां च त्रिवृत्करणाज्जलस्थितिः श्रुतिसिद्धा । अपि च न शुक्तौ रजतांशस्थापनेऽस्माकं निर्भरः ; किं तु यत्र इदमित्थमिति विशिष्टज्ञानमेव सुलभम्—यथा मरीचिकादौ, तत्र त्रिवृत्करणबलेन जलसत्त्वेन जलविषयकसाक्षात्कारात्मकसन्निकर्षाधीनज्ञानसम्भवात्—तत्र सुतरामेव यथार्थज्ञानोपपादनमित्येव भ्रमः । अन्यत्र [illegible] प्राभाकरपरिगृहीताख्यातिप्रकारस्यानपायेन यथार्थख्यातिरुपपाद्यत इति ।

यत्तु (पृ. १४७) सोमाभावे पूतीकग्रहणं श्रुतिचोदितम् । न

सोमावयवसद्भावात्, किं तु सोमगुणसद्भावात् एवं श्रीहमन्ते च नीवार-ग्रहणादावपि—तन्नूनं पूर्वमीमांसाऽनभिज्ञतामूलम्, षष्ठाद्यध्यायविरोध तु। दुग्धजन्मासामृतमथादिशब्दाश्च तत्तदंशभूयस्त्वाश्रयवस्तुवाचका इति न तत्तदर्थकार्यत्वेन प्रतिपन्नानामर्थान्तरे साधनमस्त्र । एवं सति श्रीहाभाव तत्कार्यनिष्पत्तये नीवारग्रहणं तु मीमांसापरिचयशालिना सुगमं भवति किमत्र विस्तरेण । सर्वमिदं, 'इति न्यायविदो विदुः' इति श्रीभाष्य एव विस्तरे मुक्तमिति किं ते केवलमप्रामाणिकार्थाभिनिवेशेन ।

एवं स्वप्नज्ञानमपि यथार्थम्—तत्र सर्वस्य वस्तुनस्तदेकानुभाव्यतया पुण्यपापानुगुणं भगवता सृष्टत्वात् । ननु च उदासीना अपि तत्र पदार्था स्वप्नेऽनुभूयन्ते । कथं तत्र पुण्यपापानुगुणा सृष्टिरिति चेत्—अहो खलु नुभूयन्ते इति व्याहरन्नेव भवान् कथं पुण्याद्यनुगुणतेति पृच्छति । अनुभव एव हि पुण्यादेः फलम् । कथं च क्षत्र रामप्रासादसभामण्टपादिषु प्रति-कूलं विधीयमाना परिष्कारा प्रेक्षकशरीरादये नाशितयापयुज्यन्ते । तथा स्वप्नानुभाव्यवस्तुष्वद्भु स्वविषयं साक्षात् परम्परया वा सर्व एवार्थाः स्वदृष्टमुपयुज्यन्त इति न कश्चिदुदासीनः । यत्तु—स्वप्न कल्पना केवलं स्मृतिरूपा इति—तत् भवत्सिद्धान्तविरुद्धम्, अद्राक्षमित्यनुभवानुसारेण सृष्टेरेव तत्र स्वीकारात् । अ यथा अनिर्वचनीयरजतादिकमपि जागरे न सेत्स्यति । स्मृत्यैव निर्वाहात् । एवं स्वप्ने स्वीकृताया सृष्टिप्रतिपादकश्रुतिबलादेव भवद्भिरप्यद्वैतमप्यभ्युपगतम् । युक्तयश्च सत्यं सूत्रकृतैव समुदाह्रियन्त । हन्त भवानित्थं स्मृतिरेव तत्त्वानि यदत्र स्वप्नपदार्था अनिर्वचनीया इति लिखतीति व्याहतमतन् । स्मृतिर्हि पूर्वानुभूतगोचरा न तदात्वे किंचिदनिर्वचनीयं स्थापयेत् । अत एव मायामात्रमिति सौत्रपदं भवदभिमतरीत्याऽपि भवदुक्तिबाधकम् । यत्तु तत्पुरुषानुभाव्यत्वे सति तत्कालावसानत्वमेवानिर्वचनीयत्वमिति गुरुस्तत्र द्वेष इति—तद्दूषणं जानुभाव्यानामपि जागरपदा

र्थाना भवद्भिरनिर्वचनीयत्वस्वीकारादलक्षणत्वादुपेक्ष्यम् । न च जीवभेदेनानुभाव्या घटादयोऽपि भिन्नाः ; सर्वथाऽनुभवव्याकोपात् । य एव घटस्त्वया जलपूर्णः कृतः स एव मया समानीत इत्यादिप्रत्यभिज्ञाभङ्गप्रसङ्गात् । सोऽयं घट इति प्रत्यभिज्ञाभङ्गं च सौगतोक्तक्षणिकत्वमपि शिरः प्रदर्शयेत् । किञ्च ज्ञानसुखदुःखादिष्वेकैकमात्रानुभाव्येषु क्षणिकेषु भवन्मतानुयायी न कोऽपि लोकेऽनिर्वचनीयशब्दं प्रयुङ्क्त इतीदमलक्षणमेव ।

यदपि --(पृ १४८) 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति सूत्रे जीवानामनभिव्यक्तस्वरूपत्वादिति स्वरूपस्य जीवसम्बन्धित्वं षष्ठ्यन्तपदमध्याहृत्य न वर्णनीयम्, सौत्रस्य मायामात्रस्यैव तदन्वयौचित्यादिति—तदपि न-जागरपदार्थान्यथानिर्वचनीयस्य स्वाप्निकस्यापि यथार्थवद् दृश्यमानत्वात् दृश्यमानेषु तदनभिव्यक्तस्वरूपत्वस्य दुरुपपादत्वात उत्तरसूत्राद्यनुसाराच्च जीवानामित्यध्याहारस्यावश्यकत्वात् । 'ईश्वरकृतिस्तु' इत्यनुरु वा मायामात्रमित्युक्तिः 'न तत्र रथा न रथयोगा' इत्यादिश्रुत्याद्यभिप्रेतस्येश्वरीयत्वसाधकस्य हेतोरधिकस्य लाभाय । यत्तु स्वप्नपदार्थवत् तत्तत्कालभासमानं शुक्तिरजतादिकमपारमार्थिकं कथं न स्यादिति तस्यापि सत्यत्वमिति—तत् यथावद्वाक्यपरिचितेषु दृष्टासु नैवापूर्वं भविष्यति, भाष्य एव तदुक्ते । परं तु तत्रापि शुक्तिं हस्ते गृहीत्वा इदं रजतमिति वदन शुक्तिरजतस्यामात्रमेवावदयति । श्रुतिश्च विशिष्टैतादृगुपाधिना नोपलभ्यत इत्यादिसन्त्वत्र भाष्यादीनां न नैर्भर्यम् । अस्तु वा तदपि सत्यम्, किन्ततः । सर्वं ज्ञानं यथार्थमित्यत्र सुतरामनुकूलमेव च तत्, स्वप्नदृष्टपदार्थविषयकप्रत्यक्षज्ञानस्य तदानन्तसृष्टविषयकतया सुखनिर्वाहात् । अन्यथा यथार्थता चाख्यातिपक्षावलम्बनेनेति प्रागेवोक्तम् ।

'स हि कर्ता', 'य एष सुप्तेषु जागर्ति' इति विस्पष्टश्रुत्या चेश्वरकर्तृकस्वाप्नानाम् । न च जीवेश्वराभेदस्य वास्तवत्वात्तदनुसारेण तत्कृति-

निर्वाह इति शङ्क्यम्—एवं हि सति जगत्कारणत्वमपि जीवस्य भवितुमर्हति । अज्ञानवत्ता चोभयत्राविशिष्टा । सृष्ट्यादेश्च जीवेश्वरभेदकालिकत्वेन नेदानीमभेदस्य प्रकृतश्रुतिविरुद्धस्य स्वीकरणसम्भव । अत एवेश्वरस्य सर्वसाधारणकारणतामात्रेण श्रुतिनिर्वाहोऽपि निरस्त । अत इत्थं वस्तुना वास्तवतया नानिर्वचनीयत्वम् ॥ जपाकुसुमसन्निधाने रक्त स्फटिक इति बुद्धावपि नानिर्वचनीयभानम् । न च कुसुमगतस्य रक्तिम्न इन्द्रियसन्निकृष्टत्वात् तद्विषयकज्ञानस्य रक्तिमप्रत्यक्षत्वसम्भवेऽपि तत्समवायस्य स्फटिकेऽभावादनिर्वचनीय समवाय कल्पनीय इति वाच्यम्—परैस्तु पाक्यस्य विरोधात् ; रक्तिम्न इव तत्समवायस्यापि कुसुमे सन्निकृष्टत्वेन तत्प्रत्यक्षस्यापि निर्वाहसम्भवात् । न च तस्य समवायस्य स्फटिकानुयोगिकत्वाभावादन्य कल्प्य इति शङ्क्यम्—स्फटिक स्फटिकत्वादिसमवायस्य स्फटिकानुयोगिकस्य भावेन वस्त्वन्तरस्याकल्प्यत्वात् । तस्य रक्तिमप्रतियोगिकत्वं नास्तीति चेत्—तत् किं त्वत्कल्पितस्यापूर्वस्य समवायस्य परं कुसुमरक्तिमप्रतियोगिकत्वमस्ति । ननु तर्हि समवायो न कल्प्यते ; किं तु समवाये स्थितं रक्तिमप्रतियोगिकत्वं कल्प्यत इति चेत्—स्फटिकत्वप्रतियोगिकत्वात् समवायस्य, प्रतियोगिताया अप्यकल्पनीयत्वात् । ननु रक्त स्फटिक इत्यत्र रक्तत्व, समवाय, स्फटिक इति त्रयमवानुभवारूढम्, न तु तत्प्रतियोगिकत्व तन्निरूपितत्वमित्यादीति तत्प्रतियोगिकत्वादिकं न कल्प्यते, किं तु समवाय एवेति चेत्—उक्तमेवोत्तरम्, न किञ्चित् कल्पनीयम् । प्रतीयमानस्य सर्वस्यापि सन्निकृष्टत्वेन प्रत्यक्षत्वोपपत्तेरिति । वस्तुत समवायोऽपि सूत्रकारैः पराकृत इति न सोऽपि कल्पयितु शक्य । एवं क्रमेण शोधने अन्ततोऽन्यथाख्यातिरवर्जनीयेति कृत परिश्रमेण, कुसुमरक्तिम्न ख्यातिरन्यथाख्यातिरिति आदावेव सुवचतया अनिर्वचनीयस्य व्यर्थत्वात्, अस्मन्मते तु नान्यथाख्याति, रक्तिमासम्बन्धाग्रह इत्यख्यातिसमर्थनात् । न चास्माकम-

न्यथाख्यातौ द्वेप 'स्वारसमन्यथाख्यातावख्यातौ लाघवं स्थित'मिति तस्या अपि सम्भावनात् ।

यत्तु—(पु. १४९) अलातचक्रे अन्तरालाग्रहणं चक्रप्रतीतिश्च नैकं तत्त्वम् ; अग्रहणस्याभावरूपत्वात् ; प्रतीतेश्च ज्ञानरूपत्वात्, चतुष्कोणे ऽन्तरालाग्रहणसत्त्व एव चक्रप्रतीत्यभावाच । अतोऽनिर्वचनीयचक्रसिद्धिरिति— तन्न—यथा सम्यक्चक्रप्रतीतौ अन्तरालाग्रहणपूर्वकतद्देशसंयुक्तवस्तुग्रहणं तद्वदलातेऽपि ग्रहणमस्तीति विनैवानिर्वचनीय चक्रप्रतीतिर्भाव्ये निरूढत्वात् ।

यदपि प्रतिबिम्बस्थले दर्पणस्य समुखस्य चासम्बद्धत्वात् सम्बन्ध-प्रतीत्याऽनिर्वचनीय सम्बन्ध कल्प्य । एवं दिङ्मोहे पूर्वस्यामुत्तरत्वस्या न्यनिरूपितस्य सत्त्वेऽपि, यदपेक्षयोत्तरत्व प्रतीत्या मन्यते तन्निरूपितत्वे तत्रोत्तरत्वे नास्तीत्यनिर्वचनीयसम्बन्धकल्पनमिति—तदपि कुसुमरक्तिमसमवायन्यायेन निरस्तं वेदितव्यम् ।

यदपि—'द्विचन्द्रज्ञानेऽङ्गुल्यवष्टम्भादिवशेन द्वयीभूता चाक्षुषसामग्री। तत्रैका चन्द्रं स्वाधिकरणविशिष्टं, अन्या तदधिकरणं विना चन्द्रमात्रं गृह्णाती'ति न युक्तम् ; अधिकरणमगृहीत्वा चन्द्रग्रहणायोगादिति, भित्त्यादौ नागदन्ते वस्त्रं निक्षिप्याङ्गुल्यवष्टम्भेन सामग्रीद्वयमुत्पाद्य परीक्षमाणेन भवता नागदन्तं विना वस्त्रग्रहणस्याकृतत्वात् कथितम्—तदपि पुन पुनरेकान्त सावधानं परीक्षमाणेन भवता स्वानुभवेनैव शक्यं निरसितुम् । अनतिमसृ-त्वरसूक्ष्मचाक्षुषरश्मिपातो हि कदाचिच्चन्द्रमण्डलमात्रे भवन् परित प्रदेशे चाभवन् तन्मात्रग्राही समाप्यते । उच्चश्च पदार्थ जातु केनचिदावृता-र्धोऽश अनावृत एव वा तत्रासन्निकृष्ट सन्नाधिकरण विनाऽपि गृह्यते । एवं सर्वत्र सामग्रीसमवधानवैशेष्यात्कस्यचित् ग्रहणमग्रहण चान्यस्य न खलु न सम्भवतीति ।

यदपि—(पु. १५०) बाध्यबाधकभाव, सर्वानुभवविषयतया तद-

हितया चोपपद्यत' इति शुक्तिरजतादेरपि भगवत्सृष्टतया यथार्थत्वपक्षे बाध्य-बाधकभावोपपादने भाष्यदर्शिनमसङ्गतम्; अत्र बहुशिष्यज्ञानस्य एकगुरुज्ञानेन बाधादिति—तत् भाष्यार्थापरिज्ञानात् । एवं भाष्यानुसरण्या भगवत्सृष्टं तत्र सर्वानुभवार्हरजतत्वबुद्धिर्हि भ्रान्तस्य जायते । तत्र वस्तुतस्तदर्हत्वाभावात् तदंशे बाध्यबाधकभावः । यस्यां तस्य प्रत्यक्षदृष्टत्वं तदैव सृष्टत्वप्रयुक्तयथार्थत्वस्याङ्गीकारात्, सर्वानुभवार्हांशस्य तत्रासृष्टत्वादविद्यमानत्वात् तद्विषयबाधस्यायुक्तत्वाभावात् । एवं रजतजातीयानां सर्वकालसर्वपुरुषानुभाव्यत्वस्य स्थितत्वात् अस्य च तद्विलक्षणत्वात् स्वाप्नपदार्थे वस्तुतः सत्यप्यसत्त्वाभिमान इव शुक्तिरजतादावपि सोऽभिमानो भवतीति च भाष्यार्थ इति । बहुशिष्यज्ञानस्य एकगुरुज्ञानेन यो बाधस्तत्र शिष्याणामज्ञत्वाख्यज्ञानस्यानुपपन्नतया अभिज्ञगुरुज्ञानस्योपपन्नतायाश्च परिशीलनमेव मूलमिति तदभावे बहुज्ञानैकज्ञानबाध एव भवेदिति ।

यदपि—'सर्वथाऽनुपपत्तेश्च'ति सूत्रे बौद्धमतोपरि शाङ्करभाष्योक्तप्रकारः अस्मत्सिद्धान्तेऽपि भवतीति वृथाऽऽडम्बरेण विकत्थनम्—तदपि बौद्धमते सम्भवतां सर्वेषामपि दूषणानां भवन्मतेऽपि स्थितिप्रकारोऽस्मादीयेषु प्राचीनग्रन्थेषु विस्तृतां शुद्धाद्वैतप्रभृतिभिरन्यैरद्वैतिभिः तथा द्वैतिभिश्चातिविशदमभिहितां प्रेक्षितुं चेत् पारयिष्यसि नूनं जोषं भविष्यसीति प्रतिबोधनेन परिहरामः ।

इदमत्रावधेयम् । शाङ्करभाष्ये तावत् 'स्मृतिरूपः परत्र पूर्वदृष्टावभासः' इत्येवाध्यासलक्षणमुक्तम् । तत्राऽऽपणादौ पूर्वदृष्टस्यासन्निहितस्य रजतस्य शुक्त्यादिस्थले स्मृतिविशेषोऽध्यास इत्येव स्वरसतः प्रतीयते । तावता स्वाभिमतमनिर्वचनीयमसिद्धं पर्यालोच्य व्याख्यातृभिरन्यैरिव भामतीकारैरप्यन्यथैव व्याख्यानमकारि । अन्ततश्च तैर्मरीचिषु जलाभावात् पूर्वदृष्टगङ्गाजलस्मरणे गङ्गाजलमित्येव प्रतीतिः स्यात् । गङ्गारूपदेश-

स्मृतिप्रमोषेऽपि जलमित्येव स्मृतिः स्यात् न पुनरिह जलम् इदं जलमित्येवमिति हेतोरनिर्वचनीयं किञ्चिदावश्यकमित्यवादि । कल्पतरुकृद्भिश्च मरीचिजलतादात्म्यमनिर्वचनीयमिति मरीच्यम्भोऽनिर्वचनीयमिति चाभ्यधायि । तेन यथायथं सम्बन्धि वा सम्बन्धमात्रं वाऽनिर्वचनीयमिति ज्ञायते । अतश्च सर्वस्यापि भ्रमस्यानिर्वचनीयविषयकत्वमस्तीत्यभ्यूह्यते । परिभाषाकारास्तु, रजतमद्राक्षमिति प्रत्यक्षत्वप्रतीत्यन्यथानुपपत्त्याऽनिर्वचनीयरजतकल्पनम् । न ह्यापणस्थस्य रजतस्य प्रत्यक्षमिह भवितुमर्हति असन्निकृष्टत्वात् । यत्र तु जपाकुसुमसम्बन्धात् रक्तः स्फटिक इति प्रतीतिः तत्र नानिर्वचनीयकल्पना, सन्निकृष्टकुसुमरक्तिम्नैव प्रत्यक्षनिर्वाहादित्याचख्युः । अस्माभिश्च रक्तःस्फटिक इत्यादौ सम्बन्धोऽप्यनिर्वचनीयो न कल्प्य इति प्रागुपपादि । एवं च परिशील्यमाने प्रत्यक्षातिरिक्तभ्रमस्थले, प्रत्यक्षे कचिच्चान्यथाख्यातिरेवेति नानिर्वचनीयं किञ्चिदिति च सिद्धम् । परिमलकारैश्च प्रत्यक्षेऽप्यनिर्वचनीयमनावश्यकमिति न्यरूपि । तथा हि—किमिति प्रत्यक्षे तत्कल्पना । आपणस्थरजते सन्निकर्षाभावात्तद्विषयकप्रत्यक्षासम्भवादिति चेत्—आपणादिप्रसिद्धरजतोत्पादकसामग्र्याः शुक्तावभावात् रजतस्यापि कथमुत्पत्तिः । अन्यत्र क्लृप्तसामग्रीभिन्नं शुक्तित्वाज्ञानचाकचक्यादि अत्र तादृशरजतकारणं कल्प्यत इति चेत्—तर्हि सैव सामग्री दूरस्थरजतप्रत्यक्षभ्रमजनिकैवेत्येव कल्प्यताम् । किमत्रागन्तुनाऽऽयमानेन रजतेन । प्रमात्मकप्रत्यक्षे तु चक्षुः सन्निकर्षाद्यपेक्षा, न सर्वत्रेति वक्तुं शक्यत्वात् । अतोऽत्रापि नानिर्वाच्य कल्प्यमिति ।

परं तु स्वयमनिर्वचनीयस्थापने कश्चित्पन्थाः प्रादर्शि । स यथा शशस्य शृङ्गमीदृशकार्यकरमस्तीति प्रतारकवाक्यश्रवणेन मुग्धस्य अरण्ये तदन्वेषयतः, तदुक्तप्रकारस्य काष्ठस्य शृङ्गान्तरस्य वा दर्शने भवत्यनुभवः, इदं शशशृङ्गमिति । अस्ति च लोके एकमेवावयवि मनुष्यपशुपक्ष्याद्यनेक-

रूपं दृश्यमानम् । न चेदं सर्वं प्रागनुभवाधीनम्; वस्तुत एतत्प्रसिद्धेः। अतस्तत्रानिर्वचनीयसिद्धौ सर्वेष्वपि भ्रमेष्वेकरूप्याय तत्सिद्धिस्वीकार इति । अत्र भ्रमः— अनिर्वचनीयोत्पत्तौ अनुभवाधीनतत्संस्कारस्य कारणत्व मर्यादयास्थितमिति तदभावात्कथमत्रानिर्वचनीयोत्पत्तिः ? यदि तु, 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इत्युक्तरीत्या तुच्छस्यापि शाब्दबोधविषयतायाः अत्रैव प्रकरणे किञ्चित्पूर्वं भवद्भिरुक्तत्वात् प्रतारकवाक्याच्छशशृङ्गबोधो जायत इति स्वीक्रियते, तर्हि पूर्वानुभवस्यैवोपपादितत्वात् अरण्ये 'इदं शशशृङ्ग'मितीदमनुभूतविषयकमेवेति अत को विशेष । अजाते तु प्रतारकवाक्याच्छाब्दबोधे, अगृहीतव्युत्पत्तिकस्येवास्य श्रोतुरपि अरण्ये तथा बुद्धिः कथम् । एवं प्रतारकवाक्यजन्यबोधस्यानिर्वचनीयविषयकत्वे अरण्यगमनादिवर्णनानुधावनं व्यर्थम् । तस्य तदविषयकत्वे त्वरण्ये जातस्यानुभवस्य प्रतारकवाक्योपनतविषयकत्वात्तन्निर्वचनीयविषयकत्वप्रसङ्ग । अनुपाख्यस्य सर्वथा न भानमिति पक्षऽपीह न क्लेश ; इदं शशशृङ्गमिति प्रतीतेः शृङ्गे शशीयत्वांशे इदमर्थे काष्ठे शृङ्गाभेदांशे चान्यथाख्यातिरूपत्वात् । अख्यातिपक्षे च तत्तदसम्बन्धाग्रहमवलितविशकलिततत्तत्प्रतीतिरूपत्वात् । एतेन — स्वप्ने विलक्षणावयविदृष्टिरपि व्याख्याता । वस्तुतस्तथाविधेश्वरसृष्टेस्तत्र श्रुतिबलादस्माभिः स्वीकृतत्वान्न कश्चिद्दोषः । अत कुत्रापि नानिर्वचनीयस्यावश्यकता ।

अन्यच्च श्रूयताम् । विलक्षणरजतोत्पादकसामग्र्या विलक्षणरजतोत्पत्तिकल्पनापेक्षया तत एव दूरस्थरजतप्रत्यक्षोत्पत्तिस्वीकार एव लाघवायुज्यते ; अन्यथा अनन्तरजतोत्पत्तितद्ध्वंसप्रागभावकल्पने तस्य रजतस्य तत्पुरुषमात्रवेद्यत्वकल्पने च गौरवात् । वस्तुतस्तादृशप्रत्यक्षमपि न कल्पनीयम्, रजतस्मृतौ शुक्तिरूपधर्मिप्रत्यक्षगतप्रत्यक्षत्वारोपसम्भवस्य प्रागेवोक्तत्वात् । धर्मिप्रत्यक्षरजतस्मृतिरूपाविच्छिद्द्वयमेकत्वेन गृह्यत इति तावद-

निहितं भाष्ये । तेन स्मृतिरिव प्रत्यक्षत्वेन गृह्यत इति ध्वनितमेव । तथा च एवमेव रजतमद्राक्षमिति प्रतीतिनिर्वाहात्तानिर्वचनीयकल्पना । एवमुत्पत्तिकाले उत्पद्येत, यथ शुक्तिज्ञानेन विनाशकाले च विनाशस्य कुतो नानुभव इत्याक्षेपे तत्र प्रतिबन्धकान्तरस्य कल्पनीयतया गौरवम् । एवं कञ्चित्काल स्थितस्य कथं त्रैकालिकनिषेध इत्यत्रापि पारमार्थिकत्वेन निषेध इति समाधाने गौरवम् । एवं शुक्तौ रजतोत्पादे इदं द्रव्यद्वयमिति गृह्येत । रजतवत् रजताभेदोऽप्यनिर्वचनीयः कल्प्यत इति चेत् किं ततः । त्रय इह पदार्था इति प्रतीतिः स्यात् । तथा प्रतीतौ प्रतिबन्धकान्तरान्वेषणे च गौरवम् । एवं शुक्तिरजतं तोलयन् शुक्तिगुरुत्वं रजतगुरुत्वं चेत्यधिकं गुरुत्वमुपलभेत । काचखण्डं खण्डशर्करामिति मुखे निक्षिपन् माधुर्यमास्वादयेत् । जले निक्षिप्य विलीनं पश्येत् । अथैवंविधबहुधर्मविरहितं प्रतिभाससमानधर्ममात्रविशिष्टं किञ्चिदुत्पन्नमिति चेत्—तत्र रजतादिबुद्धिशब्दौ वस्तुतो न भवितुमर्हतः । अतश्चारजते उत्पन्ना रजतबुद्धिरन्यथाख्यातिरेव । एवमनिर्वचनीयज्ञाने तस्य पारमार्थिकत्वेनैव ग्रहणात् तत्र पारमार्थिकत्वकल्पनाऽसम्भवस्य प्रागुक्तत्वात् अन्यथाख्यातिरवर्जनीया । एवं तदेवेदं रजतमिति यत्र प्राग्दृष्टरजतत्वप्रत्यभिज्ञा शुक्तिरजते परिमलोक्ता, तत्र तवाप्यन्यथाख्यातिरेव, तदायामवस्थायां भवत्सम्मतानिर्वचनीयेऽभावात् । किंच कल्पितं यद्रजतं तद्विषयकप्रत्यक्षमिन्द्रियसन्निकर्षजन्यं न वा । नाद्यः, भवन्मते शुक्तौ रजतोत्पत्तिकाल एव शुक्त्यवच्छिन्नचैतन्याभेदस्य रजतावच्छिन्न चैतन्ये सिद्धत्वात् शुक्त्यवच्छिन्नचैतन्यस्य च प्रागेव वृत्त्यवच्छिन्नचैतन्याभिन्नत्वात् तादृशचैतन्याभेदस्यैव च प्रत्यक्षशब्दार्थत्वात् रजतोत्पत्त्यनन्तरभाविचक्षुःसंयोगसापेक्षताया अत्राभावात् । नान्त्यः, सन्निकर्षं विनाऽपि प्रत्यक्षस्वीकारे प्रत्यक्षभ्रमेऽपि सन्निकर्षोऽपेक्षित इति भवत्कृतनिर्बन्धस्य भवतैव निरस्ततापातात् । एवं मिथ्यारजतेन सह व्यावहारिकसत्यस्य

चक्षुःसंयोगोऽपि दुरुपपादः तस्य व्यावहारिकसत्यत्वासम्भवात् । संयोगः प्रातिभासिक इत्यपि न; चक्षुषोऽतीन्द्रियत्वेन तत्संयोगस्याप्रामाणिकत्वात् अगृहीतप्रातिभासिकस्य चासम्भावनीयत्वात् । अपि च शुक्तित्वाज्ञानजन्यं रजतं शुक्तित्वज्ञानादज्ञाननिवृत्त्यनन्तरं निवर्तते चेत्—तत एवेदं रजतमिति प्रत्यक्षं न युक्तम् । तथा चेयं शुक्तिरिति ज्ञानकाले ततः क्षणद्वये च 'इदं रजतमिति प्रत्यक्षापत्तिः । सामग्रीसत्त्वेन ज्ञानानुदयासम्भवात् प्रातिभासिकसत्त्वे प्रतिभासासत्त्वासम्भवाच्च । उक्तविधया चैतन्याभेदस्य सत्त्वाच्च । किं च इयं शुक्तिरिति वा, नेदं रजतमिति वा ज्ञानेन किं निवर्तते । न तावद्भावरूपं शुक्तित्वाज्ञानम् शुक्तिरजतरूपदृष्टान्तस्यैवासिद्ध्या जगन्मिथ्यात्वासिद्धौ मूलाविद्याया असिद्ध्या तूलाविद्याया अप्यसिद्धत्वात् तस्याज्ञानस्य भावरूपत्वे प्रमाणाभावात् । अत एव रजतासिद्ध्या न रजतनिवृत्तिरपि सुवचा । किं च नेदं रजतमिति प्रतीतेः पारमार्थिकत्वेन रजताभावविषयकतया पारमार्थिकत्वेन रूपेण रजतासिद्धावपि न रजतत्वेन रजतस्योत्पन्नस्य निवृत्तौ किञ्चित् प्रमाणम्; येन रूपेण यस्याभावो गृह्यते तदन्यरूपेणापि तद्बाधस्यानुभवविरुद्धत्वात् । अपि च बाधज्ञानं किञ्चिद्वस्तुनिवर्तकमिति नियमस्य 'स्फटिकोऽयं न लोहितः' इति बाधज्ञानस्थलेऽपारमार्थिकवस्त्वभावेन भङ्गदर्शनात् तद्दृष्टान्तेन सर्वस्यापि बाधज्ञानस्य वस्तुनिवर्तकत्वाभावानुमानं सुकरमिति न शुक्तिरूप्यादिनिवृत्तिः स्यात् । एवं लोहितः स्फटिक इति ज्ञानदृष्टान्तेन इदं रजतमिति ज्ञानस्य अनिर्वचनीयविषयकत्वाभावः पारमार्थिकविषयकत्वं चानुमातुं शक्यत इति नानिर्वचनीयसिद्धिः । किं च शुक्तिरजतमिदं कस्य परिणामः ? न तावदविद्यादेः; तस्य व्यावहारिकत्वात् अस्य च प्रातिभासिकत्वात् तत्सत्ताविषमसत्ताकत्वेन तत्परिणामत्वायोगात् । अन्यथा व्यावहारिकस्य जगतोऽपि पारमार्थिकब्रह्मपरिणामत्वप्रसङ्गात् । ब्रह्मण्यध्यस्तत्वाज्जगतस्तु विवर्तत्वमिति

चेत्—अध्यस्तं किञ्चिदुत्पद्यत इत्यत्रैव प्रमाणं नास्तीति तत्र कारणापेक्षाया एवाप्रसक्तौ ब्रह्मणि तादृशविवर्तोपादानत्वस्यैवासिद्धेः । अतो भ्रमस्थले प्रतीतिरेव कार्या, न तु पदार्थः । प्रतीतेश्च प्रतीत्याधारो जीव एवोपादानमिति न शुक्तिर्वा शुक्तित्वाज्ञानं वा कस्यचिदुपादानम् ।

तस्मादनिर्वचनीयस्य सर्वथैवासिद्धत्वात् न तद्दृष्टान्तेन जगतोऽप्यनिर्वचनीयत्वसम्भव इति जगतो मिथ्यात्वाभावात्, 'मिथ्याभूतस्य मिथ्यैवोपादान'मिति युक्त्या भावरूपाज्ञानानुमानमसिद्धमिति ।

प्रमाणानुपपत्तिर्या तत्राध्यक्षानुमानयोः ।
अयुक्तिरित्थमुक्ताऽथ श्रुत्यादेः सोपपद्यते ॥

---

एवमासिद्धज्ञाने श्रुतिरपि न प्रमाणम् । 'एतं ब्रह्मलोकं न विन्दन्ति । अनृतेन हि प्रत्यूढाः' इति श्रुतावनृतशब्दस्तु काम्यकर्मपरः, न तु पराभिमताज्ञानपरः । यत्तु—ऋतमकाम्यकर्म । अनृतं काम्यमिति न युक्तम् । ऋतशब्दस्य सत्यवाचित्वेन कर्मवाचित्वाभावात् । अत एव 'ऋतं पिबन्तौ सुकृतस्य लोके' इति श्रुतौ ऋतशब्दः कर्मपरो दृष्ट इत्यप्ययुक्तम्, तत्रापि सत्यवाचित्वात् । सत्यमवश्यम्भावि फलं तत्रार्थ इति—छत्र-सत्यप्रतिद्वन्द्विन एवानृतशब्दविवक्षितत्वे श्रुतिः 'त इमे सत्याः कामा' इत्येवमुपस्थितं सत्यशब्दमेव घटयन्ती 'असत्यापिधाना' 'असत्येन हि प्रत्यूढा' इति प्रयुङ्क्ते । एवमकृत्वाऽनृतशब्दप्रयोगात् तत्रत्य ऋतशब्दः सत्यातिरिक्तार्थपर इति ज्ञायत इति हेतोरर्थान्तरस्वीकारात् । न खलु सत्यवाचित्वमेव ऋतशब्दस्य, पुण्यकर्मवाचित्वस्यापि श्रुतिसिद्धत्वात् । न चानृतशब्दस्य सत्यवाचित्वं निषेधामः, किं तु प्रकृते पुण्यकर्मवाचित्वमित्येव ब्रूमः । पुण्यकर्मवाचित्वं कथं श्रुतिसिद्धमिति चेत्—'पुण्यस्य कर्मणो दूराद्गन्धो वाति, एवमनृतादात्मानं जुगुप्सेत्' इति श्रुतावनृतशब्दस्य

प्रस्तुतपुण्यकर्मप्रतिपत्तिपरत्वात् ऋतशब्दः पुण्यकर्मवाची निश्चीयत इति श्रुतप्रकाशिकायां स्पष्टम् । अत एव 'ऋतं पिबन्तौ' इत्यत्रर्तमेव पुण्यकर्मोक्तम् । कामिनश्चाभ्युदयार्थं कर्मैव पुण्यकर्म । मुमुक्षोस्तु 'सर्वे पाप्मानोऽतो निवर्तन्ते' इति श्रुत्याद्यनुसारात् तदपि पापकर्मैव । अतः फलाभिसन्धिरहितं परमपुरुषाराधनरूपं कर्म पुण्यकर्म । अत इह मुमुक्षुप्रकरणेऽनृतशब्दस्तदभिमतपुण्यकर्मभिन्नं सर्वं सांसारिकफलकं कर्म प्रतिपादयतीत्युच्यते । एवमन्यथासिद्धत्वादनृतशब्दो नाज्ञानसाधक इति ।

एतेन (पृ. १५१) ऋतशब्दस्य कर्मसामान्यवाचित्वेऽकाम्यकर्मेति सङ्कोचो न युक्त इत्यपि निरस्तम्—कर्मसामान्यवाचित्वाभावात्, पुण्यकर्ममात्रवाचित्वात् । पुण्यत्वस्य च प्रकरणानुरोधेन ग्राह्यतया सङ्कोचाभावात् । यत्पुनः—ब्राह्मण एवाब्राह्मणशब्दप्रयोगाभावात् ऋतशब्दस्य कर्मसामान्यवाचित्वे कर्मविशेष एवानृतशब्दप्रयोगोऽनुपपन्न इति—तदप्येव ऋतशब्दस्य कर्मसामान्यवाचित्वनिरासेन परिहृतम् । अथाप्युच्यते । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति पशुत्वापशुशब्दप्रयोगवद्युज्यत इति । तत्र प्रशस्तपशुभेदो विवक्षित इति चेत्—इहापि प्रशस्तकर्मभेद एव विवक्षित इति । यत्तु सुषुप्तौ कर्माभावात् कथं तदा अनृतेन प्रत्यूढत्वमिति—तत्कर्मणां क्षणिकतया स्वयमेव नष्टत्वात्, 'क्षीयन्ते चास्य कर्माणी'ति परावरदर्शनोत्तरक्षयकथनं कथं सङ्गच्छत इति प्रश्नेन परिहृयते । तत्र सुषुप्तेऽक्षीणकर्मत्वस्य भवताऽप्युपपादनीयतया न कर्मप्रत्यूढत्वस्य तत्र भङ्ग इति ।

इदमप्यत्र बोद्ध्यम् । अस्तु तावदृतशब्दः सत्यवाची, तथाप्यनृतमिति कर्मविशेष एवोच्यते । तथा हि—अस्मिन् खण्डे 'त इमे सत्याः कामा अनृतापिधानाः' । तेषां सत्यानां सतामनृतमपिधानमित्युपक्रान्तम् । अत्र स्वारस्यादनृतशब्दः सत्यपि शब्दभेदे असत्यपर एवेति स्वीकारे,

'अनृतेन हि प्रत्यूढाः' इत्युपरितनवाक्येऽपि हिशब्देन पूर्वोक्तार्थसारकत्व-दर्शनादनृतशब्दोऽसत्यपरः । उपक्रमेऽसत्यार्थकत्वं च कामेषु सत्यशब्द-निर्देशादौचित्यादुक्तमिति च कामेषु सत्यत्वं यादृशमुच्यते, तद्विपरीतमसत्य-त्वमनृतशब्देनोच्यत इति स्वीकार्यम् । भवन्मते चैकमेव पारमार्थिकं, अन्यत् सर्वमसत्यमिति प्रतिज्ञानादुपक्रमे बहूनां कामानां सत्यत्वकथनं भवन्मतभङ्गकरं । सत्यपदेन व्यावहारिकसत्यग्रहणे तु अनृतपदं तद्वि-रुद्धेनैव वदेदिति भवदभिमतं व्यावहारिकसत्यत्वमज्ञानस्यानृतपदविवक्षितस्य न सिद्ध्येत् । एवं पारमार्थिकं व्यावहारिकं वा सत्यत्वं न प्रकृतानृतपदार्थ इत्यभिप्रायेणैव श्रुतप्रकाशिकायाम्, 'ऋतशब्दो न सत्यवाची' इत्युक्तम् ।

तथा चास्याः श्रुतेरयमर्थः—सत्यकामः सत्यसङ्कल्प इति गुणद्वयं 'स यदि पितृलोककामः' इत्यादिना पूर्वमुपपाद्य, 'त इमे सत्याः कामाः' इति तदनुवादेनान्यदिह प्रपञ्च्यते । एषां कामानामिच्छानां सत्यत्वं चाविनाभूतफलकत्वम् । भवतु फलमिष्टं सर्वम्, अथापि तत् किमन्यस्मात् याचनेन तदर्थोपकरणसम्भरणेन वा सम्पाद्यमित्याशङ्कायां सत्यसङ्कल्प इत्युक्तम् । यदिष्टं तत् सङ्कल्पमात्रेण साधयितुं शक्यमिति तदर्थः । अतः सङ्कल्पस्य अशक्तसङ्कल्पवत् वन्ध्यत्वं नास्तीति ज्ञापनायोक्तं सत्यत्वं अविनाभूतफलकत्वरूपमेवेति कामानां सत्यत्वमपि तादृशमेव । इदमेव च पूर्वखण्डान्ते श्रुत्याऽप्यदर्शि, 'यं यमन्तमभिकामो भवति सोऽस्य सङ्कल्पादेव समुत्तिष्ठति' इति । अत्र च 'कामसङ्कल्पयोरुभयोः प्रस्तुतत्वात् 'त इमे सत्याः' कामाः इत्यत्र कामशब्दस्य सङ्कल्पोपलक्षणत्वमावश्यकमिति अनयैव रीत्याऽपहतपाप्मत्वादीनामन्येषामुक्तानामप्युपलक्षणत्वं युज्यते, काम्य-मानत्वं हि सर्वविशिष्टमिति विचिन्त्य 'अस्मिन् कामाः समाहिताः' इत्यत्रा-पहतपाप्मत्वादिसर्वग्रहणमसङ्कोच्यकृत्वमभिमतम् । एवं दहराधिकरणे नित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ इति व्याख्यानवचनमपि कामशब्द-

स्योपलक्षणत्वात्सर्वोपलक्षणत्वं युक्तमित्यभिप्रायेण, वस्तुन इच्छाया सत्यत्वोक्तौ भगवदिच्छायास्सामान्यपर्यालोचने तद्विषयीभूतसर्वविशिष्टं सिद्धं भवतीति वा तदाशय । अतो गुणाष्टकान्तर्गतं सत्यकामत्वं सत्यसंकल्पत्वमिति पक्षोऽपि नातीव दुरूपपादः, सर्वथा तात्पर्ये विरोधाभावात् । 'कामः सङ्कल्पो विचिकित्सेति' श्रुतौ गुणरूपयोः कामसङ्कल्पयोर्भेदोऽपि हि प्रसिद्धः । एवं च सत्यशब्दानुरोधात् अवश्यभाविफलकार्थः ऋतशब्दः, अनृतशब्दश्च तद्भिन्नकिञ्चित्परः इति सिद्धम् । मोक्षानुभवश्च कर्मणा प्रतिबद्ध इति प्रसिद्धमेतत् ।

तत्र 'क्षीयन्ते चास्य कर्माणि' इत्याद्यनुसारेण नश्वरत्वात् कर्मणामवश्यभाविफलकत्वाभावात्, 'नेहाभिक्रमनाशोऽस्ति' इत्यादिना फलाभिसन्धिरहितानां परमपुरुषाराधनभूतानां कर्मणामवश्यभाविफलकत्वस्य स्वीकृतत्वाच्च एकमनृतं, अन्यदृतमिति निर्धीयते । यद्यपि प्रकृते ऋतपदेन कामा एव सत्याः पूर्वोक्ताः गृहीत्वा तद्विलक्षणत्वेनैवानृतपदेन काम्यकर्म शक्यं ग्रहीतुम्, अथाप्यर्थपुष्ट्यभिप्रायेण ऋतशब्देनापि कर्मग्रहणम् । एवमर्थमेव मनसि निधायैव श्रुतिः सत्यशब्दं परित्यज्य ऋतपदं तद्भिन्नमाह्वयत । तत्र ऋतशब्दः कर्मणि न प्रयुक्त इत्याशङ्का मा भूदिति, 'ऋतं पिबन्तौ' इति श्रुतिर्भाष्ये उपात्ता । कामिना काम्यमपि कर्म, 'नाभुक्तं क्षीयते कर्म' इति न्यायेनावश्यभाविफलकमेव । शास्त्रार्थतत्त्वपर्यालोचनेन तु परमपुरुषाराधनकर्मपराणां तदेव काम्यं कर्मानृतं भवति । कर्मयोगादिकमेव तु ऋतं भवति । अतोऽनभ्यासादपि सांसारिकफलकर्मप्रवृत्तेः परमपुरुषाराधनकर्मभिर्मुक्तैरेव कामाः सत्याः लब्धुं न शक्यन्ते । सम्प्रति परमपुरुषाराधनकर्मारम्भेऽपि प्राक्तनकाम्यकर्माणि न प्रतिबध्नन्तीति न मन्तव्यम्–तेषामनृतत्वेन प्रत्यायमपेक्षितेरिति श्रुतिरादरेण सर्वमिहोपदिशतीत्याशय । अतोऽनृतेन कर्मणा प्रत्यूढत्वादेव ब्रह्मलोकं न विन्दन्ति । इदमेवोक्तं श्रीविष्णुपुराणेऽपि--

'अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥'

इति । न विन्दन्तीति श्रुतेर्ब्रह्मलाभाभावमात्रे न तात्पर्यम् । किन्तु विरुद्धतापावाप्तावपीति प्रकृतपुराणवाक्याशय इति ।

इदं तु तत्त्वम् —दहरविद्यायां, 'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्य'मिति हृदयपुण्डरीकान्तर्वर्तिनि दहराकाशपदाभिधेये परमात्मन्यन्तः स्थितं किं यदन्वेष्टव्यमिति प्रक्रम्य, 'तं चेद्ब्रूयु'रित्यादिना अस्य रूपस्य तस्यान्तः किं स्यादित्याक्षिप्य, 'स ब्रूया'दित्यादिना सर्वाधारत्वोपयोगि वैपुल्यं वस्तुतस्तस्यास्तीत्यभिधाय तेन दहरत्वकल्पनमुपासनसौकर्याय हृदयपरिच्छेदकल्पनयेत्याम्रुच्य, 'एवं वैपुल्यस्य भूताकाशान्यूनस्य सद्भावात् द्यावापृथिव्यग्निवायुसूर्यचन्द्रविद्युन्नक्षत्राद्याधारत्वमस्य । न केवलमेवं प्राकृतजनानुपासकस्यानुभवगोचरं यत् तन्मात्रम्, किन्त्वन्यदपि सम्प्रत्यसत्त्वानुभवं प्राकृतमप्राकृतं च कामजातमस्यान्तरस्तीति 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित'मित्यनेनोक्त्वा, एवं सर्वाधारत्वार्हवैपुल्याश्रयत्वात्तदन्तर्गतमन्वेष्टव्यमित्युक्तमनुपपन्नमित्यवगमय्य पुनरपि, एवम्भूतस्यापि जराप्रध्वंसार्हशरीरान्तःस्थतया शरीरधर्मत्वाच्छरीरप्रध्वंसे सर्वप्रध्वंस इत्याक्षिप्य, 'नास्य जरयैतज्जीर्यति, न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुर'मिति अविनाशित्वरूपं सत्यत्वं ब्रह्मणो बोधयित्वा, तदन्तःस्थमन्वेष्टव्यं 'अस्मिन् कामाः समाहिताः' इत्युपदिश्य, तेषामप्यविनाशित्वं 'एष आत्माऽपहतपाप्मा सत्यकामः सत्यसङ्कल्प' इत्युपक्षिप्य, 'यथा ह्येवेह प्रजा अन्वाविशन्ति' इत्यादिना 'अकामचारो भवती'त्यन्तेनान्येषां कामानां नश्वरत्वं प्रतिहतिं च प्रदर्श्य, 'अथ य इहात्मान'मित्यादिना सत्यस्य ब्रह्मणस्तन्निष्ठानां सत्यानां कामानां चोपासितुः फलमनुपासकलभ्यकामान्तर-

विलक्षणं प्रतिपाद्य, 'स यदि पितृलोककामो भवति' इत्यादिना सत्यकामत्व-सत्यसङ्कल्पत्वयोर्विवरणं विधाय, 'त इमे सत्याः कामा अनृतापिधानाः' इति, 'एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः' इति चाभिहितम् । अत्र कामशब्दो भगवद्भोगोपकरणादिकाम्यमानवस्तुपर एव युक्तः, श्रुतिषु 'यं कामं कामयते', 'ये ये कामा दुर्लभा मर्त्यलोके' इत्येवं प्रायेण काम्यमानपरत्वेनैव प्रयोगात्, अत्रापि 'सर्वं तदस्मिन् समाहितम्' इत्यत्र 'अस्मिन् कामाः समाहिताः' इत्यत्र समाहितपदप्रयोगेण तत्रत्यस्य कामपदस्य वस्तुपरत्वावगमात्, 'ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः' इतीह तत्पदस्य वस्तुपरतया तेषामेव कामानामत्र ग्रहणौचित्याच्च । अतः सत्यकामपदस्य नित्यविभूत्यादिकाम्यमानपदार्थपरत्वमेव भाष्यादिदृष्टं साधीयः । एवं चेद्दहराकाशमात्रस्य 'अस्मिन् कामाः' 'सत्याः कामाः' इत्यत्र ग्रहणसम्भवेऽपि अपहतपाप्मत्वादेरप्युक्तिः पूर्वोक्तरीत्याऽपहतपाप्मत्वादेरपि काम्यमानत्वाविशेषात्, ईदृशसत्यकामत्वस्यापि परमात्मासाधारणतया किंचिद्गुणरूपतया, सम्भवत्यत्र सर्वत्र कामपदस्य सर्वगुणपरत्वं युक्तमित्याशयेन । अपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तं च इह सत्यकामत्वोपपादकम् । अतस्तेन सह तेषामपि ग्रहणम् । एवमेव, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति तैत्तिरीयेऽपि द्रष्टव्यम् ।

एवं चात्र प्रकरणे प्रथमं कामानां सङ्कल्पस्य च सत्यत्वं प्रकृतं किंरूपमिति विचारः—ब्रह्मणः सत्यत्वमविनाशित्वरूपमेव, न त्वन्यादृशपारमार्थिकत्वरूपमिति, 'न वधेनास्य हन्यते एतत्सत्यं ब्रह्मपुर'मित्यत्र व्यक्तम् । काम्यमानानां सत्यत्वमप्यविनाशित्वमेव । तच्च वस्तुना यावदपेक्षमनुवृत्ति काम्यमानतादशायामविनश्यत्त्वम् । ईदृशसत्यत्वं त्रिवर्गेतरसम्बन्धिनि कामे नास्ति । इदं च नित्यानित्यकामसाधारणम् । यदा तु मुक्तः किञ्चित् कामयित्वा पश्चात्तन्न वाञ्छति तदा तद्विनाशस्यापेक्षक

त्वोक्त मुक्तकामेषु सर्वत्रात्यन्तनित्यत्वरूपं सत्यत्वं सुवचम् । एवं सङ्कल्पस्य सत्यत्वमप्रतिहतत्वरूपम् । इदमेव चावश्यंभाविफलकत्वम् । तथा चानृतेनेत्यत्र अनृतशब्देनोक्तत्रिविधसत्यमध्ये या काचित् सत्यविधा विवक्ष्यताम् । एवमप्यनृतशब्दं विनाशित्वादिकमेव दर्शयेत्, न तु भवदभिमतमनिर्वचनीयत्वम् ।

तत्र च, 'पुण्यचितो लोकः क्षीयते' 'तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति काम्यकर्मप्रावण्यादात्माज्ञानमित्यस्य दर्शितत्वात्, उपरि च, 'ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति', 'ब्रह्मचर्येण ह्यात्मानमनुविद्य मनुते' इति यज्ञ इष्ट-सत्त्रायण-मौन अनाशकायन- अरण्यायनरूपब्रह्मचर्येण ब्रह्मज्ञानस्य वक्ष्यमाणत्वात्, 'य इह आत्मानमनुविद्य व्रजन्ति' इत्यत्रापीदं विवक्षितमिति पूर्वापरपर्यालोचनया, 'सत्यं चानृतं च सत्यमभव'दित्यादाविव विवेचनमात्रविवक्षया-यथा वा निर्वाहापेक्षया प्रकृतेऽनृतशब्दो भगवदर्पणत्वेनामुख्यं यत् कर्म तद्विलक्षणमुख्यकर्मपर इत्येव युक्तमित्याशयेनैव एव भाषितमिति सर्वमनाकुलम् । अतो भवदभिमतं भावरूपाज्ञानं मिथ्याभूतं नानृतशब्दार्थ इति ।

'नासदासीन्नो सदासीत्तदानी'मिति श्रुत्या सदसदनिर्वचनीयाज्ञानसिद्धि(पु १५१)रित्यपि न—'असदेवेदमग्र आसीत्, सदेव सौम्येदमग्र आसी'दिति श्रुतिविरोधात् । किं च 'नासदासी'दिति श्रुतौ सदसच्छब्दयोः कोऽर्थः? 'सच्च त्यच्चाभवत्' इति श्रुतौ सत्त्यच्छब्दयोर्योऽर्थः स इह न ग्राह्यः, अत्र त्यत्पदाभावा'दिति भवतोक्तम् । 'तत्र मूर्तामूर्ते सत्त्यच्छब्दवाच्ये, अत्र तु सायणभाष्यार्थो ग्राह्य' इत्यप्युक्तम् । सायणभाष्ये तु नामरूपविशिष्टं जगत् सत्पदार्थः, शशविषाणादिकमसत्पदार्थ' इत्युक्तम् । तदुभयभिन्नमासीदग्र इति श्रुत्यर्थः सिद्ध्यति । तावता भवदभिमतमनिर्वचनीयं कथं सिद्धम् । न हि सच्छब्द इह पारमार्थिकसद्रूपपरः । न च

तन्निषेद्धुं शक्यते इति । 'अस्माभिश्च शशशृङ्गविलक्षणं जगद्विलक्षणं चा-
विभक्तनामरूपं तत्त्वं किञ्चिदासीदित्युच्यते चेत्—क इह श्रुतिविरोधः ।
किञ्च 'तत्सर्वोपनिषत्प्रसिद्धं ब्रह्म वस्तु' इत्युपरितनग्रन्थेन 'नासदासी'-
दिति श्रुतिर्ब्रह्मविषयेति प्रतीयते, न त्वज्ञानविषयेति । अत एव सद-
सदनिर्वचनं यत्नसिद्धम् । वस्तुतः श्रुताविह 'तुच्छ्येने'ति तमस्त्वेन
तुच्छत्वकथनाद्भवदभिमतं तुच्छमेव भवेत् । अतः श्रुतिर्भाष्यं च भव-
दभिमतप्रतिकूले । अस्मन्मते तु सदसच्छब्दौ चिदचिद्विशिष्टपरौ । न च
तत्र प्रमाणाभावः, श्रीविष्णुपुराणवचनार्थविचारावसरे तथाऽर्थनिष्कर्षस्य
श्रीभाष्य एव स्पष्टत्वात् । एवं सत्यच्छब्दार्थः, त्यपदस्य सर्वनाम्न उप-
स्थितसद्विशेषपरत्वात् । उपरि, 'तमसा गूढमग्रे प्रकेतम्, सलिलं सर्वमा
इदं, तुच्छ्येनाभ्वपिहितं यदासीत्, तपसस्तन्महिनाऽजायतैकम्' इत्यत्र,
'प्रकृतं जगत् तमसा गूढमि'ति वर्णोपक्षा सलिलमात्रमिवासीदिति इष्टा तद्विव-
याऽध्याहारादिना च सायणभाष्योक्तमपि यद्यपि नास्माकं विरोधि, अथा-
प्येवं युक्तम्—तमसा यवनिकया ब्रह्म गूढं प्रकर्षेण ज्ञातुमशक्यमासीत् ।
अथ सृष्ट्यारम्भे सर्वमिदं सलिलमासीत् । आभु समन्ताद्व्याप्यपि वस्तु
तुच्छ्येन अविभक्तनामरूपतया भावरूपेणाक्षरेण अपिहितं यदासीत् तत् एकं
तमसो महिना महत्त्वेनाजायत । एकमजायतेत्यनेन कार्यत्वं ब्रह्मपर्य-
न्तमित्युच्यते । तमसो महिनेत्यनेन स्थूलत्वं शरीरविशिष्टमिति । अस्तु
वा कश्चिदर्थः । सदसदनिर्वचनीयमज्ञानं तु नात्र श्रुतमिति ।

एवं मायाशब्दोऽपि विचित्रार्थसर्गकरवाची, न तु मिथ्यावाची ।
यत्तु मिथ्यात्वे सति विचित्रार्थसर्गकरत्वं मायात्वम् (पृ. १५२) इति—
तत् मिथ्यात्वस्य प्रवृत्तिनिमित्तकोटौ प्रवेशे गौरवादव्यावर्तकत्वाच्चोपेक्ष्यमेव ।
किं च मिथ्यावस्तुना विचित्रचित्तविकारकारित्वेऽपि न विचित्रार्थसर्गकरत्वम् ।
न हि रज्जुसर्पो विषं वमेत् । न च मिथ्यात्वं क्वाचित्कसाधारणम्, यद्व तु

यत्र सम्बन्धेन यत्र सामग्र्यन्तरेणापि प्रतीयते तस्य वस्तुनस्तेन सम्बन्धेन तत्र मिथ्यात्वम्—यथा शुक्तौ रजतमभेदसम्बन्धेन, शङ्खे पीतत्वं च समवायेन प्रतीयत इति तत्र तन्मिथ्या । एवं च जगदन्तर्गतपदार्थानां परिच्छिन्नत्वेन तदसम्बन्धिदेशकालयोरपि सद्भावात् तादृशदेशविशेषे, कालविशेषे च तत्पदार्थप्रतीतिबाधश्च सम्भाव्यते । ब्रह्मणस्त्वपरिच्छिन्नत्वेन न कुत्रापि बाधावकाश इत्येतादृशस्य पुरस्कारेणापि जगन्मिथ्यात्वब्रह्मपारमार्थिकत्वव्यवहारस्तत्र तत्र एव उपपद्यते । न तावता यत्र ये पदार्थोऽस्ति तत्रापि तदभावरूपं मिथ्यात्वं सुवचमिति ध्येयम् । 'न हि सर्वत्र मायाशब्दो मिथ्याविषय' इति भाष्यस्य च 'न कुत्रापि मायाशब्दो मिथ्याविषयक' इत्येवार्थः । ऐन्द्रजालिकपदार्था अपि कतिपयदेवतासहकारमात्रिताश्चाविनाशिन आश्चर्यभूता मायिका, न त्वसत्याः । 'विचित्रकार्यकरणा अचिन्तितफलप्रदा । स्वप्नेन्द्रजालवल्लोके तेन माया प्रकीर्तिता ॥ इति दशपुराणवाक्येऽपि मिथ्यात्वं नोक्तम्, कार्यकारित्वफलप्रदत्वकीर्तनात् । उदाहरणमुच्यते स्वप्न इति । स्वप्नस्य सत्यत्वं च प्रागवादि । तमःशब्दवाच्या प्रकृतिरूपमत्यभूतैव भगवता माया ।

'तेन मायासहस्रं तच्छम्बरस्याऽऽशुगामिना ।
बालस्य रक्षता देहमेकैकश्येन सूदितम् ॥'

इति वचने शस्त्रच्छेद्यत्वकथनादपि माया न मिथ्या । यत्तु—(पृ १५४) रज्जुः केन चिच्छिद्यमानाया भ्रान्तः, सर्पश्छिद्यते इत्येव प्रत्येति, तद्वदिदमपीति—तन्न युक्तम्—भगवत्पराशरवाक्यं हीदम्, न तु यत्किञ्चिद्भ्रान्तजल्पितम् । भ्रान्तोऽपि सर्पश्छिन्न इत्येव जातु वदेत् । न तु मायाशब्दघटनेन माया छिन्नेति । स्वदभिमतार्थविवक्षया मायाशब्दं प्रयुञ्जान कथं नु छिन्नेति सह प्रयुञ्जीत । मिथ्येति जानन्, नष्ट इति न कश्चिद्वदेत् । किञ्च शम्बरासुरो मायासहस्रं किमिति प्रेरयति । न हि मिथ्या

सर्पो दशेत् । अत्र सम्यग्दर्शदशायां हान्यभावात् वस्तुमिथ्यात्वे विवेकी लोपमेव लिप्सेत् । अतो बालदेहरक्षणप्रसक्तिरेव नास्तीति अवश्यं मायासदृशं सत्यसदृशमेव । एवमन्यदपि मायाप्रतिपादकवचनं भाव्यम् । अत आश्चर्यत्वमेव मायात्वमिति । तस्मान्न श्रुतिरज्ञाने भवदभिमतं प्रमाणम् ।

नापि श्रुतार्थापत्तिः । तत्त्वमसीति जीवब्रह्मणोरैक्योपदेशात्, सति भेदे तदयोगेन भेदस्य मिथ्यात्वे सिद्धे तद्धेतुतया मिथ्याभूतमज्ञानं सिद्ध्यतीति हि भवद्भिरुच्यते । न चान्यथानुपपत्तिरस्ति, अनन्तभेदश्रुत्यनुरोधेन कतिपयाभेदश्रुतीनामन्यथैवोपपत्तेः । प्रत्यक्षमनुमानं बहुश्रुतिवाक्यबाधापेक्षया कतिपयश्रुत्यन्यथाकरणस्यैव युक्तत्वात् । अभेदश्रुतिरक्षणप्रवृत्तैर्भवद्भिरपि निर्विशेषमात्रलक्षणा बाधार्थसामानाधिकरण्यादिभिरभेदश्रुतयोऽन्यथा क्रियन्त एव । इयान् विशेषः—परे श्रुत्यन्तराणि प्रत्यक्षादि च रक्ष्यन्ते । भवद्भिः सर्वमन्यथा क्रियत इति । एवं तावदभेदश्रुतीनामन्यथाकरणमन्वारुह्योक्तम् । वस्तुतोऽभेदश्रुतयः स्वरसार्थपरा अस्माभिः परिपाल्यन्ते, अपृथक्सिद्धधर्मवाचिनां शब्दानां धर्मिपर्यन्ततायाः लोकवेदसमसिद्धत्वात् । अतस्त्वंशब्दो जीवान्तर्यामिपर्यन्तवाचकः । न तु 'तच्छब्दो ब्रह्मशरीरवाचक' इत्यस्माभिरुच्यते । तदिदमस्मत्कृते आचार्यभाष्यतात्पर्ये ईशोपनिषदनुबन्धिनि विस्तरेण द्रष्टव्यम् ।

त्वंशब्दश्रवणे एव बुद्धिर्नोदेतीति यदुच्यते—तन्मूलमल्पवेदान्तव्युत्पत्तिकानां तथैव । त्वं तु स्त्रीत्यादौ ब्रह्मणि तु स्त्रित्वाप्रतीतिश्च । 'विधिनिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे' इति न्यायादिति भवतैवोक्तम् । अनुवादस्थलेऽयं न्यायो न प्रसरतीति न मन्तव्यम्, तत्रापि शिखी ध्वस्त इत्यादौ तत्प्रसरात् । नित्यो घट इत्यप्रयोगस्तु कदाचिदपि घटपदस्य घटत्वमात्रे निष्कृष्य प्रयोगस्याकरणात् । ये तु शब्दाः कदाचिन्निष्कर्षकाः, कदाचिन्न, तत्र यथायथं प्रयोगः । स च शब्दस्सर्व

नामसंज्ञको वा भवत्वन्यथा वा, सर्वथा विशिष्टवाचित्वमस्त्येव । यत्तु-(पु. १५५) जीव परमात्मा, जड परमात्मेति प्रयोगस्स्यादित्यापादनम्-तदिद, सर्वं खल्विद ब्रह्मेति वाक्य श्रुतवता नैव कर्तुं शक्यते, इष्टत्वात् । अतश्च 'अनेन जीवेनात्मने'ति जीवशब्द जीवान्तर्यामिपर । नामव्याकरणात्पूर्वं वस्तुनि भगवताऽनुप्रवेशवर्णन भगवतस्तदन्त प्रविश्य स्थितिरोधनेन भगवत्यपि तन्नामवाच्यत्वमस्तीति ज्ञापनार्थमिति नामरूपव्याकरणश्रुतिरपि शब्दानामन्तर्यामिपरत्वे प्रमाणमेव । यत्तु पयसि निगूढ घृतमिति पयश्शब्द पयोऽन्तर्यामिघृतमभिदध्यादिति—तदन्तर्यामिशब्दार्थं पयोघृतयोस्सम्बन्धविशेष च जानता नैव प्रष्टु शक्यम् । एव घटशब्देन कुलाल उच्यतामित्याक्षेपोऽपि अद्भुत मतज्ञानमावहति ।

(पु १५६) वायुपुराणे प्रक्षिप्ताना, देवीभागवतवचनाना च प्रायैरुदाहृतानामप्रामाणिकत्वमेवेति न ततो भवदिष्ट सिद्ध्येत् । एव श्रुतिष्वपु श्रुतार्थापत्त्यसम्भवस्योक्तत्वात् शरीरशरीरिभावेन मुख्यविधया सामानाधिकरण्यनिर्वाहात् 'ज्योतीषि विष्णु रित्यादिविष्णुपुराणवचनादितोऽपि भेदरक्षणाय भेदमिथ्यात्वप्रसक्तिरिति न श्रुतार्थापत्त्युत्थाप्यवकाश ।

यत्तु- (पु १५७) जगतो विष्णुशरीरत्व न भवितुमर्हति । कर्मजन्यफलभोगायतन शरीरमिति लोके प्रसिद्धत्वादिति—तदिद श्रीभाष्यानवलोकनमूलकम् । वेदे पुराणादिषु च जगतो विष्णुसम्बन्धवर्णनावसर प्रयुक्ताना, शरीर, वपु, काय, तनु, मूर्ति, रूप, शक्ति, विभूतिरित्यादीना पदाना केवल स्वरूपपरत्वेन क्लेशेनार्थवर्णन स्वकल्पितसिद्धान्तश्रद्धामूलमेव । यत्र कचित् शरीरशब्दस्य स्वरूपार्थकत्व यथगत्या लक्षणया स्वीक्रियत किमित्यत्र मुख्यार्थसम्भवे तदुपेक्षा । रूपशब्दश्चोभयसाधारणत्वान्न विशिष्य भवत्पक्षसाधक । एव मूर्तिशब्दोऽपि । अत शरीरादिशब्दानुसारेण रूपादिसामान्यशब्दोऽप्यस्मदभिमतविशेषपर

... सिद्धं जगत परमात्मशरीरत्वम् । मीमांसकनयादिभिरुपन्यस्तक-
मकारस्य प्रात्यनावाधितत्वेषु ग्रन्थ । अस्मद्विरचिते शारीरकप्रमाणनिरूपणे-
ग्रन्थे चान्यदप्यपेक्षितमवेक्ष्यम् ।

किं बहुना । भट्टकुमारिलपादैः ३–१ प्रदेशत्याधिकरणे, 'शरीरत्वस्य न पार्थिवत्वेन व्याप्ति, आप्यतैजसवायवीयशरीराणामपि दर्श नात् ।' 'ये हि जना स्वर्गं लोकं यान्ति' तेषामेतानि ज्योतींषि, पञ्चशरीराणीति श्रुते । नापि भौतिकत्वेन व्याप्ति ।

'तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुत ।
इष्यते वायुना नित्य य स्व प्रभोति चोदित ॥
रूपस्पर्शादयो येऽपि महाभूतगुणा स्थिता ।
प्रत्येकमात्मना तेऽपि देहा सम्भोगहेतव ॥
शब्दब्रह्मेति यच्चेद शास्त्र वेदाख्यमुच्यते ।
तदप्यधिष्ठित सर्वमेकेन परमात्मना ॥
तथर्ग्वेदादयो वेदा भोक्तारस्तेऽपि पृथक्पृथक् ।
भोग्यत्वेनाऽऽत्मना तेऽपि चैतन्यानुगतास्सदा ॥'

इत्युपन्यस्य, करचरणादिमत्त्वमिन्द्रियाश्रयत्वमित्यादि ■ लक्षणमित्यभिप्रायेण सर्वस्यापि पदार्थस्य परमात्मशरीरत्वम्, वेदे श्रुताना 'स ब्रह्म' इत्यादिसमानाधिकरणवाक्यानामुक्तशरीरशरीरिभावनिबन्धनत्व च विस्पष्टमेवोद्धुष्टम् ।

न्यायसुधाकृता च व्याख्याता भट्टसोमेश्वरेण अन्तर्यामिब्राह्मणाद्युपन्यासेन, वेदस्य सिद्धेऽर्थे प्रामाण्यादिसर्वमप्रातपथ्यमिति निरूपणपूर्वक, 'शरीर चेदानित्यमित्यपि न व्याप्ति । नित्यस्य व्योमवेदादेरपि शरीरत्वस्य शास्त्रीयत्वात् । तेषा देहत्व च वार्तिकोक्त सम्भोगहेतुत्वम्, तच्च नियमनलक्षणभोगाधिष्ठानत्व, 'द्वा सुपर्णा सयुजा सखाया' इति श्रुतिबलाच्च

सर्वस्यापि वस्तुनश्चेतनद्वयाधिष्ठितत्वमप्यस्ती'ति विशे

अतोऽन्यादृशशरीरलक्षणनिर्वचनं शास्त्रीयशरीरात्मभावरूप . . . त्यागेनान्यथा समानाधिकरणवाक्यनिर्वहणं च प्राचीनसंप्रदायापरिज्ञानमूलमेव न केवलम्, परमप्राचीनकुमारिलभट्टदर्शित एष पन्थाः 'व्यवहारे भट्टनय' इति वदद्भिरपि भवद्भिर्न परिशीलितः । किं तु समाद्रियमाणानामस्माकमुपरि 'नवीनमिदं कल्पन'मिति निष्फलं दूषणमर्पणाय प्रयत्यत इति इतःपरं वा भवन्तो विवेचयितुमर्हन्ति । अतो जीवपरमात्मयाथात्म्यविज्ञानवैधर्म्यविधुरैरपि दुष्प्रधर्षोऽयं प्रपञ्चपरमात्मनोः शरीरशरीरिभावः ।

'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।

नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ॥'

इति श्लोके अस्तिशब्दनास्तिशब्दाभ्यां क्रमेण चिदचितावुच्येते । अस्य नास्त्यात्मकत्वे को हेतुरित्यत्र ।

'ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।

ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥'

इत्यादिश्लोकारम्भ इति श्रीभाष्ये दर्शितम् । यत्त्विहोक्तम्—

सर्वत्रोत्तरवाक्योपात्तो हेतुर्विधेयांशं प्रत्येव भवति । नानूद्यमानांशप्रतीतिवाक्यार्थविदो मन्यन्ते । अतोऽनूद्यमाननास्त्यात्मकत्वहेतुपरतयोत्तरवाक्ययोजनं न युक्तमिति (पु. १५९) तत्रोच्यते । आकांक्षितमभिधानीयम् , न त्वनाकांक्षितमित्येव वाक्यविदः । यदि कश्चिदाकांक्षाविशेषोऽनूद्यमानांशोपयोगी पर्यवस्यति । तावताऽनूद्यमानमधिकृत्य न किञ्चिद्वक्तव्यमिति न युक्तं वक्तुम् । प्रकृते च पर्यालोचने विधेयार्थोपरि प्राप्तशङ्कापरिहार एवोत्तरत्र क्रियते । तथा—नन्वस्त्यात्मकं नास्त्यात्मकं च विष्णुरित्युक्तम् । तत्र शरीरात्मभावेन सामानाधिकरण्यनिर्वाहः प्राक्कृतः । न चास्त्यात्मके जगति घटते । यत्तु शशशृङ्गादि नास्त्यात्मकम् , तस्यावास्तवत्वात्

तत्र कथं विष्णोरन्तःप्रवेशनियमनादि । अतः शरीरात्मभावाभावात् सामानाधिकरण्यमयुक्तम् । न चाचिदंशो नास्तिशब्देन गृह्यत इति वाच्यम् । प्रमाणप्रतिपन्ने तत्र नाप्नोति शब्दायोगादित्याशङ्कायामुच्यते ज्ञानस्वरूप इत्यादि ।

अयं भावः—नास्तीत्यनेन शशशृङ्गग्रहणेऽप्यनुपपत्तिः । अचिदंशस्यैव तेन ग्रहणाच्छरीरात्मभाव उपपद्यत एव । कथं स नास्तिशब्दवाच्य इति चेच्छ्रूयताम्–यतोऽभावेऽप्यशरीरकः परमात्मा स्वभावतो ज्ञानात्मकः ज्ञानरूपचेतनान्तर्यामी, न तु स्वभावतो वस्तुभूतः । अत्र वस्तुभूत इत्यत्र चित्प्रत्ययाकारणात् स्वभावतो वस्तुभूतत्वं निषिद्ध्यते । इमे स्वचिद्भेदाः, अतो विज्ञानविजृम्भिताः । विज्ञानशब्दोऽज्ञानपर इति तु विपरीतं व्याख्यानम् । अतो विज्ञानशब्दः सङ्कल्पपरः, उपरि, 'सङ्कल्पतरोः फलानी'त्युक्तेः । अत्र समित्यंकीकारे । जीवस्य देहेन सहैकीकृत्य कल्पनं सङ्कल्पः । स च अहं देवः, अहं मनुष्य इत्यादिः । एतन्मूलकं कर्मात्र विवक्षितम् । यत्त्वयं सङ्कल्पपदार्थोऽप्रसिद्ध(पृ. १६०) इति–तत्रोच्यते–विज्ञानशब्दस्याज्ञानपरत्वं सङ्कल्पपदस्य 'समन्तात्कल्प्यते भेदोऽनेनेति सङ्कल्पोऽविद्या' इत्यज्ञानपरत्वं च किं प्रसिद्धम् । अवयवव्युत्पत्त्या कथञ्चित्कल्पने च भवदभिमताज्ञानपरत्वं विना प्रकारान्तरेणापि नेतुं शक्यमित्यभिप्रायेणास्माभिस्तथाऽर्थो वर्णितः । वस्तुत इह सङ्कल्पपदमत्यन्तप्रसिद्धं भगवत्सङ्कल्परूपार्थ एव सुघटः । जीवकर्मापि शोधने भगवत्सङ्कल्प एव । अतश्च विज्ञानशब्दोऽपि तत्र तत्र तपश्शब्दमायाशब्दादिवत् सृष्ट्युपयोगिसङ्कल्पात्मकं भगवन्निष्ठं ज्ञानमेव ब्रवीतीति निरवद्यम् । अतो भगवत्सङ्कल्पकृता इमे भेदा इति । अनेन श्लोकेनोत्पत्तिमत्त्वमुक्तम् । उत्तरश्लोकेन विनाशित्वमुच्यते—

'यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥'

इति । तथा चादिमध्यपर्यन्तहीनमत्र न किञ्चिदित्युक्त्वा तावता कथं नास्तिशब्दवाच्यत्वमित्यत्राह—

'यद्यान्यथात्र द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ।' इति । यदन्यथात्र याति, तथैव न वर्तते, तत्र तत्त्वं कुतः ? तस्य भावस्तत्त्वम् । पूर्वदृष्टरूपेणैव सद्भावः, तन्नास्तीत्यर्थः । एवमादिभिः श्लोकैः ज्ञानं सततैकरूपं सत्यं वस्तु अस्तिशब्दवाच्यं सदाऽस्तीति प्रतीयमानत्वात्, अन्यत् ज्ञानातिरिक्तमचिद्रूपमसत्यमवस्तु उत्पत्तिविनाशवत् कदाचिन्नास्तीति प्रतीयमानत्वान्नास्तिशब्दवाच्यमित्युपपाद्यत इति सिद्धमेकवाक्यत्वं, नास्तिशब्दविवक्षितार्थग्रहणेन तत्र विष्ण्वात्मकत्वासम्भवशङ्कापरिहारपरत्वादुत्तरसन्दर्भस्य । अत्र प्रकरणे ज्ञानशब्दश्चिदात्मपरः, 'यदस्ति यन्नास्ति च' इत्युक्तिविवरणपरत्वस्य सोपपत्ति स्थापितत्वात् । न तु निर्विशेषज्ञानपरः, अप्रसिद्धत्वात् । विष्णुः, भगवान्, अशेषमूर्तिरित्यादीनि च निर्विशेषत्वबाधकानि । अतः, 'प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता' इत्यनावश्यकविस्तरेणात्रापि ते भाष्यदूषणप्रयासो व्यर्थ एव । यत्तु जगद्रूपकार्यकरणात् नाज्ञानस्यासत्त्वम् । कार्यस्य मिथ्यात्वाच्च तस्य न सत्त्वमिति सदसदनिर्वचनीयत्वं सिद्ध्यतीति—तन्न—अज्ञानस्यैवाज्ञानुक्तत्वात्, कार्यमिथ्यात्वस्याभावाच्च । अज्ञानप्रतिपादनाङ्गीकारेऽपि कार्यकरणात् जगतो नास्तित्वाच्च तस्य सदसत्त्वमेव प्रतीयेत, नानिर्वचनीयत्वम् । असत्यादिशब्दवाच्यत्वं जगतः उत्पत्तिविनाशशालित्वप्रयुक्तमिति पुराणेषु मुक्तकण्ठं कथयत्सु मिथ्यात्वाभ्युपगमनं निर्मूलमेव । अतो भवदभिमतमज्ञानमप्रामाणिकमेव ।

एवं निवर्तकानुपपत्तिश्च । निर्विशेषब्रह्मज्ञानं नाविद्यानिवर्तकम् । न हि धर्मिमात्रज्ञानेनाज्ञाननिवृत्तिः क्वापि दृष्टा । किं तर्हि ? विशेषधर्मविशिष्टधर्मिज्ञानेनैव । एवं निर्विशेषब्रह्मज्ञानस्य स्वयंप्रकाशब्रह्मतुल्यत्वात् तस्या-

निवर्त्यत्वे इदमस्त्यनिवर्त्यत्वेन । यद्यपि निवर्तकमेतत् वेद्य अविदैव न स्यात्, कुतः भवः ? अथवा अज्ञानान्यथानुपपत्त्या यज्ञादय उपा- सनामेव स्यात् । तदा च ज्ञानमन्तरा तस्यापि निवर्तकत्वं निष्फलं भवि ष्यति । तथा 'तमेव विद्वानमृत इह भवति' इति वाक्ये विशिष्टस्य वेदनस्यैवामृतत्वप्रापकत्ववर्णनाच्च निर्विशेषज्ञानं न मोक्षहेतुः । इदं वेदन परम्परयाऽमृतत्वहेतुरिति चेत्—तत्र मानाभावात्, 'नान्यः पन्था अय नाय विद्यते' इत्युपायान्तरनिषेधाच्च ॥

एवं निवृत्त्यनुपपत्तिरपि । यत्तु—(पु १६८) अविद्यास्वेना- विद्याज्ञाने सति सुखादिषु मिथ्यात्वबुद्धौ सत्यां तद्भावनादार्ढ्येन क्वचिदपि प्रवृत्त्यभावे कर्ममात्रामुक्तिं सिद्ध्यतीति । सेयं प्रक्रिया सर्वमत्यत्ववादिभिः सुखादिषु दुःखभावना विदधद्भिर्नैयायिकादिभिरादृता न भवत्पक्षे घटते, सर्वस्य मिथ्यात्वेन शुक्तिज्ञानेन रजतनिवृत्तिवत् तत्त्वज्ञानेन युगप त्सर्वनिवृत्तेरेव युक्तत्वात् । आस्तामेतत् । अविद्यानिवृत्तिरियमकार्या कार्या वा । आद्ये तत्त्वज्ञानतदभ्यासादि व्यर्थम् । अन्त्ये सा मिथ्या सत्या वा । प्रथमे किमिदं मिथ्यात्वम् ? प्रतीयमानत्वे सति बाध्यमानत्वमिति चेत्—जाताया निवृत्तेः प्रतीतिसद्भावे, तदुपायस्तत्र कर्ता चेति सर्वमा विधिकमङ्गीकार्यमिति कथमविद्यानिवृत्तिः । सत्यत्वपक्षे ॥ द्वैतमेव सिद्धम् ।

अतः सर्वविधानुपपत्तिमये भवदभिमताज्ञाने सप्तविधा अप्यनुपपत्त य सन्तीति सिद्धम् । न चानुपपत्तिमत्त्वमविद्याया भूषणमेव न दूषण मिति वाच्यम् । एवं हि सति बहुविधानुपपत्तिसमरणेन समूपणीयामवि द्यामनुपपत्तिपरिहारप्रयासेन किमिति भवन्तो निकारयन्तीव । युक्तं पुन रनुपपत्तिसहस्रसमर्पणेन प्रतिपादन् भवन्तु । एवं निवृत्त्यनुपपत्त्यादि नानाविधानुपपात्तमानानमनिवर्तमानयमविद्या सर्वदैव ब्रह्म भन्त्स्यतीति व्यर्थो व प्रयास । एवमविद्याया अनुपपन्नत्वे चाध्युत्यर्थत्व च विशदमवगम्यमाने,

समञ्जसे च श्रुतेरर्थान्तरे सम्यगुपपद्यमाने कथमविद्या पुनः पदमाधास्यतीति ।

यत्तु—शिवविष्णुरूपेण भेदोऽप्यौपाधिक इत्युक्त्वा प्रमाणतया श्रीविष्णुपुराणवचनमुपात्तम्—'शङ्करो भगवान् शौरिः श्रीश्च गौरी द्विजोत्तम' इति—तन्न श्रीशौरिरूपवस्तुद्वयसाधकत्वान्नाद्वैतपरम् । किञ्चात्र—

'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥'

इति जगन्मातापित्रोरुभयोरपि सर्वान्तर्यामित्वमुक्त्वा तदुपपादनाय नियम्यविभूतीनां परिगणने प्रवृत्य, 'अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः' इत्यारभ्य—, 'इच्छा श्रीर्भगवान् कामः यज्ञोऽसौ दक्षिणा तु सा । .... .... शङ्करो भगवान् विष्णुर्गौरी लक्ष्मीर्द्विजोत्तम । .... ....तृष्णा लक्ष्मीर्जगत्स्वामी लोभो नारायणः परः' इत्याद्यभिधाय, 'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ।' इति सर्वान्तर्यामित्वं निगमितमिति विष्णुना वस्त्वन्तराणां यादृशस्सम्बन्धः स एव शङ्करस्यापि विष्णुनेति विस्पष्टमेवात्र निरूप्यमाणे इतरवैलक्षण्येन शङ्करस्य परं विष्ण्वभेदवर्णनविषयं न कथञ्चिदपि वचनमिदं साधकमिति विचिन्त्य सम्यक्सन्दर्भविमर्शेनार्थनिर्णयः क्रियताम् । एवमुपरिष्टादुक्तं सर्वमप्यधस्तादुपपादितया प्रक्रिययैव व्युदस्तमिति कृतं पिष्टपेषणेन ।

यत्पुनरुपोद्घाते, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतयो ब्रह्मविद्यानन्तरं सद्य एव मोक्षं दर्शयन्त्यः मध्ये कार्यान्तरं वारयन्तीति श्रीशङ्कराचार्यमतमिति—तत्र भगवद्रामानुजसिद्धान्तोऽपि स एवेति ब्रूमः । एतन्मते ब्रह्मविद्यानिष्पत्त्यनन्तरं मोक्षार्थं कर्तव्याभावात् । अत्र ब्रह्म वेदेति वेदनं वाक्यार्थज्ञानमात्रम्, न त्वन्तिमप्रत्ययावध्यावृत्तब्रह्मोपासनमिति चेत्—तत्रैव न प्रमाणम् । सामान्यविशेषशास्त्रपर्यालोचनेन तादृशोपासनपर्यवसानस्यान्यत्र व्यक्तत्वात् ।

यदपि तत्रैव ; "मायावादाश्रयणानाश्रयणयोः कतरच्छ्रेय इति सन्दिहानः यावत्तत्त्वबुभुत्सुरभूवम् ; तावत् पुरः स्फुरन्त्या, 'मोक्षप्राप्तये कर्तव्यलेशस्यापि नावसर' इति प्रदर्शयन्त्या, 'नास्त्यकृतः कृतेन' इति श्रुत्यैव सम्बोधितः, यत, प्रपञ्चस्य परमार्थत्वे तन्निवृत्तये किञ्चित् कर्तव्यमापतितं भवेत् । अतस्तस्यापारमार्थ्यमेवेति" इत्युक्तम्—तत्र ब्रूमः । न किञ्चित् कर्तव्यं निःप्रमुक्तत्वादिति यदि, तर्हि मन्थमथनं, तत्त्वोपदेशः, श्रवणमनननिदिध्यासनादि, श्रुतिरूपब्रह्मसाक्षात्कारोत्पादनप्रयासश्च किमर्थं क्रियते । 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तद्'इति श्रवणाद्वाक्यार्थज्ञानादिकेऽपि हि न तत्प्राप्तिस्संभवति । श्रुतिज्ञानस्याध्रुवत्वात् । 'प्रतिबन्धकाविद्यानिवृत्तिरेव तावत्प्रयाससाध्या, न तु अकृतं ब्रह्मे'ति चेत्—तर्हि सम्भवेऽपि स्वाभाविकाष्टगुण आत्मा तदनुभाव्यं ब्रह्म च न साध्यम्, किं तु प्रतिबन्धककर्मनिवृत्तिरेवोपासनया क्रियत इति तुल्यमेतत् । यदि च मोक्षार्थं किमपि न कर्तव्यम्, मतान्तराहतमुपासनादिकं च मोक्षातिरिक्तफलप्रदमेवेति निर्णयः, तर्हि स्वर्गाद्यर्थयागादिवत् उपासनादिकमपि भवतीति तदनुष्ठानेऽपि वस्तुतस्तस्य मिथ्यात्वेनाननुष्ठानस्य स्थितत्वात्, मोक्षार्थं कस्याप्यकर्तव्यतया ईदृशानुष्ठाननिषेधकर्तव्यताया अप्यसम्भवेन एतन्निषेधकर्तुरिव एतदनुष्ठानपरस्यापि नित्यसिद्धमोक्षो न मात्रयाऽपि हीयते । यदि च न किञ्चित्कर्तव्यमिति श्रुतेराशयः, तर्हि तदुपर्येव, 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दिति किमित्यभिगमनं विदधाति । तस्मात् पूर्वापरसन्दर्भपरिशीलनेन, 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दित्यस्यार्थो वर्णनीयः । एवम्—कर्मसम्पादितान् लोकान् अल्पास्थिरत्वेन कर्ममीमांसया परीक्ष्य, अकृतः अनादिनिधनः परमपुरुषः कृतेन न लभ्यत इति निर्वेदमायात्—अत्र कृतेनेति भावे क्तप्रत्ययः, क्रियया कर्मणेति यावत् । एवं अध्रुवफलसाधनत्वादध्रुवशब्द-

समञ्जसे च श्रुतेरर्थान्तरे सम्यगुपपद्यमाने कथमविद्या पुनः पदमाधार्य ?

यत्तु–शिवविष्णुरूपो भेदोऽप्यौपाधिक इत्युक्त्वा प्रमाणं विष्णुपुराणवचनमुपात्तम्–'शङ्करो भगवान् शौरिः श्रीश्च गौरी द्वि' इति–तन्न श्रीशौरिरूपवस्तुद्वयसाधकत्वान्नाद्वैतपरम् । किञ्चात्र—

'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥'

इति जगन्मातापित्रोरुभयोरपि सर्वान्तर्यामित्वमुक्त्वा तदुपपादनाय नित्य-विभूतीनां परिगणने प्रवृत्त्य, 'अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः' इत्यारभ्य—, 'इच्छा श्रीर्भगवान् कामः यज्ञोऽसौ दक्षिणा तु सा । .... शङ्करो भगवान् विष्णुर्गौरी लक्ष्मीर्द्विजोत्तम । .... ....तुष्टि लक्ष्मीर्जगत्स्वामी लोभो नारायणः परः' इत्याद्यभिधाय, 'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्' इति सर्वान्तर्यामित्वं निगमितमिति विष्णुना वस्त्वन्तराणां यादृशस्सम्बन्धः स एव शङ्करस्यापि विष्णुनेति विस्पष्टमेवात्र निरूप्यमाणे इतरवैलक्षण्येन शङ्करस्य पर विष्ण्वभेदवर्णनविषये न कथञ्चिदपि वचनमिदं साधकमिति विचिन्त्य सम्यक्सन्दर्भविमर्शेनार्थनिर्णयः क्रियताम् । एवमुपरिष्टादुक्त सर्वमप्ययस्तादुपपादितया प्रक्रिययैव व्युदस्तमिति कृतं विष्टपेषणेन ।

यत्पुनरुपोद्घाते, 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतयो ब्रह्मविद्यानन्तरं सद्य एव मोक्षं दर्शयन्त्यः मध्ये कार्यान्तर वारयन्तीति श्रीशङ्कराचार्यमत-मिति–तत्र भगवद्रामानुजसिद्धान्तोऽपि स एवेति ब्रूम । एतन्मते ब्रह्म-विद्यानिष्पत्त्यनन्तर मोक्षार्थं कर्तव्याभावात् । अत्र ब्रह्म वेदेति वेदनं वा-क्यार्थज्ञनमात्रम्, न त्वन्तिमप्रत्ययावच्छिन्नब्रह्मोपासनमिति चेत्—तत्रैव न प्रमाणम् । सामान्यविशेषशास्त्रपर्यालोचनेन तादृशोपासनपर्यवसानस्या-न्यत्र व्यक्तत्वात् ।

यदपि तत्रैव ; "मायावादाश्रयणानाश्रयणयोः कतरच्छ्रेय इति सन्दिहानः यावत्तत्त्वबुभुत्सुरभूवम् ; तावत् पुरः स्फुरन्त्या, 'मोक्षप्राप्तये कर्तव्यलेशस्यापि नावसर' इति प्रदर्शयन्त्या, 'नास्त्यकृतः कृतेन' इति श्रुत्यैव सम्बोधितः, यत्, प्रपञ्चस्य परमार्थत्वे तन्निवृत्तये किञ्चित् कर्तव्यमापतितं भवेत् । अतस्तस्यापारमार्थ्यमेवेति" इत्युक्तम्—तत्र ब्रूमः । न किञ्चित् कर्तव्यं नित्यमुक्तत्वादिति यदि, तर्हि ग्रन्थप्रणयनं, तत्त्वोपदेशः, श्रवणमनननिदिध्यासनादि, वृत्तिरूपब्रह्मसाक्षात्कारोत्पादनप्रयासश्च किमर्थं क्रियते । 'न ह्यध्रुवैः प्राप्यते हि ध्रुवं तदि'ति श्रवणाद्वाक्यार्थज्ञानादितोऽपि हि न तत्प्राप्तिसंभवति । वृत्तिज्ञानस्याध्रुवत्वात् । 'प्रतिबन्धकाविद्यानिवृत्तिरेव तावत्प्रयाससाध्या, न तु अकृतं ब्रह्मे'ति चेत्—तर्ह्यस्मन्मतेऽपि स्वाभाविकाष्टगुण आत्मा तदनुभाव्यं ब्रह्म च न साध्यम्, किं तु प्रतिबन्धककर्मनिवृत्तिरेवोपासनया क्रियत इति तुल्यमेतत् । यदि च मोक्षार्थं किमपि न कर्तव्यम्, मतान्तराहतमुपासनादिकं च मोक्षातिरिक्तफलप्रदमेवेति निर्णयः, तर्हि स्वर्गार्थयागादिवत् उपासनादिकमपि भवतीति तदनुष्ठानेऽपि वस्तुतस्तस्य मिथ्यात्वेनाननुष्ठानस्य स्थितत्वात्, मोक्षार्थं कस्याप्यकर्तव्यतया ईदृशानुष्ठाननिषेधकर्तव्यताया अप्यसम्भवेन एतन्निषेधकर्तुरिव एतदनुष्ठानपरस्यापि नित्यसिद्धमोक्षो न मात्रयाऽपि हीयते । यदि च न किञ्चित्कर्तव्यमिति श्रुतेराशयः, तर्हि तदुपर्येव, 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दिति किमित्यभिगमनं विदधाति । तस्मात् पूर्वापरसन्दर्भपरिशीलनेन, 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छे'दित्यस्यार्थो वर्णनीयः । स एवम्—कर्मसम्पादितान् लोकान् अल्पास्थिरत्वेन कर्ममीमांसया परीक्ष्य, अकृतः अनादिनिधनः परमपुरुषः कृतेन न लभ्यत इति निर्वेदमायात्—अत्र कृतेनेति भावे क्तप्रत्ययः, क्रियया कर्मणेति यावत् । एवं अध्रुवफलसाधनत्वादध्रुवशब्द-

वाच्येन क्रियारूपतया कृतकफलसाधनतया वा कृतशब्दवाच्येन च कर्मणा ध्रुवमकृतं च तत् परं ब्रह्म न प्राप्यत इति निर्विद्य अध्ययनजनिताऽऽपातप्रतीतिगोचरब्रह्मविषयविशदज्ञानाय गुरुमुपसम्पद्येतेति । अतोऽन्यथैव समञ्जसार्थत्वात् 'नास्त्यकृतः कृतेने'ति वाक्यस्य, न प्रत्यक्षानुमानाद्यबाधितं जगदपारमार्थ्यं केवलमेतद्वाक्यव्यञ्जितमिति कृत्वा स्वीकर्तुं युक्तमिति ।

तस्मान्न निर्विशेषं ब्रह्म, न वा भावरूपमन्यादृशमज्ञानं, न वा जगन्मिथ्येति — श्रियः पतिरखिलहेयप्रत्यनीककल्याणगुणगणनिधिः प्रकृतिपुरुषान्तर्यामी भक्तिप्रपत्तिलभ्यः परमपुरुषार्थभूतं परं तत्त्वमिति श्रीमद्भगवद्रामानुजयतिराजस्थापितश्चायमर्थ एव स्वरसहृदयविवेकिलोकहृदयसर्वक्षेमङ्कर इति सुधियस्सहृदयं परिशीलयन्ति । अतश्च श्रीशङ्कराचार्यतदनुयायिपरिकल्पिते प्रपञ्चमिथ्यात्वे, अन्ततः केवलदुःखाभावात्मकनिर्गुणब्रह्ममात्रपरिशेषकल्पनया वास्तवसुखनिरसनादसुखात्मिकायां मुक्तौ चानुपपत्तिमनेकप्रकारामभिलक्ष्य, विशिष्टाद्वैत शुद्धाद्वैतादि सर्वथ वैष्णवसिद्धान्तप्रवर्तकपरमाचार्यप्रभृति परमास्तिकसङ्घसन्दर्शितप्रक्रियागते प्रमाणतर्के परमार्थं विदन्तः, श्रीमतो भगवतो विष्णोरनवमहेणानुग्रहेण तमेव भजन्तस्तमेव प्राप्नुवन्तो निरन्तरं तमेव परिचरन्तस्तेन विहरन्तः परमानन्दसम्पदा स्वात्मानं धन्यंयमेत्यध्यवस्यन्तु सर्वे तदुचितमाचरन्त्वस्मिन्निति सादरमावेद्यते ।

पद्यैर्द्वितीयखण्डस्थैः प्रतिपाद्यार्थसङ्ग्रहे ।
'अथातो भाष्यसिद्धान्तसारश्च' इहेरितः ॥
शङ्कापाभिनिवेशानामयथार्थग्रहशान्तये ।
प्रणीतेयं मया भाष्यपरमार्थप्रकाशिका ॥

अशेषज्ञानामप्यधिकगहनं सद्गुरुकृत
क एष श्रीभाष्यं प्रगुणमधिगन्तुं तदपि यत् ।
प्रसादान्याचक्षाय स्वयमभिनिविश्याद्यमते
चिलिख्यैव प्राचीकशदिह एतोऽय प्रनिधिधि ॥

# शोधनम् ॥

| पृ० | पङ्क्ति | शुद्धम् | पृ० | पङ्क्ति | शुद्धम् |
|---|---|---|---|---|---|
| १२ | १५ | मिद्धकत्करेण | १५२ | १६ | सर्वं शून्य |
| १७ | २३ | णान्यतम | ,, | १७ | तीर्थिधाम |
| २४ | ५ | मेन अप्रमेय | १६२ | ६ | त्वेः। |
| ५० | ६ | पङ्क्त्य | १६४ | ११ | मानवस्त्वानि |
| ,, | १५ | न्यपूर्व्याणि | १७० | १६ | मौपाधिको |
| ६२ | ४ | व्यापारानन्तर | १७२ | २, ४ | क्लिष्ट |
| ,, | २२ | दशायामवोधे | १७४ | ९ | ज्ञातमिति । पूर्व |
| ८३ | ९ | ब्रह्माभिन्न | ,, | ११ | ज्ञानम्, अपरि |
| ,, | १७ | साक्षिकमिति | १८१ | १५ | लाघवात् इतर |
| ८४ | २१ | प्रज्वाल | ,, | २२ | दिति---तत्र |
| १०६ | १५ | तत्त्व नाशि | १८२ | ९ | टर्थानि समदर्थ |
| १११ | २ | मार्थ्यं एवम | १८३ | १२ | पयसम्बन्धश्च |
| ,, | २४ | तद्ग्रहण | १९५ | ४ | नत्र आ |
| ११९ | १५ | प्राह्यस्य नाश | ,, | १५ | भवति विरु |
| १२१ | १७ | परात्मन्य | ,, | २२ | क्लिष्ट |
| १२२ | ८ | | १९९ | ७ | तथासाक |
| १२२ | २१ | तार्किक | २०२ | २४ | चोदित न |
| १२३ | २ | परात्मा | २०३ | २० | स्मृतेन |
| १२४ | ६ | परात्मन्नुपकारो | २११ | १ | चतुर |
| १२६ | ४, ५ | निर्मोकेण | २१६ | १० | नोपधि वा |
| १२८ | १२ | दुःखनिवृत्ति | २१७ | २२ | अविनश्यत्त्वम् |
| १३३ | २ | माश्रय वाडि | २२४ | ३ | पूर्वोत्र |
| १४३ | २४ | प्रतीयन्ते | ,, | ४ | न केवलं प्रम |
| १४७ | १७ | दृष्टो नु मनन | | | |